# व्युत्पत्तिवादः

## प्रकाश सहितः-



प्राप्तिस्थानम्

जयकृष्णदास हरिदास गुप्ता.

चौखम्बा संस्कृत सीरिज आफिस

बनारस सीटी।

मूल्यं रूप्यक चतुष्टयम्] [वैक्रमाब्द : १९८८



प्रकाशस्यास्य निर्माता झोपनामकमैथिलः ।

लक्ष्मीनाथाभिधो धीमानधिकारि विराजते ॥

V V P Benares

# भूमिका

शैशवे शाब्दानुशासनपरिशीलनव्युत्पत्तिवैशद्येन सर्वतन्त्रस्वतन्त्रपण्डित कुलपति धर्मदत्तोपाध्याय (बच्चाझा) पदपाथोजानुकम्पासम्पादित न्यायवेदान्त-विद्याविशारदत्वेन मिथिलादेशावयव दरभंगा मण्डलान्तर्गत दाथ (सीमा) ग्राम-निवासिना श्री लक्ष्मीनाथशर्मणा विनिर्मितं व्युत्पत्तिवादस्य व्याख्यानमवलोक्य साम्प्रतम्प्रमोदमनुभवामिनितराम् यदस्मिन् मूलस्य सकलस्य सरलेन शब्देना-र्थोऽभि प्रायस्तु प्रायस्तत्त्वालोकानुयायी सम्यक्प्रकाशितो लसति ग्रन्थग्रन्थयोऽपि श्लथयितुं नावशिष्यन्ते दूरीकृतस्तावद्विकल्पकल्पनाजालप्रसारणाहितः साधा-रणविहस्तताकारकोविस्तारः विजिगीषुमनोरञ्जनीया परिष्कृतिरपि अन्ते निवेशिता अत एवाध्येतृजनानां क्लेशबाहुल्येन विना याथातथ्यतोऽर्था धिगतौ साहाय्यमेतद्वदनदर्शने दर्पण इवार्पयितुमीष्टे ।

यद्यपि विद्यन्तएवैतस्य प्राश्चि प्रचुराणि व्याख्यानानि परन्तु तेषु किञ्चिद-सम्पूर्णं किञ्चिदतिसमासमापन्नं किञ्चिद्विवरणपरायणतया तात्पर्यापर्यवसायि कि-ञ्चिच्च परमविषमाशयाभिधेयपदसमुदयमिति न तादृशेन सन्तोषः समेषाम् एतत्तु तद्वैपरीत्ये निदर्शनतामुपेत्य सर्वथा सकलोपादेयतामासादयितुमर्हतीति ।

बालकृष्णमिश्रः
विश्वविद्यालय :
काशी

# विज्ञप्तिः

अयि सहृदय महानुभावाः

व्युत्पत्तिवादस्यातिगभीरस्य वङ्गदेशालङ्कारैः विद्वत्प्रकाण्डैः गदाधर भट्टाचार्यैःप्रणीत चतुःषष्टिवादान्तर्गतस्यास्य व्याख्यानं यद्यप्यस्मद्गुरुभिः सर्वतन्त्रस्वतन्त्रैः परमकारुणिकैः स्वगृहे निवसद्भिरेव नानादिग्देशागता नन्तेवासिनः स्वविभवैर्भोजनादिव्यवस्थापूर्वकमध्यापयद्भिः दिगन्तविख्याततकीर्त्तिभिः मिथिलादेशावयव दरभङ्गामण्डलान्तर्गत नवानी ग्राम निवासिभिः दरभंङ्गा महाराजाधिराज श्री रमेश्वरसिंह बहादुराणां प्रेमपूर्वकात्यायासेन मुजफ्फरपुर संस्कृत (कालेज) महाविद्यालयाध्यक्ष पदं वर्षैकमात्रं स्वीकुर्वद्भिः बहुतरनिबन्धप्रणेतृभिः सर्वतन्त्रस्वतन्त्र श्री धर्मदत्तापरनामधेयक बच्चाझा महानुभावैः गूढार्थतत्त्वालोकनामकं विरचितमेव । नचान्यद्व्याख्यानं तदीय पद्धतिमध्यारोढुमर्हति तथापि तस्यातिगहनतया विरलपवकश्चित्तस्य याथातथ्यतोऽर्थग्रहणेनोपकृतिभाग्भवतीत्यालोच्य गूढार्थतत्त्वालोकं प्रविविक्षूणामुपकाराय मूलाक्षरार्थप्रतिभानाय च उक्तगुरुचरणसेवनसमुपजातेन ज्ञानलवेन तच्चरणाम्बुजमनुस्मरतो ममापि समारम्भः

यदाचाहं गुर्जरदेशीय सुरतनगरे वल्लभकुलाब्धिकौस्तुभ गोस्वामिवर श्री मगनलालजी महाराजात्मज श्री व्रजरत्नलालजी महाराजान् विद्याविनय सम्पन्नानध्यापयन्नासं तदैव सुरत नगरस्थैः सुहृद्वरैः परोपकारव्यसनिभिः विद्वद्वरैः श्रीयुत मनसुखराम कृष्णशंकर जगन्नाथ त्र्यम्बकराम शास्त्रिभिः प्रोत्साहितेन मया सुरतनगरे प्रकाशस्यास्य बहुतरांशं निर्माय स्वकीयद्रव्यव्ययेन अमदाबाद वसन्तप्रिंटिङ्ग मुद्रणालयाधिपतौ मुद्रणकार्यभारोऽयमारोपितः

अथ सकललोकविस्तारिमहोपकारपरम्परापरवज्ञानामनवद्यानेकविद्याविद्योतमानमानसानां हिन्दूविश्वविद्यालय जीवातु श्रीमन्मदनमोहन मालवीयजी महोदय महानुभावानामादेशेन विश्वविद्यालये वेदान्ताध्यापकपदे नियुक्तः कतिपयेष्वेव समासादितेषु समयेषु बहुतरांशपरिशोधनमिदमीयमात्मनैव समपादयम्

तत्रात्युपयुक्तमपि किञ्चिद्विवेचनं विस्तरादिभयात् प्रकाश प्रकाशनसमये परित्यक्तमावश्यकतां समालोच्य परिशिष्टे सन्निवेशितम्

किंचात्र अप्रतिमप्रतिभाविभासित पण्डित श्री बालकृष्णमिश्रमहाशयानां काशीविश्वविद्यालयवेदान्तप्रधानाध्यापकानामनुकम्पया गदाधरभट्टाचार्य शिष्यहस्तविन्यस्तपुस्तकपरिशोधितं व्युत्पत्तिवादपुस्तकं पश्चादुपलभ्य तदनुसृत्याग्रेपाठं समावेशयम् ।

अत्रच शीशकाक्षरसंयोजकदोषजनिता मद्दोषजनिताश्चाशुद्धयो विद्वद्भिः संशोधनीया इति भूयोऽभ्यर्थयते

लक्ष्मीनाथ शर्मा.

विश्वविद्यालय ः

काशी.



तत्सत्परमात्मने नमः

# व्युत्पत्तिवादः सप्रकाशः

॥ श्रीगणेशायनमः ॥

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते. स च

---

त्रिविधां मूर्तिमाविश्य सृष्टिस्थित्यंतकारिणम्
चन्द्रमौलिमहं वन्दे तिष्ठन्तं हृदयाम्बुजे ॥ १ ॥

मोदयन् मानसं पित्रोः क्रीडयन् बर्हिमूषकौ
विनायको विजयते विघ्नपुञ्जनिवारकः ॥ २ ॥
आसीन्मैथिलपण्डितेन्द्रतिलकोऽपर्णेशपूजारतः
वेदान्तार्णवमज्जताञ्च तरणिर्न्यायेऽपरो गौतमः ॥

सांख्ये वा कपिलस्तथातिविदितो मीमांसयाऽलङ्कृतः
बच्चाझाऽपरनामकोऽतिकरुणः श्रीधर्मदत्तो गुरुः ॥ ३ ॥

स्मृत्वा तच्चरणाम्भोजं लक्ष्मीनाथेन धीमता
व्युत्पत्तिवादटीकेयं प्रकाशाख्या विरच्यते ॥ ४ ॥

अथैकस्मादपि घटादिपदाद् घटादेरुपस्थितावनुपस्थितेऽविवक्षितेवैकत्वे योग्यायामस्तित्वादिक्रियायामुपस्थितायामर्थनिष्ठाकाङ्क्षायोग्यताज्ञानादिघटित-सामग्रीसम्वलनादस्तित्ववान् घट इत्यादि शाब्दबोधस्यार्थाध्याहारवादि प्रभाकरादिसम्मतत्वात् "पश्यतः श्वेतिमारूपं ह्रेषाशब्दश्च शृण्वतः खुरवि-क्षेपशब्दश्च श्वेतोऽश्वोधावतीतिधीः" इति वदद्भिर्भट्टपादैः श्वेतादि बोधकपदा भावेऽपितादृशस्थले "श्वेतोऽश्वोधावतीति" विशिष्टप्रत्ययस्य शाब्दबोधात्मक-स्यैवाङ्गीकृतत्वाच्च चिकीर्षितग्रन्थे पदनिष्ठाकाङ्क्षाज्ञानकारणत्वस्य वक्ष्यमाणस्य-सिद्धान्तविरुद्धत्वमित्याशङ्कां परिजिहीर्षुः प्रथममेव पदद्वयार्थसंसर्गे शाब्द-बोधत्वव्यापकाकाङ्क्षाप्रयोज्यसंसर्गत्वाभिधानेन तत्पक्षं प्रतिक्षिपन् तार्क्किक-तर्कसिद्धं पदनिष्ठाकाङ्क्षाप्रयोज्यसंसर्गत्वं बोधयति. शाब्दबोधेचेति अत्राभिव्या-पकार्थासप्तमी अभिव्यापकत्वश्चावच्छेदकावच्छेदेनवृत्तिमत्त्वम्. तदपि प्रकृत्यर्थ-

तावच्छेदकव्यापकत्वं पर्यवस्यति तस्यच भासूधात्वर्थविषयतायामन्वयः एक-पदार्थे इत्यत्र सप्तम्या अनुयोगित्वम् अपरपदार्थस्येत्यत्रषष्ठ्याः प्रतियो-गित्वम् संसर्गमर्यादाशब्दस्याकाङ्क्षाप्रयोज्यसंसर्गत्वम् तृतीयायाअभेदोऽर्थः तथाचोक्तवाक्यादेकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गआकाङ्क्षा प्रयोज्य-संसर्गत्वाभिन्नशाब्दबुद्धित्वव्यापकविषयतावान् इतिबोधः । अत्रचैकत्वापर-त्वयोः पद एवान्वयः । पदार्थे पदार्थतावच्छेदके वा तदन्वयेत्वेतद्वाक्या-र्थस्य प्रभाकरमतसाधारणत्वापत्त्या तन्मतखण्डन एतद्वाक्यस्वारस्यं न लभ्ये-तेति । नन्वेवं घटघटत्वयोः समवायः शक्तिभास्योऽप्येकत्ववद्यद् घटपदं तदर्थानुयोगिकोऽपरत्ववद्यद्घटपदं तदर्थप्रतियोगिकश्चेति तथाविधसंसर्गा-न्तर्गतः एकत्वापरत्वयोः सर्वसाधारण्यात्तत्रचाकाङ्क्षा प्रयोज्यसांसर्गिकविषयत्वा भावान्नोक्तवाक्यार्थोयुक्त इतिचेन्न । एकपदार्थेऽपरपदार्थस्यसंसर्ग एतत्पर्यन्तस्य हि पदविशिष्टसंसर्गतावान् इत्यर्थः । वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यताकत्वस्वभिन्नपद प्रयोज्यप्रकारताकत्वोभयसम्बन्धेन एवञ्च नैकपदस्यार्थयोः घटघटत्वयोः समवाय-स्यग्रहणमिति नचैव माख्याताथकालकृत्योः संसर्गस्याकाङ्क्षा भास्यस्य संग्रहोनस्या-त्तयोः पदद्वयार्थत्वाभावादितिवाच्यम् तावतापिक्षत्यभावाद् यदिह्येतद्वाक्यालब्धः संसर्ग आकाङ्क्षाज्ञानादिकारणकलापेसत्यपि नैवभासत इति नियमःस्यात् स्याद-यमसंग्रहोदोषाय नत्वेतदस्तीति प्रभाकरादिसम्मताकशाब्दस्थले च स्वसिद्धान्ते मानसप्रत्यक्षस्यैवोपगमान्नानुपपत्तिरिति । नन्वर्थज्ञानार्थमेव पदप्रयोगाद्विनापि पदं प्रमाणान्तरेणोपस्थितार्थस्य प्रकारविधया विशेष्यविधया वा शाब्दबोधे भानं किमितिनाभ्युपेयत इतिचेन्न । पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारण-त्वात् पदानुपस्थितस्य संसर्गातिरिक्तस्य शाब्दबोधेभानासंभवाद् अन्यथा घटा-दिपदज्ञानजन्योपस्थितावेकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीत्यादिरीत्या भासमानस्याकाशस्यापि घटोऽस्तीत्यादि वाक्यजन्यशाब्दबोधे भानप्रसंगः । घटः कर्मत्वमानयनंकृतिरित्यादौ नीलंघट इत्यादौ च तत्तत्पदजन्यतत्तदर्थोप-स्थितौ घटकर्मताकानयनानुकूलकृतेः एवमभेदेननीलविशिष्टघटादेः शाब्दबोध प्रसंगश्चस्याद् । अथ पदनिष्ठाकाङ्क्षाज्ञानस्य हेतुत्वेऽपि तत्पदसमभिव्याहृतापर-पदत्वरूपाकाङ्क्षाया उक्तस्थलेसत्त्वादन्वयबोधापत्तिर्दुर्वारैवेतिचेन्न आनुपूर्वीविशे षरूपाकाङ्क्षाज्ञानत्वेन कारणत्वस्यवक्ष्यमाणतयातदभावादुक्तापत्तेरसंभवात् । न चैवमप्याकाङ्क्षाज्ञानशाब्दबोधयोरव्यवहितोत्तरत्वघटितकार्यकारणभावस्य वक्त-व्यतया तत्तदाकाङ्क्षाविरहस्याकिञ्चित्करत्वादेकपदादपि शाब्दबोधस्याङ्गीकरण-मेवशरणीकरणीयमिति वाच्यम् । सामान्यतः शाब्दबुद्धित्वावच्छिन्नंप्रति पदवि-शिष्टपदत्वरूपाकाङ्क्षाज्ञानस्य कारणताया वक्तव्यत्वाद् वैशिष्ट्यस्यच स्वभिन्नत्व स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वोभयसम्बन्धेन विवक्षितत्वात् तथाच व्याप्यधर्मावच्छिन्नकार्योत्पत्तौ व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षित-तयोक्तसामान्यकारणविरहादेवोक्तस्थले शाब्दबोधासंभवाद् । एतत्कार्यका-रणभावे यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति न्यायोऽप्यनुग्राहको

क्वचिदभेदः क्वचिच्च तदतिरिक्तएवाधाराधेयप्रतियोग्यनुयोगि विषय विषयिभावादिः अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिनाच पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते। यथा नीलो घटो नीलघटमानयेत्यादौ घटादौ नीलादेः। नतु विरुद्धविभक्तिमत्पदार्थस्य। नीलस्यघट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात्। स्वसमानविभक्तिकत्वञ्च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्। साजात्यञ्च विभक्तिविभाजकप्रथमात्वादिना। नतु समानानुपूर्वीकत्वेन। वेदाःप्रमाणम्। शतं ब्राह्मणाः इत्यादावन्वयबोधानुपपत्तेः। ननु

---

बोध्यः। शाब्दबोधे चेत्यत्र चकारोऽनुमित्यादिभ्यो वैलक्षण्यंसूचयति। मङ्गलन्तु ग्रन्थाद्बहिरेवकृतमितिबोध्यम् सचेति आकाङ्क्षाप्रयोज्यसंसर्गतावाँश्चेत्यर्थः भेदाभेदान्वयविषयकत्वेन शाब्दबोधोद्विविधः। भेदशब्दश्चाभेदान्यसम्बन्धेषु पारिभाषिकः। तत्रभेदसम्बन्धानाह आधारेत्यादि भावशब्दस्य द्वन्द्वान्तेश्रूयमाणत्वात्प्रत्येकं सम्बन्धः। तेनाधाराधेयभावादिलाभः। आधाराधेययोर्भावोऽसाधारणधर्मः आधारत्वमाधेयत्वञ्च यद्यप्याधारत्वाधेयत्वयोर्मिलितयोर्न सम्बन्धत्वम् उभयोरेकत्रासत्वान्नापि प्रत्येकमाधेयत्वस्य संसर्गत्वेऽप्याधारत्वस्य संसर्गताया नवीनैरस्वीकृतत्वात्तथापि पक्षपातराहित्येन अर्वाचीनप्राचीनोभयमतानुसारिणीयमुक्तिः। आधारतानिरूपिताधेयत्वादेः संसर्गत्वाभिप्रायेणवा तत्रयथा वह्नित्वावच्छिन्नप्रतियोगितायाः संसर्गत्वे वह्नित्वमवच्छिन्नत्वम्प्रतियोगित्वञ्च त्रियतमेवं संसर्गोभवति। तथाऽऽधारतानिरूपिताधेयत्वस्य संसर्गत्वे आधारत्वमाधेयत्वञ्च संसर्गोभवति। एवमग्रेऽपिबोध्यम्। अत्र च ग्रामंगच्छतीत्यादिस्थले द्वितीयार्थकर्मत्वादौ ग्रामादेराधाराधेयभावः। घटो न पट इत्यादौ प्रतियोग्यनुयोगिभावः। घटं जानातीत्यादौ विषयविषयिभावोबोध्यः। आदिपदात् समवायानुकूलत्वादिपरिग्रहः। तेनचैत्रः पचतीत्यादौ कृतिचैत्रयोः समवायस्य पाककृत्योरनुकूलत्वस्य च नासङ्ग्रहः। एव मन्यत्राप्यूहनीयम् नीलघटमानयेति अत्र प्रथमान्तोदाहरणं परित्यज्य द्वितीयान्त दाहरणं चिन्त्यप्रयोजनकम्। क्वचित्तु नीलंघटमानयेत्यादावित्यसमस्तपदपाठः स च युक्तस्तत्रादिपदात् तृतीयाद्यन्तव्यस्तवाक्यपरिग्रहोनालघट इति समस्तपरिग्रहश्चेति। विरुद्धविभक्तिमदिति समानविभक्तिकभिन्नेत्यर्थः स्वप्रकृतिकेति स्वम्विशेष्यवाचकपदं विभक्तिविभाजकेति विभक्तिविभाजकत्वञ्च विभक्तित्वव्याप्यत्वे सति विभक्तित्वव्याप्याव्याप्यत्वरूपम्। तच्च न प्रथमात्वादौ विभक्तित्वस्य सुप्तिङ्साधारणत्वेन विभक्तित्वव्याप्यीभूतसुप्त्वव्याप्यत्वादतो विभक्तिपदं सुप्परम्। तथाच सुब्विभाजकम् यत्प्रथमात्वद्वितीयात्वादिकं तदन्यतमरूपेण साजात्यम्। सुप्त्वञ्च सुप्पदात्स्वौजसादिर्बोध्यइति पाणिनिसङ्केतसम्बन्धेन सुप्पदत्वमितिबोध्यम् समानानुपूर्वीकत्वेनेति आनुपूर्वीच तत्तद्वर्णोत्तर तत्तद्वर्णत्वरूपातस्याश्च "शोभनौ हरी" इत्यादौ

"विंशत्याद्याः सदैकत्वे" इत्यनुशासनात् शतंब्राह्मणाइत्यादेः साधुत्वेऽपि वेदाः प्रमाणमित्यादयःकथंप्रयोगाः । विशेष्यविशेषणवाचकपदयोरसतिविशेषानुशासनेसमानवचनकत्वनियमात् । अन्यथा घटानील इत्यादेरपि साधुता प्रसंगात् । समानलिङ्गकस्थले तथानियमोपगमेन वेदाःप्रमाणमित्यादेः साधुत्वोपपादनेऽपि "इतिहेतुस्तदुद्भवे" इति कारिकाया इतित्रयः समुदिताहेतुरिति काव्यप्रकाशव्याख्याया असंगतिर्दुर्वारैव एवंसमानलिङ्गकस्थले विशेष्यवाचकपदासमान वचनस्यापिविशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्रविशेषणपदानन्तरं प्रयोक्तुमुचितमिति "प्रत्यक्षानुमानोपमानशब्दाःप्रमाणानि" पितरोदेवताः,

---

न साम्यमतः सुत्वौत्वजस्त्वादिकाम् ङित्वौस्त्वसुप्त्वपर्यन्तान् धर्मानुपादाय स्ववृत्तितावदन्यतमवत्त्वमेव समानानुपूर्वीकत्वमत्रबाध्यम् अन्वयबोधानुपपत्तेरिति यद्यप्यत्रशोभनाभ्यां पटाभ्यामित्यादावेकविभक्तौ तृतीयात्वग्रहेऽपत्र चतुर्थीत्वग्रहेऽप्युक्तसमानानुपूर्वीकत्वसत्त्वादभेदान्वयबोधापत्तिरप्युद्भावयितुमुचिता तथापि यावन्तोदोषाः सम्भवन्तितावन्तोनोद्भावनीया इति न्यायेनैकतरदोषस्यैवोद्भावनीयतयाऽऽपत्त्यपेक्षया प्रबलानुपपत्तिरेवोद्भाविता । वस्तुतोऽत्र समानानुपूर्वीकत्वसत्त्वेऽपिनक्षतिः प्रकृतित्वाद्यज्ञानदशायामपि हि शाब्दबोधस्योदया त्समानविभक्तिकत्वस्य ज्ञानं न हेतुः। एवमसमानविभक्तिकत्वभ्रमदशायां शाब्दबोधस्यानुत्पादात्समानविभक्तिकत्वभ्रमदशायां तदुत्पादाच्च स्वरूपसत्समानविभक्तिकत्वमपि न हेतुः। विरुद्धविभक्तिकत्वज्ञानदशायाञ्च तस्यैव ज्ञानस्य प्रतिबन्धकत्वकल्पनान्नाभेदान्वयबोधः। प्रकृतग्रन्थस्तु अभेदान्वयबोधस्थलप्रदर्शनपरो नतु तेन रूपेण कार्यकारणभावप्रदर्शनपर इतिबोध्यम् समानलिङ्गकेति समानलिङ्गकत्वञ्च स्ववृत्तिपुँल्लिङ्गत्वाद्यन्यतमवत्त्वम् । तत्र यद्यपि पुँल्लिङ्गत्वादिकं लिङ्गयोन्यादिमत्त्वमेव। तदपि ब्राह्मणः ब्राह्मणीत्यादिवाक्यजन्य एव बोधेभासते। नतु घटोऽस्तीत्यादिवाक्यजन्ये । तथाप्यत्र पुँल्लिङ्गत्वादिना सङ्केतितत्वं पदसंस्कारप्रयोजकमेव पुँल्लिङ्गत्वादिकं वाच्यम् न तु तस्यघटादौभानं मानाभावादिति। वैयाकरणास्तु लिङ्गस्यापि प्रातिपदिकार्थत्वं तत्तत्प्रयोगानुमेयसत्त्वादिगुणोपचयादिरूपत्वञ्चाभ्युपेत्य घटाद्यचेतनेऽपि तद्भानमभ्युगच्छन्ति इतिहेतुरिति " शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे " इति काव्यप्रकाशे प्रथमोल्लासे। इतित्रयइति इतिपदेन शक्तेर्निपुणताया अभ्यासस्य च परामर्शः यत्रेत्यादि अत्रवाक्यं यच्छब्दार्थः त्रल्प्रत्ययस्यघटकत्वमर्थः। तस्य विशेष्यवाचकपदेऽन्वयः। वाचकशब्दोबोधकार्थः। उत्तरेत्यस्याव्यवहितोत्तरत्वेनानुसन्धीयमानेत्यर्थः । विभक्तितात्पर्यविषयसंख्याविरुद्धसंख्येत्यस्य विभक्तिजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीय

इत्यादेरनुपपत्तिः। मैवम्। यत्रविशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्या-
विरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः

---

विशेष्यतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नसंख्येत्यर्थः । अविवक्षित-
मित्यत्र विशेषणपदोत्तरविभक्त्येतिशेषः। तत्सहितस्याविवक्षितत्वमित्यस्योक्त
संख्याविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्वि भक्ति
कविशेषणवाचकपदमर्थः तत्रेत्यस्य तद्घटकत्वमर्थः। तस्य विशेष्यविशे-
षण पदयोरन्वयः पदयोरित्यत्र सप्तम्यर्थाधेयत्वस्य नियमशब्दार्थव्याप्तावन्वयः
तथाच यद्वाक्यघटकविशेष्यवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तिजन्यबोधविष-
यत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्न-
भिन्नसंख्यानिष्ठविषयताकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यत्वाभा-
ववद्विभक्तिकंविशेषणवाचकपदंतद्वाक्यघटकविशेष्यविशेषण वाचकपदव्यापकं
समानवचनत्वमित्यर्थः। अत्रचविशेष्यविशेषणपदयोर्व्याप्यत्वंतादात्म्येनबोध्यम्
तथाच नीलोघटइत्यादौ घटपदाव्यवहितोत्तरत्वेनानुसन्धीयमानसुविभक्तिज-
न्यबोधविषयत्वनिष्ठप्रकारतानिरूपिताया एकत्वं सुविभक्तिजन्यबोधविषयो
भवत्वितीच्छीयैकत्वनिष्ठविशेष्यता तदवच्छेदकसंख्यात्वव्याप्यैकत्वत्वावच्छि-
न्नभिन्नद्वित्वादिसंख्यानिष्ठविषयताकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीय वि
शेष्यता साच नीलपदोत्तरसुपदनिष्ठा। नीलपदोत्तरसुपदं द्वित्वादिविषयकबोधं
जनयतु इतीच्छायाअभावात्। एवंसति उक्तविशेष्यत्वाभाववद्विभक्तिकमेव नील
पदम्। अतउक्तवाक्यघटकनीलपदघटपदव्यापकत्वंसमानवचनत्वस्येत्युक्तनियमो-
पपत्तिः। वेदाःप्रमाणमित्यादौ च तथाविधसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नै-
कत्वनिष्ठविषयताकबोधजनकत्वनिष्ठप्रकारतानिरूपितायाः प्रमाणपदोत्तरसुपद-
मेकत्वं बोधयत्वितीच्छीयविशेष्यतायाः प्रमाणपदोत्तरसुपदेसत्त्वात्। यद्वाक्यघटक
यत्पदेनवेदाः प्रमाणमितिवाक्यं न ग्रहीतुंशक्यम्। किन्तु नीलोघट इत्यादिक-
मेव। एवञ्चाग्रिमतद्वाक्यघटकेत्यत्रापि तत्पदेन नीलोघट इत्यादि वाक्यमेव परा-
मर्ष्टुंशक्यते। नतुवेदाःप्रमाणमित्यादिकम्। अतो नात्रसमानवचनत्वमिति।
अत्र लाक्षणिकस्यापि विशेष्यपदस्य संग्रहाय वाचकपदस्य बोधकपरत्वमुक्तम्।
इदं दधीत्यादौ विभक्तेरश्रवणादुत्तरेत्यस्याव्यवहितोत्तरत्वेनानुसन्धीयमानार्थ
कत्वमुक्तम्। विभक्तितात्पर्यविषयसंख्याविरुद्धसंख्येत्यस्यविभक्तिजन्यबोध
विषयकेच्छाविषयसंख्याभिन्नसंख्यार्थकत्वे वेदाः प्रमाणमित्यत्र "जस्पदजन्य
बोधविषयोबहुत्वं सुपदजन्यबोधविषयएकत्वंचभवतु" इति समूहालम्बने-
च्छाविषयैकत्वभिन्नसंख्यायाः प्रमाणपदोत्तरविभक्त्याऽविवक्षितत्वात्समानवच-
नत्वापत्तिरतः सोऽर्थःपरित्यक्त इति। ननूक्तरीत्या विशेष्यविशेषणपदयोः
समानवचनत्वव्याप्यत्वेऽपि वेदाः प्रमाणमित्यादौ समानवचनत्वापत्तिर्दुरुद्धरा।
नहिव्याप्याभावो व्यापकाभावं प्रयोजयतीतिव्याप्यीभूतोक्तविशेष्यविशेषणपद-
योरभावेऽपि व्यापकस्यसमानवचनकत्वस्यसत्त्वेबाधकाभावादितिचेन्न। प्रयोज-

अत एव पुरूरवो माद्रवसौ विश्वेदेवा इत्यादौ द्वित्वविशिष्टयोःपुरूरवोमाद्रवःप्रभृत्यो-

कान्तराभावात्समानवचनत्वे उक्तपदव्याप्यत्वस्यापि विवक्षितत्वेन व्यापकीभूते ये उक्तविशेष्यविशेषणवाचकपदे तयोरसत्त्वात् व्याप्यस्य समानवचनकत्व स्याभावसिद्धेरिति अथैवमपि समानविभक्तिकविशेषणवाचकपदोत्तरविभक्त्या संख्याया अबोधनात् । "अयंघटः शोभनाः पटाः" इति वाक्यघटकविशेष्यवाचकघटपदोत्तरत्वेनानुसन्धीयमानसुविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यात्वव्याप्यैकत्वत्वावच्छिन्नभिन्नबहुत्वनिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिकत्वस्य विशेषणवाचकशोभनपदे सत्त्वात् तत्र घटपदशोभनपदयोः समानवचनत्वापत्तिरितिचेन्न । विशेष्यपदव्याप्यं समानवचनत्वमित्यर्थेतात्पर्यात् विशेष्यपदनिष्ठ व्यापकता च स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारता प्रयोजकत्व स्वाव्यवहितोत्तरत्वेनानुसंधीयमानविभक्तिजन्यबोधविषत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेकसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिकत्वोभयसम्बन्धेन । तत्रप्रथमसम्बन्धनिवेशेन "अयंघटः शोभनाःपटाः" इत्यादौ घटपदप्रयोज्यविशेष्यत्वशोभनपदप्रयोज्यप्रकारत्वयोर्निरूप्यनिरूपकभावविरहान्नघटपदवत्त्वस्यशोभनपदे सत्त्वमितिनतयोःसमानवचनत्वम् । द्वितीयसम्बन्धनिवेशेन "वेदाःप्रमाणम्" इत्यादौनसमानवचनत्वमिति । समानवचनत्वञ्च विभक्तिविशिष्टविभक्तिकत्वम् । वैशिष्ट्यञ्चस्ववृत्तिसुत्वौत्वजस्त्वाद्यन्यतमवत्त्वसम्बन्धेन । इदमत्रबोध्यम् यत्रैकत्वं प्रमाणपदोत्तरसुपदजन्यबोधविषयो भवत्वित्याकारकेच्छा तत्र तद्विशेष्यत्वमेकत्व एववर्तते नतुविभक्तौ। तथाच तथाविधेच्छीयविशेष्यत्वाभाववद्विभक्तिकत्वस्य प्रमाणपदेऽपि सत्त्वात समानवचनत्वापत्तिः । यदिच संख्यानिष्ठविशेष्यतानिरूपितेच्छीयविषयत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठविषयतानिरूपितजन्यत्वनिष्ठविषयतानिरूपितविषयत्वाभाववद्विभक्तिकत्वमित्युच्येततदा यत्र प्रमाणपदोत्तरसुपदमेकत्व विषयकबोधंजनयत्वितीच्छा तत्रोक्तविषयत्वाभाववद्विभक्तिकत्वस्यप्रमाणपदे सत्त्वादुक्तापत्तितादवस्थ्यमित्युभयतःपाशारज्जुरितिचेन्न विशेष्यवाचकपदोत्तरत्वेन नुसन्धीयमानविभक्तिप्रयोजकेच्छीयसंख्यानिष्ठविषयतावच्छेदकधर्मभिन्नधर्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वाभाववद्विभक्तिकत्वस्य विवक्षितत्वात् । उक्तविभक्तिप्रयोजकत्वञ्च संख्यानिष्ठविषयतायां विशेषणम् । इत्थञ्चेच्छायां विभक्तिधर्मिकत्वं संख्याधर्मिकत्वं वाभवतूभयथापिविशेष्यवाचकपदोत्तरविभक्तिप्रयोजकत्वं संख्यानिष्ठविषयतायामस्त्येवेति नानुपपत्तिरिति । उक्तविभक्तिप्रयोजकत्वस्येच्छायांविशेषणत्वे तु वेदाःप्रमाणमित्यादौ पूर्वोक्तरीत्या समूहालम्बनेच्छामादायजस्विशेषणमित्युक्तमितोऽधिकन्त्वस्मद्गुरुकृतगूढार्थतत्त्वालोकेऽन्वेष्टव्यम् अतएवेति

विशेषणतया विवक्षितत्वात् तद्वाचकस्यपदस्यद्विवचनान्तता। वेदाःप्रमाणमित्यत्रच विशेषणपदोत्तरविभक्त्यावहुत्वविरुद्धमेकत्वं विवक्षितम्। तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति। शाब्दप्रमाकरणत्वञ्च शब्दत्वावच्छिन्नंयावच्छब्दनिष्ठमेक

---

उक्तनियमोपगमादेवेत्यर्थः पुरूरव इत्यादि। अत्र "पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा। प्रतिलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम्। तत्पालनायविहिता विश्वेदेवाः स्वयम्भुवा। इष्टिश्राध्धे क्रतुर्दक्षःसत्यो नान्दीमुखेवसुः। नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ। पुरूरवामाद्रवाश्च पार्वणे समुदाहृतौ। इत्यादि-वचनमस्ति। तत्र पुरूरवोमाद्रवसावितिक्वाचित्कंपाठमवलम्ब्यायं ग्रन्थः। क्रतु-दक्षसत्यवसु कालकामधुरिलोचनपुरूरवोमाद्रवसपते विश्वेदेवपदवाच्याः। तत्रे-ष्टिश्राद्धादौ एतेषांसर्वेषां प्राप्तौसत्यामपि द्वौद्वौ प्रधानतया वेदितव्यावित्युक्तवच-नाशयः। इत्थञ्च इष्टिश्राद्धे क्रतुदक्षौ विश्वेदेवाः। नान्दीमुखे सत्यवसू विश्वेदेवाः एवंक्रमेणपार्वणे पुरूरवोमाद्रवसौ विश्वेदेवाः। इति समन्वयोबोध्यः। तत्रक्रतुदक्षावित्यादावेकंपदंतात्पर्यग्राहकमपरञ्चप्रधानतयाबोधनीयक्रतुदक्षादिघ-टितसमुदायेलाक्षणिकम्। तथाच प्रधानतया बोधनीयद्वित्ववत्क्रतुदक्षघटित समुदायप्रकारकेष्टिश्राद्धघटकबहुत्ववद्विश्वेदेवविशेष्यकोऽभेदान्वयबोधः। एवं प्रधानतयाबोधनीयद्वित्ववत्पुरूरवोमाद्रवोघटितसमुदायप्रकारकपार्वणघटकबहुत्व-वद्विश्वेदेवविशेष्यकोऽभेदान्वयबोधः। तत्र द्वयोःप्राधान्योपपत्त्यर्थंद्वित्वं विव-क्षितमितिबोध्यम्। द्वित्वविशिष्टयोरिति न च बहुत्वविशिष्टेषु द्वित्वा-न्वयोविरुद्धः तदुपगमे द्वौ वहवः इत्यादीन्प्रयोगान् परीक्षकाअपिप्रयुञ्जीरन्निति-वाच्यम्। बहुत्वविशिष्ठेसाक्षात्द्वित्वान्वयोविरुद्धोनतुपरम्परयापि। प्रकृते च प्रधानतयाबोधनीयपुरूरवोमाद्रवोघटितसमुदायरूपलक्ष्यार्थघटकपुरूरवोमाद्रवसो-र्द्वित्वमन्वेति बहुत्वञ्च तादृशसमुदायात्मकविश्वेदेवपदार्थे, इति नानुप-पत्तिः। प्रभृतिपदात् क्रतुदक्षौ विश्वेदेवा इत्यादिस्थलीयक्रतुदक्षाद्योः परि-ग्रहः। तत्राप्येषैवरीतिरनुसन्धेया शाब्दप्रमाकरणत्वञ्चेति तच्चप्रमात्वन्यूनवृत्ति-शाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितासाधारणकारणत्वम्। तत्रप्रमात्व-न्यूनवृत्तित्वं न शाब्दत्वस्यविशेषणमुपलक्षणंवा। भ्रमात्मकेऽपि शाब्दबोधे शाब्दत्वस्य सत्त्वात् तस्यप्रमात्वन्यूनवृत्तित्वासम्भवात्। किन्तु शाब्दत्वघटित धर्मस्योपलक्षणम्। एवञ्च प्रमात्वन्यूनवृत्तित्वोपलक्षितंयन्नीलादिप्रकारकघटादि विशेष्यकशाब्दत्वंतदवच्छिन्नकार्यतानिरूपितकारणत्वस्य नीलोघट इत्यादि वाक्येसत्त्वात् तस्यप्रमाणत्वमेवमभिष्टसाधनीभूतयागानुकूलकृतिप्रकारकस्वर्ग कामविशेष्यकशाब्दत्वस्यप्रमात्वन्यूनवृत्तितया तदवच्छिन्नकार्यतानिरूपित कार-णत्वस्य "स्वर्गकामोयजेत" इति वेदवाक्ये सत्वात् एवंवाक्यांतरे-ष्वपि प्रमात्वन्यूनवृत्तितत्तच्छाब्दत्वावच्छिन्नकार्यतानिरूपितकारणत्वस्य सत्त्वात् सर्वेषांवेदवाक्यानां प्रमाणत्वंबोध्यम्। नचैवमुक्तप्रमाकरणत्वस्य प्रतिवाक्यं

मेवेति नायोग्यता। न च पदार्थः पदार्थेनान्वेतीति व्युपत्तिविरोधः। सम्पन्नोव्रीहि रित्यनेकव्रीहितात्पर्यकेऽप्येकवचनदर्शनेन तादृशव्युत्पत्तिसङ्कोचस्यावश्यकत्वात्।

---

भिन्नत्वात् यावच्छब्दनिष्ठमेकमेवेति ग्रन्थासङ्गतिरितिवाच्यम्। शाब्दत्वजाते रेकत्वेनोक्तग्रन्थस्य भाक्तैकत्वपरत्वात्। उक्तशाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणत्वविरहादेव ध्वनिःप्रमाणं घटःकर्मत्वमानयनंकृतिरिति-वाक्यं प्रमाणमित्यादयःप्रयोगा अप्रामाणिकाः यदितु यद्विशेषयोः कार्यकारण-भावस्तत्सामान्ययोरपीतिन्यायात् शाब्दबुद्धित्वावच्छिन्नंप्रति शब्दत्वेनकारण-त्वमभ्युपगम्य यावच्छब्दनिष्ठमेकमेवकरणत्वमुक्तग्रन्थाभिप्रेतमिति मन्येत तदा तु घटःकर्मत्वमानयनंकृतिरितिवाक्यं प्रमाणमित्यादाविष्टापत्तिरेव शरणी-करणीयातस्यापि शब्दरूपत्वेनोक्तप्रमाकरणत्वस्यसत्त्वादिति। न चेति एव-मितिशेषः। पदार्थतावच्छेदकेऽपि पदार्थान्तरान्वयोपगम इतितदर्थः इति व्युत्पत्तिविरोध इति इति शब्दस्यात्र संनिहितवाक्यार्थपरत्वम्। उक्तवाक्या-र्थस्यचाभेदेनव्युत्पत्तिपदार्थेन नियमेनसहान्वयः। तथाचोक्तवाक्यार्थात्मक-नियमविरोध इत्यर्थः अथोक्तव्युत्पत्तिनिर्वाहको घटादिपदजन्यशाब्दबोधे घट-त्वाद्यंशइतरपदार्थान्वयवारको विशेष्यतासम्बन्धेनशाब्दबोधे मुख्यविशेष्यता सम्बन्धेनोपस्थितित्वेन कार्यकारणभावोनसम्भवति। पशुपदस्य लोमवल्लाङ्गूला-त्मकपशुत्वविशिष्टेशक्ततया तत्पदजन्यशाब्दबोधस्यविशेष्यतासम्बन्धेनलोमवल्ला-ङ्गूलयोः सत्त्वात् तयोर्जात्यखंडोपाध्यतिरिक्ततया स्वरूपतोभानासंभवेन लोमत्व-लाङ्गूलत्वाभ्यां भानात्। तत्रच मुख्यविशेष्यतासम्बन्धेनोपस्थितेरसत्त्वात्। नवा-मुख्यविशेष्यतासम्बन्धेन शाब्दबोधे मुख्यविशेष्यतासम्बन्धेनोपस्थितित्वेन कार्यकारणभावः। तथासति पशुपदजन्यशाब्दबोधस्योक्तसम्बन्धेन लोमादावजा-यमानत्वात्तदंशे मुख्यविशेष्यतासम्बन्धेनोपस्थित्यनपेक्षणादुक्तदोषवारणेऽपि दीर्घःपशुरित्यादिवाक्याल्लोमाद्यंशेदीर्घादिरूपेतरपदार्थविगाहिनः शाब्दबोधस्या पत्तेः। तथान्वयेऽपि तदंशे मुख्यविशेष्यतासम्बन्धेन शाब्दबोधस्यासत्त्वात्। तत्रमुख्यविशेष्यतासम्बन्धेनोपस्थितेरनपेक्षणादिति चेन्मैवम्। विशेष्यताविशि-ष्ट विशेष्यतासम्बन्धेन शाब्दबोधे हि मुख्यविशेष्यतासम्बन्धेनोपस्थितिर्हेतुः वैशिष्ट्यञ्च स्वतादात्म्यस्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्य विषयतानिरूपितत्वोभयसम्बन्धेन। तथाच नीलोघट इत्यादिवाक्यजन्यशाब्द-बोधस्थले घटनिष्ठविशेष्यतयास्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितघटत्व-निष्ठविषयत्वाप्रयोज्यनीलादिविषयतानिरूपितत्वस्वतादात्म्योभयसम्बन्धेनवि-शिष्टा घटनिष्ठविशेष्यता अस्ति च तेनसम्बन्धेनशाब्दबोधोघटे तत्र मुख्यविशेष्यतासम्बन्धेनोपस्थितिरपीति नानुपपत्तिः। एवञ्चलो मादौ यदी-तरपदार्थान्वयबोधः स्यात्तदोक्तविषयत्वाप्रयोज्यायेतरपदार्थनिष्ठविषयता त-न्निरूपितत्वस्वतादात्म्योभयसम्बन्धेन लोमनिष्ठविशेष्यताविशिष्टविशेष्यता सम्बन्धेन शाब्दबोधस्य लोम्निसत्त्वंस्यात्। तत्र मुख्यविशेष्यता सम्बन्धेनोप-

यदि चस्वाश्रय प्रकृत्यर्थतावच्छेदकत्वत्वसम्बन्धेन प्रकृत्यर्थं एवैकत्वान्वयः व्रीहि-त्वजातेः स्वरूपतएव व्रीह्यादिपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदकरूपेणानु-पस्थितेस्तत्र पदार्थान्तरस्यान्वयानुपपत्तेरिति मन्यते तदाप्रकृतेऽपीदृश्येवगतिः ।

---

स्थितेरेवासत्त्वान्नलोमाद्यंशेऽपरपदार्थान्वयबोधः । इदञ्चद्वितीयसम्बन्धस्यफ-लम् । स्वतादात्म्यानुक्तौ च घटादिनिष्ठविशेष्यतायाः स्वप्रयोजकवृत्ति-ज्ञानीय विषयतानिरूपितविषयत्वाप्रयोज्यलोमत्वादिनिष्ठविषयतानिरूपितत्व-सम्बन्धेन वैशिष्ट्यस्य लोमादिनिष्ठविशेष्यतायां सत्वात्तादृशविशेष्यतासम्ब-न्धेनशाब्दबोधाधिकरणेलोमादौ मुख्यविशेष्यतासम्बन्धेनोपस्थितेरभावादनु-पपत्तिरतस्तन्निवेशयम् । अधिकन्तु मद्गुरुविरचितगूढार्थतत्त्वालोकेविलोकनी-यम् । मुख्यविशेष्यत्वञ्चैकज्ञानीयसमानाधिकरणविषयतयोरभेदपक्षे प्रकार-त्वभिन्नविशेष्यत्वम् । उक्तविषयतयोरवच्छेद्यावच्छेदकभावपक्षे तु प्रकारत्वान-वच्छिन्नविशेष्यत्वमिति बोध्यम् । ननु सम्पन्नो व्रीहिरितिवाक्यस्य जातावे-कत्वान्वयमन्तरेण न प्रामाण्यंसम्भवति । सम्पन्नत्वस्य बहुत्वसंख्याविशेषत्वे-नैकत्वविशिष्टेव्रीहावन्वयस्यायोग्यत्वादेकत्वस्य तन्न्यूनवृत्तितयातदनुयोगि-तावच्छेदकत्वाभावात् । सङ्ख्याया भासमानसंख्यान्तरानुयोगितावच्छेदकत-यैवभानात् । अन्यथैकोद्वावित्यादिप्रयोगापत्तिः अतउक्तनियमसङ्कोचस्यावश्य-कतया प्रमाणत्वेऽप्येकत्वान्वयोनिराबाधंसिध्यतीत्याशयवानाह सम्पन्नोव्रीहि-रित्यादि॥ एकवचनदर्शनेनेति इदन्तुबोध्यम् सम्पन्नोव्रीहिः सम्पन्नाव्रीहयः इत्यु भयविधप्रयोगस्य " जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् " इति सूत्रनिष्पन्नत्वात् । बहुवचनस्याप्येकत्वमेवार्थः तच्चजातावन्वेतीति स्पष्टी-कृतञ्चैतत्पदवाक्यरत्नाकरे प्रथमायांवचनार्थविवरणे गोकुलनाथोपाध्यायैः व्युत्पत्तिसङ्कोचस्येति यद्यत्पदार्थपदार्थतावच्छेदकयोरन्वयबोधः प्रामाणिकस्त-त्तद्भेदकूटवत्त्वस्यनियमघटकीभूतपदेनिवेशोऽत्र सङ्कोचः। यदिचस्वाश्रयेत्यादि अत्रयदिचेतिविवादप्रदर्शनायोक्तम् । तथाहि आकाशपदात्स्वरूपतउपस्थितस्या-काशस्य शाब्दबोधविषयत्वपक्षेऽन्वयितावच्छेदकरूपेणोपस्थितस्यैवान्वयिनः शा-ब्दबोधेभानमितिनियमस्यैवाभावात् व्रीहित्व एकत्वान्वयेबाधकाभावात् केवलः "पदार्थः पदार्थेनान्वेति " इतिनियमसङ्कोचोदोषः । शब्दाश्रयत्वादिनोपस्थित-स्यैवाकाशस्यशाब्दमतौभानमितिपक्षे समादृतस्यान्वयितावच्छेदकरूपेणोपस्थि-तस्यैवेतिनियमस्य व्रीहित्वएकत्वान्वयपक्षे सङ्कोचः पदार्थैकदेशानन्वयनियमस-ङ्कोचश्चदोषः । स्वाश्रयव्रीहित्वत्वसम्बन्धेनव्रीहावेकत्वान्वयेचविभक्त्यर्थसंख्या-याःपर्याप्तिसम्बन्धेनैवान्वयइतिनियमसङ्कोच उक्तपरम्परायाःसंसर्गत्वकल्पनञ्च-दोषइतिविवदन्तेऽत्रवादिनः।स्वाश्रयेति स्वमेकत्वम् । अन्वयितावच्छेदकरूपेणेति अथान्वयित्वम् भासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारत्व भासमानवैशिष्ट्यानुयो गित्वरूप विशेष्यत्वान्यतररूपमेववाच्यम् । एवञ्चैकत्वस्य भासमानंयत्पर्याप्त्या-

यत्तुसम्पन्नोव्रीहिरित्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकंनाना व्रीहिष्वन्वीयन्ते इत्युक्तयैवसामञ्जस्येजातावेकत्वभानोपगमोनिरर्थकइतितदसत् ॥ यतः

---

ख्यवैशिष्ट्यं तदनुयोगित्वरूपस्यान्वयित्वस्य व्रीहित्वेऽभ्युपगमेसत्येवानुयोगितावच्छेदकःकश्चिद्धर्मोभवितुमर्हति। इत्थञ्चाभ्युपगतेव्रीहित्वएकत्वान्वयेतन्निषेधानुपपत्तिः । अनभ्युपगतेचान्वयितावच्छेदकरूपेणेतिलिखनमसङ्गतमितिचेन्न । अन्वयितावच्छेदकरूपेणेत्यस्यान्वयितावच्छेदकतया सम्भाव्यमानेनेत्यर्थकत्वात्तच्चरूपंव्रीहित्वत्वमिति। अनुपस्थितेरिति व्रीहिपदस्यव्रीहित्वत्वविशिष्टव्रीहित्वाश्रयेलक्षणयातदुपस्थितिसम्भवेऽपि तल्लक्षणायानिरूढत्वाभावादुक्तप्रयोगस्यस्वारसिकत्वानुपपत्तिरितिभावः। इदन्तुबोध्यम् अन्वयितावच्छेदकरूपेणोपस्थितस्यैवशाब्दबोधेभानमितिनियमनिर्वाहको न कार्यकारणभावःकल्पनीयःकिन्तुप्रकारान्तरेणैवायंनियमोलभ्यते । तथाहि शाब्दबोधीयविषयताद्विविधा। वृत्तिज्ञानीयविषयताप्रयोज्या, आकाङ्क्षाप्रयोज्या च। तत्रवृत्तिज्ञानीयविषयताप्रयोज्याया अवच्छिन्नत्वानियमेऽप्याकाङ्क्षाप्रयोज्यायाअपिपारतन्त्र्येणभासमाननिष्ठायाअवच्छिन्नत्वानियमेऽपिच तद्भिन्नायाआकाङ्क्षाप्रयोज्याया अवच्छिन्नत्वनियमः । तत्तद्धर्मावच्छिन्नतत्तत्सम्बन्धावच्छिन्नप्रकारतानिरूपित तत्तद्धर्मावच्छिन्नविशेष्यताकशाब्दबोधंप्रति तत्तदाकाङ्क्षाज्ञानस्यकारणत्वात् एतन्मूलकएवचायन्नियमइति । प्रकृतेऽपीति वेदाःप्रमाणमित्यादावपि । ईदृश्यैवेति यथास्वाश्रयव्रीहित्ववत्त्वसम्बन्धेनव्रीहावेकत्वान्वयात्सम्पन्नोव्रीहिरित्यादौ प्रामाण्योपपत्तिरूपागतिस्तथा स्वाश्रयप्रमाणत्ववत्त्वसम्बन्धेन प्रमाणएकत्वान्वयादत्रापि प्रामाण्योपपत्तिरूपागतिरित्यर्थः । गोकुलनाथोपाध्यायानान्तु पदार्थैकदेशान्वयनियमसङ्कोच एवसम्मतः । उक्तञ्चतैः वेदाःप्रमाणमित्यादौ पदार्थैकदेशे प्रमाणत्वएवतात्पर्यवशादेकवचनार्थस्यान्वयइति जगदीशतर्कालङ्कारैरपि " महाकविर्महाविज्ञःस्तोकनम्रा " इत्यादावेकदेशान्वयएव शब्दशक्तिप्रकाशिकायामुक्तइतिबोध्यम् ॥ अथयद्यप्येकत्वस्यन्यूनवृत्तितयानुयोगितावच्छेदकत्वाभावात्तद्विशिष्टव्रीहौसंपन्नत्वस्य बहुत्वसङ्ख्याविशेषस्यान्वयोनसंभवति तथापिव्रीहिरित्येकवचनादेकत्वत्वरूपेणनानैकत्वोपस्थितिरत्रेत्यस्यैतद्देशविद्यमानत्वमर्थःयत्रतु अत्रेत्यादिपदंनप्रयुक्तम् तत्रतदध्याहारः तथाचैतद्देशविद्यमानव्रीहित्वसहितानांनानैकत्वानामन्यूनानतिप्रसक्ततया तादृशावच्छेदकत्वंसुघटमेवेतियेमन्यन्ते तन्मतंदूषयितुमुपन्यस्यति यत्त्विति ॥ एकवचनोपस्थितानीति यथाघटादिपदात्घटत्वेनरूपेणबहूनांघटानामुपस्थितिःसंभवतितथैकवचनादेकत्वत्वेनरूपेण बहूनामेकत्वानामुपस्थितिःसंभवतीतिभावः॥ अथोपस्थितिशाब्दबोधयोःसमानविषयकत्वेनकार्यकारणभावे यद्विषयकानुभवःपूर्वंनजातस्तस्यापूर्वस्यघटादेरुपस्थितिरेवनसंभवति तद्विषयकोपस्थित्यभावेच तद्विषयकशाब्दबोधोनोत्पद्येत इत्यपूर्वव्यक्तिभानोपपत्तये समानप्रकारकत्वेन स्मृत्यनुभवयोरुपस्थि-

स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपंसजातीयद्वितीयरहितत्वमेकव-
चनार्थः ॥ नत्वेकत्वमात्रम् तस्यवस्तुमात्रसाधारण्येनार्थतएवलाभादनुपयोगाच्च

तिशाब्दबोधयोश्चकार्यकारणभावोऽवश्यमभ्युपेतव्यः तथाचैकत्वत्वप्रकारकशा-
ब्दबोधे एकत्वत्वप्रकारकोपस्थितिरपेक्षणीया तस्याञ्चोपस्थितौविशेष्यतयाकिं-
चिदेकत्वस्यभानेऽपियावन्त्येकत्वानिशाब्दबुद्धौभासन्तेतावतामुपस्थितौभानासंभ
वात् तेषांतत्रभानस्याकिंचित्करत्वाच्च एकवचनोपस्थितानिनानैकत्वानीत्युक्तिर्नि-
रर्थिकेतिचेन्न, समानविषयकत्वेनकार्यकारणभावपक्षाभिप्रायेणोक्तत्वात् अयंहि-
पक्षःसामान्यलक्षणायाः प्रत्यासत्तित्वंविनानोपपद्यते अतएतत्पक्षेसामान्यलक्षणायाः
प्रत्यासत्तित्वस्यावश्यकतयाऽपूर्वत्वेनाभिमतस्यापिसामान्यलक्षणयापूर्वमेवज्ञात-
त्वादपूर्वत्वमेवनास्तीति संसर्गतातिरिक्तविषयतासंबन्धेन शाब्दबोधंप्रतिविषयता-
संबन्धेनोपस्थितेःकारणतया सर्वेषामेकत्वानामुपस्थितेरावश्यकत्वादिति। वस्तुतस्तु
यावतामेकत्वानांशाब्दबुद्धौभानंतावतामुपस्थितिपरोऽयंग्रंथोभवेत् भवेत्तत्रतदुक्ति-
प्रयोजनापेक्षा सएवतुनास्तिकिंतुबहूनामेकत्वानामुपस्थितिःसंभवतीत्यभिप्रायक-
इतिबोध्यम् ॥ नानैकत्वानिप्रत्येकंनानेत्यादि यावन्तोव्रीहयोभासन्ते तावत्सुप्र-
त्येकमेकत्वान्वयइतिभावः । तत्रनानैकत्वानामेकैकव्रीहावन्वयभ्रमवारणायप्रत्ये-
कमित्युक्तम् तथाच तत्तद्व्रीहिषुतत्तदेकत्वान्वयलाभः ॥ स्वसजातीयेति ननु-
स्वपदेनैकत्वस्यपरिग्रहेप्रकृतानुपयोगःप्रकृत्यर्थस्यपरिग्रहेऽग्रेस्वसमभिव्याहृतेत्यत्रा-
पिस्वपदेनसएवपरिगृह्येतोभयत्रैकस्यैवस्वपदबोध्यत्वात्तत्रचप्रकृत्यर्थग्रहणंनसंभव-
ति शब्दधर्मस्यसमभिव्याहृतत्वस्यार्थेऽभावात् कोऽत्रस्वपदार्थ इतिचेन्न प्रकृत्य-
र्थेवर्तमानमेकत्वमुक्तसजातीयद्वितीयरहितत्वमितिसमन्वयस्याभिमतत्वेन प्रकृत्य-
र्थस्यात्रस्वपदार्थत्वात् । अग्रिमंचस्वपदमात्मीयवाचित्वेनप्रकृत्यर्थबोधकपदपर-
मिति । एवंचैकघटवतिगृहादावत्रघटोऽस्तीतिप्रयोगस्थलेऽनुपदवक्ष्यमाणरूपेण-
घटसजातीयः स्वात्मकएवघटस्तन्निष्ठश्चभेदस्तद्वृत्तियदेकत्वंतदवच्छिन्नप्रतियो-
गिताकोनसंभवत्यतस्तदेकत्वमुक्तभेदप्रतियोगितानवच्छेदकत्वविशिष्टमेकवच-
नार्थः घटद्वयादिमतितु स्वसजातीयंघटद्वयादिकमेवेतितयोःपरस्परंतत्तदेकत्व-
वद्भेदसत्वात् तत्प्रतियोगितावच्छेदकमेवैकत्वद्वयादिकमिति घटद्वयादिमति-
अत्रघटोस्तीत्यादिर्नघटे पर्याप्तिसंबन्धेनैकत्वान्वयाभिप्रायेणप्रयोगइति॥ भेदप्रति-
योगितानवच्छेदकेति अथात्रयद्यपि स्वसजातीयनिष्ठभेदप्रतियोगित्वाभावरूपमेवै-
कत्वंवक्तुमुचितम् घटद्वयादिमतितु स्वसजातीयंघटद्वयादिकमेवतत्रपरस्परंतत्त-
द्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैवसत्त्वेनोक्तप्रतियोगित्वाभावासत्त्वान्नात्रघटोऽ-
स्तीतिप्रयोगः नचैकघटस्थलेऽपि स्वसजातीयेस्वात्मकघटेऽपि घटपटोभयंनाय-
मित्यादिप्रतीतिसिद्धोभयत्वाद्यवच्छिन्नप्रतियोगिताकभेदप्रतियोगित्वमेवास्तीत्य-
तोऽवच्छेदकत्वानुसरणमितिवाच्यम् तत्पक्षेऽप्येकत्ववत्पटोभयंनघट इत्यादि-
प्रतीतिसाक्षिकभेदप्रतियोगितावच्छेदकत्वस्यैवैकत्वेसत्त्वादनुपपत्तिरतस्तद्वारणा-

यत्तुसम्पन्नोव्रीहिरित्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकंनाना व्रीहि-ष्वन्वीयन्ते इत्युक्त्यैवसामञ्जस्येजातावेकत्वभानोपगमोनिरर्थकइतितदसत् ॥ यतः

स्वयंवैशिष्ट्यं तदनुयोगित्वरूपस्यान्वयित्वस्य व्रीहित्वेऽभ्युपगमेसत्येवानुयोगितावच्छेदकःकश्चिद्धर्मोभवितुमर्हति। इत्थञ्चाभ्युपगतेव्रीहित्वएकत्वान्वयेतन्निषेधानुपपत्तिः । अनभ्युपगतेचान्वयितावच्छेदकरूपेणेति लिखनमसङ्गतमितिचेन्न । अन्वयितावच्छेदकरूपेणेत्यस्यान्वयितावच्छेदकतया सम्भाव्यमानेनेत्यर्थकत्वात्तद्रूपंव्रीहित्वत्वमिति। अनुपस्थितेरिति व्रीहिपदस्यव्रीहित्वत्वविशिष्टव्रीहित्वाश्रयेलक्षणयातदुपस्थितिसम्भवेऽपि तल्लक्षणायानिरूढत्वाभावादुक्तप्रयोगस्यस्वारसिकत्वानुपपत्तिरितिभावः। इदन्तुबोध्यम् अन्वयितावच्छेदकरूपेणोपस्थितस्यैवशाब्दबोधेभानमितिनियमनिर्वाहको न कार्यकारणभावःकल्पनीयःकिन्तुप्रकारान्तरेणैवायंनियमोलभ्यते । तथाहि शाब्दबोधीयविषयताद्विविधा। वृत्तिज्ञानीयविषयताप्रयोज्या, आकाङ्क्षाप्रयोज्या च। तत्रवृत्तिज्ञानीयविषयताप्रयोज्यायाअवच्छिन्नत्वानियमेऽप्याकाङ्क्षाप्रयोज्यायाअपिपारतन्त्र्येणभासमाननिष्ठायाअवच्छिन्नत्वानियमेऽपिच तद्भिन्नायाआकाङ्क्षाप्रयोज्याया अवच्छिन्नत्वनियमः। तत्तद्धर्मावच्छिन्नतत्तत्सम्बन्धावच्छिन्नप्रकारतानिरूपित तत्तद्धर्मावच्छिन्नविशेष्यताकशाब्दबोधंप्रति तत्तदाकाङ्क्षाज्ञानस्यकारणत्वात् एतन्मूलकएवचायन्नियमइति । प्रकृतेऽपीति वेदाःप्रमाणमित्यादावपि । ईदृश्येवेति यथास्वाश्रयव्रीहित्ववत्त्वसम्बन्धेनव्रीहावेकत्वान्वयात्सम्पन्नोव्रीहिरित्यादौ प्रामाण्योपपत्तिरूपागतिस्तथा स्वाश्रयप्रमाणत्ववत्त्वसम्बन्धेन प्रमाणएकत्वान्वयादत्रापि प्रामाण्योपपत्तिरूपागतिरित्यर्थः । गोकुलनाथोपाध्यायानान्तु पदार्थैकदेशानन्वयनियमसङ्कोच एवसम्मतः । उक्तञ्चतैः वेदाःप्रमाणमित्यादौ पदार्थैकदेशे प्रमाणत्वएवतात्पर्यवशादेकवचनार्थस्यान्वयइति जगदीशतर्कालङ्कारैरपि " महाकविर्महाविज्ञःस्तोकनम्रा " इत्यादावेकदेशान्वयएव शब्दशक्तिप्रकाशिकायामुक्तइतिबोध्यम् ॥ अथयद्यप्येकत्वस्यन्यूनवृत्तितयानुयोगितावच्छेदकत्वाभावात्तद्विशिष्टेव्रीहौसंपन्नत्वस्य बहुत्वसंख्याविशेषस्यान्वयोनसंभवति तथापिव्रीहिरित्येकवचनादेकत्वत्वरूपेणनानैकत्वोपस्थितिरत्रेत्यस्यैतद्देशविद्यमानत्वमर्थःयत्रतु अत्रेत्यादिपदंनप्रयुक्तम् तत्रतदध्याहारः तथाचैतद्देशविद्यमान व्रीहित्वसहितानांनानैकत्वानामन्यूनानतिप्रसक्ततया तादृशावच्छेदकत्वंसुघटमेवेतियेमन्यन्ते तन्मतंदूषयितुमुपन्यस्यति यत्त्विति ॥ एकवचनोपस्थितानीति यथाघटादिपदात् घटत्वेनरूपेणबहूनांघटानामुपस्थितिःसंभवतितथैकवचनादेकत्वत्वेनरूपेण बहूनामेकत्वानामुपस्थितिःसंभवतीतिभावः॥ अथोपस्थितिशाब्दबोधयोःसमानविषयकत्वेनकार्यकारणभावे यद्विषयकानुभवःपूर्वंनजातस्तस्यापूर्वस्यघटादेरुपस्थितिरेवनसंभवति तद्विषयकोपस्थित्यभावेच तद्विषयकशाब्दबोधोनोत्पद्येत इत्यपूर्वव्यक्तिभानोपपत्तये समानप्रकारकत्वेन स्मृत्यनुभवयोरुपस्थि-

स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपंसजातीयद्वितीयरहितत्वमेकवचनार्थः ॥ नत्वेकत्वमात्रम् तस्यवस्तुमात्रसाधारण्येनार्थतएवलाभादनुपयोगाच्च

तिशाब्दबोधयोश्चकार्यकारणभावोऽवश्यमभ्युपेतव्यः तथाचैकत्वत्वप्रकारकशाब्दबोधे एकत्वत्वप्रकारकोपस्थितिरपेक्षणीया तस्याञ्चोपस्थितौविशेष्यतयाकिंचिदेकत्वस्यभानेऽपियावन्त्येकत्वानिशाब्दबुद्धौभासन्तेतावतामुपस्थितौभानासंभवात् तेषांतत्रभानस्याकिंचित्करत्वाच्च एकवचनोपस्थितानिनामैकत्वानीत्युक्तिर्निरर्थिकेतिचेन्न, समानविषयकत्वेनकार्यकारणभावपक्षाभिप्रायेणोक्तत्वात् अयंहिपक्षःसामान्यलक्षणायाः प्रत्यासत्तित्वंविनानोपपद्यते अतएतत्पक्षेसामान्यलक्षणायाः प्रत्यासत्तित्वस्यावश्यकतयाऽपूर्वत्वेनाभिमतस्यापिसामान्यलक्षणयापूर्वमेवज्ञातत्वादपूर्वत्वमेवनास्तीति संसर्गतातिरिक्तविषयतासंबन्धेन शाब्दबोधंप्रतिविषयतासंबन्धेनोपस्थितेःकारणतया सर्वेषामेकत्वानामुपस्थितेरावश्यकत्वादिति। वस्तुतस्तु यावतामेकत्वानांशाब्दबुद्धौभानंतावतामुपस्थितिपरोऽयंग्रंथोभवेत् भवेत्तत्रतदुक्तिप्रयोजनापेक्षा सएवतुनास्तिकिंतुबहूनामेकत्वानामुपस्थितिःसंभवतीत्यभिप्रायकइतिबोध्यम् ॥ नानैकत्वानिप्रत्येकंनानेत्यादि यावन्तोव्रीहयोभासन्ते तावत्सुप्रत्येकमेकत्वान्वयइतिभावः । तत्रनानैकत्वानामेकैकव्रीहावन्वयभ्रमवारणायप्रत्येकमित्युक्तम् तथाच तत्तद्व्रीहिषुतत्तदेकत्वान्वयलाभः ॥ स्वसजातीयेति ननु स्वपदेनैकत्वस्यपरिग्रहेप्रकृतानुपयोगःप्रकृत्यर्थस्यपरिग्रहेऽग्रेस्वसमभिव्याहृतेत्यत्रापिस्वपदेनसएवपरिगृह्येतोभयत्रैकस्यैवस्वपदबोध्यत्वात्तत्रचप्रकृत्यर्थग्रहणंनसंभवति शब्दधर्मस्यसमभिव्याहृतत्वस्यार्थेऽभावात् कोऽत्रस्वपदार्थ इतिचेन्न प्रकृत्यर्थेवर्तमानमेकत्वमुक्तसजातीयद्वितीयरहितत्वमितिसमन्वयस्याभिमतत्वेन प्रकृत्यर्थस्यात्रस्वपदार्थत्वात् । अग्रिमंचस्वपदमात्मीयवाचित्वेनप्रकृत्यर्थबोधकपदपरमिति । एवंचैकघटवतिगृहादावत्रघटोऽस्तीतिप्रयोगस्थलेऽनुपदवक्ष्यमाणरूपेणघटसजातीयः स्वात्मकएवघटस्तन्निष्ठश्चभेदस्तद्वृत्तियदेकत्वंतदवच्छिन्नप्रतियोगिताकोनसंभवत्यतस्तदेकत्वमुक्तभेदप्रतियोगितानवच्छेदकत्वविशिष्टमेकवचनार्थः घटद्वयादिमतितु स्वसजातीयंघटद्वयादिकमेवेतितयोःपरस्परंतत्तदेकत्ववद्भेदसत्वात्. तत्प्रतियोगितावच्छेदकमेवैकत्वद्वयादिकमिति घटद्वयादिमति अत्रघटोस्तीत्यादिर्नघटे पर्याप्तिसंबन्धेनैकत्वान्वयाभिप्रायेणप्रयोगइति॥ भेदप्रतियोगितानवच्छेदकेति अथात्रयद्यपि स्वसजातीयनिष्ठभेदप्रतियोगित्वाभावरूपमेवैकत्वंवक्तुमुचितम् घटद्वयादिमतितु स्वसजातीयंघटद्वयादिकमेवतत्रपरस्परंतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैवसत्वेनोक्तप्रतियोगित्वाभावासत्वान्नात्रघटोऽस्तीतिप्रयोगः नचैकघटस्थलेऽपि स्वसजातीयेस्वात्मकघटेऽपि घटपटोभयंनायमित्यादिप्रतीतिसिद्धोभयत्वाद्यवच्छिन्नप्रतियोगिताकभेदप्रतियोगित्वमेवास्तीत्यतोऽवच्छेदकत्वानुसरणमितिवाच्यम् तत्पक्षेऽप्येकत्ववत्पटोभयंनघट इत्यादिप्रतीतिसाक्षिकभेदप्रतियोगितावच्छेदकत्वस्यैवैकत्वेसत्वादनुपपत्तिरतस्तद्वारणा

अतएवपशुनायजेतेत्यादौपशुनिष्ठतादृशैकत्वस्यविवक्षितत्वादनेकपशुकरणकयागान्नादृष्टसिद्धिः। साजात्यंस्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्ट प्रकृत्यर्थतावच्छेदकवत्त्वरूपेण, अतोऽत्रघटोऽस्तीत्यादौघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धावपिनक्षतिः। एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव-

---

यस्वसजातीयनिष्ठभेदे प्रतियोग्यवृत्तित्वस्य निवेश्यत्वादुक्त प्रतियोगित्वाभावस्यैकत्वरूपत्वपक्षेऽपितन्निवेशेनोक्तोभयभेदमादायदोषाभावस्तथापि "द्व्येकयोर्द्विवचनैकवचने"-इतिशक्तिग्राहकशास्त्रतः संख्यारूपद्वित्वसाहचर्यात्संख्यारूपैकत्वएवैकवचनस्यशक्तिः प्रतीयते, संख्यारूपंचैकत्वंनोक्तप्रतियोगित्वाभावरूपम् किंतुगुणात्मकमतोऽवच्छेदकत्वपर्यन्तानुभावनंकृतमिति, वस्तुतस्तु एकवचनतुल्यार्थैक शब्दशक्तिविचारेशक्तिवादे तादृशप्रतियोगित्वाभावरूपमेवसजातीयद्वितीयरहितत्वमुक्तमिहापित देवोचितमितिबोध्यम्॥ एकत्वमात्रम् उक्तानवच्छेदकत्वविशेषणरहितमेकत्वम्। अर्थतएवलाभादनुपयोगाच्चेति अयमाशयः अत्रघटोऽस्तीत्यादिवाक्यजन्य शाब्दबोधे केवलैकत्वस्याभानेऽपियत्रयत्रपदार्थत्वंतत्रैकत्वमितिव्याप्तिग्रहसंभवात् घट एकत्ववान्पदार्थत्वादित्यनुमानेनशाब्दबोधात्पश्चादपिकेवलैकत्वस्यज्ञानोत्पत्तौक्षतिविरहात्तत्रैकवचनस्यशक्तिस्वीकारोनिर्युक्तिकः अतएव स्वर्गकामोयजेतेत्यादिवाक्यार्थबोधानन्तरमपूर्वंविनायागेस्वर्गसाधनत्वंनोपपद्यत इत्यनुपपत्तिप्रतिसन्धानात्कल्प्यमानेऽप्यपूर्वेलिङादीनांनशक्तिः परंतुप्रकृतेऽत्रघटोस्तीत्यादिवाक्यार्थ बोधोत्तरमेकं घटंशाब्दयामीत्यनुव्यवसायादेकत्वस्यशाब्दबोधे भानमावश्यकम् तत्रचयादृशस्यैकत्वस्यभानेऽनेकव्यावृत्तिर्भवेत्तादृशस्यैवैकत्वस्यभानंसमुचितमतो निरुक्तमेवैकत्वंविवक्षणीयमितिभावः॥ अतएव निरुक्तविशिष्टैकत्वस्यैकवचनार्थ त्वादेव॥ पशुनायजेतेति अस्यप्रयोगस्य "कर्मणः करणसंज्ञासंप्रदानस्य च कर्मसंज्ञा" इत्यनुशासननिष्पन्नत्वात गौणेकर्मत्वकरणत्वेअत्रबोध्ये, तथाचैकपशुनिष्ठंयद्रुद्रनिरूपितंस्वत्वंतद्विषयकोमन्त्रपूर्वकस्त्यागइष्टसाधनमितिवाक्यार्थः॥ तथाचेदंवाक्यमनेकपशुकरणकयागंनविधत्ते, अतउक्तवाक्यलब्धोयागो यदापशुद्वयादिनासंपाद्यतेतदा नासावदृष्टमुत्पादयतीतिभावः॥ स्वसमभिव्याहृतेत्यादि अत्रस्वपदमात्मीयवाचित्वेनस्वबोधकपदपरं तथाचात्रघटोऽस्तीत्यादौ स्वंप्रकृत्यर्थोघटादिस्तद्बोधकघटादिपदसमभिव्याहृतंपदमत्रपदमस्तिपदंच तत्पर्यन्तार्थएतद्देशविद्यमानत्वम् तत्संसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकीभूतघटत्वरूपेणघटसजातीय एकस्यैवघटस्यैतद्देशेवितद्यमानत्वे स्यात्मकएव परस्याऽपि घटस्यविद्यमानत्वेतुपरोऽपीति नानुपपत्तिः। समभिव्याहृतत्वंच-इदंपदमनेनपदेनसहान्वयबोधंजनयत्वितीच्छारूपम् एतदिच्छाविषयत्वम् एतदिच्छयोच्चरितत्वंवा, पदविशिष्टपदत्वंवा, वैशिष्ट्यंचस्वप्रयोज्यविषयतानिरूपितविषयता प्रयोजकत्व स्वभिन्नत्वोभयसंबन्धेन निरूपितत्वंच साक्षात्परंपरासाधारणमितिबोध्यम्। अतइत्यादि उक्तरूपेणसा-

तत्रबोधादिति तस्यचप्रसिद्धत्वात् । एतद्देशेवहुघटसत्त्वदशायांतादृशप्रयोगस्तुजा-
त्येकत्वादेवसमर्थनीयः यत्तु एकत्वाविवक्षायामपिभावाख्यातस्थलेएकवचनस्य-
साधुत्वदर्शनात्संख्याया अविवक्षणेऽपि सम्पन्नोव्रीहिरित्यादावेकवचनोपपत्तेरलं
जात्येकत्वपरतया तत्र समर्थनेनेति । तदप्यकिञ्चित्करंभावाख्यातस्थले गत्यन्तरविर-

---

जात्यप्रवेशादित्यर्थः तथाच यत्र घटसजातीयःस्वात्मकएवघटस्तत्रतन्निष्ठभेदप्रति-
योगितायाअवच्छेदकत्वस्यैकत्वान्तरेसत्त्वेऽपितद्घटवृत्तियदेकत्वंतत्रतदभावइति-
भावः॥ नन्वेवमेतद्देशेवहुघटसत्वेऽत्रघटोऽस्तीत्यादिप्रमाणिकप्रयोगस्यकथमुपपत्तिः
-एकत्वस्योक्तभेदप्रतियोगितावच्छेदकत्वादित्यतआह एतद्देशइति। जात्येकत्वेति
अयंभावः यत्रपर्याप्तिसंबन्धेनप्रकृत्यर्थे-एकत्वान्वयस्तत्रैतादृशैकत्वस्यभानम् यत्रतु-
योग्यताविरहान्नैतादृशैकत्वस्यप्रकृत्यर्थेभानसंभवस्तत्रतु पर्याप्तिसंबन्धेनप्रकृत्यर्थ-
तावच्छेदके स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेनप्रकृत्यर्थेवा केवलस्यैवैकत्वस्य-
भानमिति ॥ एकत्वाविवक्षायामपीति अयमाशयः चैत्रोगच्छतीत्यादौसुब्विभ-
क्तेरेवसङ्ख्याप्रतिपत्तेः अलमाख्यातस्य सङ्ख्यावाचकत्वाङ्गीकारेणेतिवक्तुम-
शक्यम्। तथासति हि "चैत्रोगच्छतश्चैत्रोगच्छन्ति" इत्यादिप्रयोगापत्तिः संख्या-
वाचकत्वाङ्गीकारेचैकत्वावरुद्धेकर्तरिनाख्यातार्थद्वित्वादेरन्वयः सम्भवतीति न
तथाप्रयोगः। तथाचोक्तरीत्याऽऽख्यातस्यसङ्ख्यावाचकत्वेसिद्धे कर्माख्यातस्थले
"चैत्रेणग्रामौगम्येते" इत्यादावेकत्वावरुद्धेकर्तरि द्वित्वान्वयासम्भवात् कर्मण्येव
तदन्वयोवाच्यः। तदुपपत्तये च विशेष्यतासम्बन्धेनाख्यातार्थसङ्ख्याप्रकारका-
न्वयबुद्धिम्प्रति विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्य-
कारणभावोऽङ्गीकर्तव्यः। इत्थञ्च चैत्रेणस्थीयतइत्यादिभावाख्यातस्थले प्रथमान्त-
पदजन्योपस्थितेरभावान्नाख्यातार्थ सङ्ख्यायाअन्वयःसम्भवति। नच भावाख्यात-
स्यसार्थकत्वानुरोधेनभावाख्यातार्थातिरिक्तत्वम्, उक्तकार्यतावच्छेदकघटकाख्याते
विशेषणंदेयम्। तथा च चैत्रे आख्यातार्थैकत्वान्वयेबाधकाभाव इतिवाच्यम्। चैत्र
मैत्राभ्यांस्थीयत इत्यादौ द्वित्वावरुद्धयोश्चैत्रमैत्रयोरेकत्वान्वयासम्भवात्। नापि
धात्वर्थेन सह धात्वर्थबहुत्वेऽपि भावाख्यातस्थलेएकवचनस्यैव साधुत्वेन तत्रैकत्वा-
न्वयासम्भवात्। अन्यथा द्विवचनादेरप्यापत्तिःस्यात्। अतोधात्वर्थेसङ्ख्यान्वये
आख्यातस्यनिराकाङ्क्षत्वमेवाभ्युपेयम् एवञ्चाख्यातमात्रस्य सङ्ख्यावाचकत्वेसि-
द्धेऽपि यथाभावाख्यातस्थलेतदर्थः सङ्ख्यानविवक्ष्यते तथा सुविभक्तेरेकत्ववाचक
त्वेऽपि सम्पन्नोव्रीहिरित्यादावेकत्वं न विवक्ष्यत इति॥ गत्यंतरविरहेणेति अवि-
वक्षातिरिक्तगतिविरहेणेत्यर्थः निरर्थकत्वोपगमादिति सङ्ख्याविषयकवोधतात्प
र्यरहितत्वोपगमादित्यर्थः। तेनोक्तरीत्या कर्त्राऽऽख्यातादिस्थले तेप्रभृतेः संख्याप्र-
त्ययोत्पादात्तादृशानुपूर्वीप्रकारेणोक्तरीत्याऽऽख्यातमात्रस्यैकत्वादिशक्तत्वेन भावा-
ख्यातस्यापितेनरूपेण सङ्ख्यावाचकत्वेऽपि भावाख्यातस्थले कालप्रतिपत्तावपिच-
नक्षतिः। न वा "अर्थबोधस्वरूपयोग्यता प्रयोजकाकाङ्क्षाशालित्वेन तदविवक्षास्थ-

हेणविभक्तेर्निरर्थकत्वोपगमात्। तत्रच सार्थकत्वोपगमसम्भवे तत्परित्यागस्यानुचितत्वात्। सतितात्पर्येतद्बोधस्यानुभविकत्वाच्चेति। एवं त्रयःसमुदिताहेतुरित्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरम्, तादृशसमुदायत्वान्वितमेकत्वमेकवचनार्थः अतएव शक्त्यादीनांत्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः। तथासत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया-

---

लेऽपि भावाख्यातस्यार्थवत्त्वात्'' इत्यग्रिमग्रन्थविरोधः॥ सार्थकत्वोपगमसम्भव इति सङ्ख्यायास्तात्पर्यविषयत्वोपगमसम्भव इत्यर्थः। ननु सम्पन्नव्रीहिमात्रबुबोधयिषया प्रयोक्तव्ये सम्पन्नोव्रीहिरितिवाक्ये न केवलंप्रकृतिः प्रयोक्तव्या नापिकेवलं प्रत्यय इति न्यायेनावर्जनीयतया प्रयोक्तव्यायां विभक्तावौत्सर्गिकत्वात्प्रथमैकवचनमेव प्रयुज्यते। ननु तदर्थोविवक्ष्यते इति व्यर्थएवैकदेशानन्वयनियमभङ्गव्यासङ्ग-इत्यतआह सतितात्पर्ये इति अयम्भावः अविवक्षाहेतुर्द्विविधः। विवक्षणीयस्यासम्भवः, तस्याप्रयोजनत्वज्ञानञ्च, तत्रनैकोऽप्यत्रप्रसरति। जात्यादावेकत्वान्वयस्य योग्यत्वात्। एकमेवव्रीहित्वमेतेषु सम्पत्त्याश्रयेषु व्रीहिषु वर्तत इतिबोधनस्यप्रयोजनस्य सत्त्वाच्चेति। तादृशसमुदायत्वान्वितमिति ननु हेतुपदाच्छक्त्युपस्थापिते हेतुत्वे एकत्वान्वयसम्भवे किमितितंपरित्यज्य समुदायत्वविशिष्टेलक्षणा समुदायत्वे एकत्वान्वयश्चोपेयते। न च शक्तिनिपुणताभ्यासैतत्रितयसाधारणस्यैकस्यहेतुत्वस्याभावान्न तत्रैकत्वान्वयः सम्भवतीति वाच्यम् उक्तानांत्रयाणां शक्तित्वादिप्रत्येकधर्मेणहेतुत्वे समुदिता इत्यस्य वैयर्थ्यप्रसङ्गेनोक्तत्रितयसाधारणसमुदायत्वेनैवहेतुत्वस्यवक्तव्यतयैकधर्मावच्छिन्नहेतुत्वस्याश्रयभेदेऽप्यैक्यादितिचेन्न। स्यादेवं यदिह्युक्तरूपेणत्रयाणां हेतुत्वंस्यात् तदेवनसम्भवति। समुदायत्वस्यैकविशिष्टापरत्वरूपतया त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकारणताबाहुल्यप्रसङ्गात्। किन्तु शक्तित्वेन शक्तेर्निपुणतात्वेन निपुणताया अभ्यासत्वेनाभ्यासस्य च पृथक्पृथगेवकारणत्वंवक्तव्यम्। नचैवमेकैकशः कार्योत्पादप्रसङ्गः। समुदिताइत्यस्य वैयर्थ्यञ्च स्यादितिवाच्यम् घटम्प्रतिदण्डचक्रादेः परस्परसहकारित्वस्येव प्रकृतेऽपि शक्त्यादेः परस्परसहकारित्वस्याभ्युपगमात् त्रयाणां सहकारित्वबोधनार्थमेव हि समुदिता इत्युक्तमतो न तस्य वैय्यर्थ्यमपि। तथाचैकसमुदायत्वाश्रयाणामेव शक्त्यादित्रयाणां काव्योद्भवहेतुत्वमितिबोधनमेकत्वविवक्षायाः प्रयोजनमितिबोध्यम्। अत्र काव्योत्पादप्रयोजकतावच्छेदके तितु समुदायत्वस्य परिचायकम् नतुतेन रूपेणहेतुपदार्थतेति। अतएवेति शक्त्यादीनांत्रयाणां पृथक्हेतुत्वेऽपि परस्परं तेषांसहकारित्वेन त्रितयवृत्त्येकसमुदायत्वस्यप्रयोजकतावच्छेदकत्वादेवेत्यर्थः॥ तृणारणिमणिन्यायेनेति तृणारणिमणीनधिकृत्य प्रवृत्तोन्यायस्तृणारणिमणिन्यायः न्यायोऽत्रयुक्तिः सा च परस्परनैरपेक्ष्येण प्रत्येकधर्मपुरस्कारेण कारणत्वसाधिका न्यायेनेत्यत्र प्रयोज्यत्वंतृतीयार्थस्तस्य हेतुत्वेऽन्वयः तथाचोक्तयुक्तिप्रयोज्यं यदसहकृतानांहेतुत्वं तच्छङ्का-

तत्त्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथा विधैकसमुदायत्वाश्रयत्वानुपपत्तेः। एवं व्यक्त्याकृतिजातयःपदार्थः—इत्यत्रत्रितयनिष्ठस्यपदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचनान्तत्वेऽपि

---

निरास इतिभावः। साचेयंयुक्तिःक्वचित्तृणेन क्वचिदरणिना क्वचिन्मणिना च वह्निर्जन्यते तत्र त्रयाणांतृणत्वादिप्रत्येकधर्मेण कारणत्वे त्रयाणांकारणत्वानां त्रयाणांतदवच्छेदकत्वानाञ्च कल्पनेगौरवेऽपि एकधर्मेणकारणत्वे त्वेकस्यैव कारणत्वस्यैकस्यैव तदवच्छेदकत्वस्य च कल्पनायां लाघवेऽप्यन्यतमत्वेनैकरूपेण तेषां न–कारणत्वं। तथासतिहि सहकारिनियमोनोपपद्येत। तथाहि तृणस्यसहकारी फूत्कारोऽरणेर्मन्थनं मणेस्तरणिकिरणसंयोगः। तदेतत्त्रितयविशिष्टतृणाद्यन्यतमत्वेनैव कारणत्वमभ्याच्यं तथासति तरणिकिरणसंयोगविशिष्टमणिसत्त्वेऽपि दाहोनस्यात्। मणेस्त्रितयवैशिष्ठ्याभावात्। नापिफूत्काराद्यन्यतमविशिष्ठतृणाद्यन्यतमत्वेन तरणिकिरणसंयोगविरहे फूत्कारविशिष्टमणिसत्त्वेऽपि दाहप्रसङ्गात् किंतु सहकारनियमोपपत्त्यर्थं वह्निगतवैजात्यत्रयं कल्पयित्वा तार्णवह्नित्वावच्छिन्नंप्रति तृणत्वेनेत्येवंक्रमेण परस्परनिरपेक्षाणामेव तृणारणिमणीनांहेतुत्वं वाच्यं नतु सहकृतानाम्। फूत्कारादीनां त्रयाणामपि फूत्कारत्वादिप्रत्येकरूपेणैव तार्णवह्नित्वावच्छिन्नंप्रति फूत्कारत्वेनेत्येवं क्रमेण स्वातन्त्र्येणहेतुत्वम्। ननु तार्णवह्नित्वावच्छिन्नंप्रति फूत्कारतृणविशिष्टत्वेनेत्येवंक्रमेणकारणत्वं विनिगमनाविरहे ग तृणविशिष्टफूत्कारत्वादिनाऽपिकारणत्वप्रसक्तौ गुरुधर्मावच्छिन्नकारणताषट्कप्रसङ्गात्। इत्थञ्चतृणफूत्कारयोररणिमन्थनयोर्मणितरणिकिरणसंयोगयोर्द्वयोर्द्वयोः सहकारित्वोपगमान्न तृणादेःफूत्कारादेर्वैकैकस्य सत्त्वे कार्योत्पत्तिप्रसङ्गइति। तथाच यथा सहकारिभावानापन्नानामेव तृणारणिमणीनां तार्णत्वादिवैजात्यविशेषावच्छिन्नं प्रतिकारणत्वं न तथा प्रकृते किंतु शक्त्यादीनांत्रयाणांसहकारित्वस्यावश्यकत्वमेवेतिबोध्यम्। व्यक्त्याकृतिजातयःपदार्थः अध्या.२.आ. २सू.६८ इति गौतमसूत्रमेतत्। अस्यार्थस्तु व्यक्तिर्घटादिः आकृतिः समवायादिसम्बन्धः जातिर्द्रव्यत्वादिकम् एतत्त्रितयमेवपदशक्तिमदिति। तत्रजातिपदेन यस्य शक्यतावच्छेदकत्वाङ्गीकारे आपत्त्यादिविरहः सधर्मोग्राह्यः। अत्र जात्याकृतिव्यक्तयः पदार्थ इतिपाठस्तुप्रामादिकः। तथाविधसूत्रस्यानुपलभ्यमानत्वादिति। पदशक्तिरूपपदार्थत्वस्येति नन्वत्र यदीश्वरेच्छारूपाशक्तिर्विवक्ष्यतेतदा तस्याःसकलपदार्थगोचरायाएकत्वेनैकत्वान्वययोग्यत्वेऽपि व्यक्त्याकृतिजातयः पदार्थ इतिवत् "घट पट मठाःपदार्थ" इत्यपिस्यात्प्रयोगः एकत्ववदिच्छारूपशक्तिविषयत्वस्य सर्वत्र सत्त्वात्। यदिचेश्वरेच्छीय विषयतारूपा शक्तिस्तस्यां चैकत्वान्वयोविवक्ष्यते तदैकत्वाश्रयीभूतोक्तविषयत्वस्य त्रितयसाधारण्याभावाद्व्यक्त्याकृतिजातयः पदार्थः इत्यादिप्रयोगस्याप्रामाण्यापत्तिरितिचेन्न। स्वनिरूपितविशेष्यत्व स्वावच्छेद्यविशेषतानिरूपितावच्छेद्यत्वनिष्ठ-

विशेषणपदस्यैकवचनान्तत्वोपपत्तिः प्रत्यक्षानुमानेत्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्यप्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वात्प्रमाणपदस्यबहुवचनान्ततेति । एवंपितरोदेवता, इत्रत्यत्रापि पितृपितामहादीनां सहिता-

विषयतानिरूपितावच्छेदकत्वनिष्ठविषयतावत्त्वान्यतरसम्बन्धेनेश्वरेच्छीयपदजन्यबोधविषयत्वनिष्ठप्रकारतावत्त्वस्यैव शक्तिपदार्थत्वात् । विषयतावत्ता च स्वनिरूपितविषयतावदाधेयत्वस्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नविषयतावत्त्वान्यतरसम्बन्धेन । घटत्वावच्छेदेन घटपदजन्यबोधविषयत्वमवगाहमानायां घटोघटपदजन्यबोधविषयोभवत्वितीच्छायां घटत्वमपिहि समवायसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसम्बन्धेन विषयतांशे संसर्गविधया भासते । तथा चोक्तबोधविषयत्वनिष्ठायाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकाकारता तन्निरूपितविशेष्यत्वं घटे, उक्तबोधविषयत्वनिष्ठविशेष्यतानिरूपितावच्छेद्यत्वनिष्ठसंसर्गतात्मकविषयतानिरूपिता याऽवच्छेदकत्वनिष्ठ विषयता तन्निरूपितविषयतावधाधेयत्वंघटत्वे, समवायेतूक्तावच्छेदकत्वनिष्ठविषयतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नविषयतास्तीति नानुपपत्तिः । एकज्ञानीयसमानाधिकरणविषयतयोरिव एकेच्छीयसमानाधिकरणविषयतयोरप्यवच्छेद्यावच्छेदकभावादुक्तं स्वावच्छेद्यविशेष्यतेति । नन्वीश्वरेच्छाया ईश्वरेच्छीयोक्तविषयतायावा शक्तिरूपत्वेऽस्मदादिभिर्दुर्ज्ञेयैवशक्तिरिति चेदत्राहुर्वाचस्पतिमिश्रचरणाः "सर्गादिभुवां महर्षिदेवतानामीश्वरेणसाक्षात्कृत सङ्केतस्तद्व्यवहारादस्मदादीनामपि सुग्रहःसङ्केतः" इति अधिकन्त्वन्यत्रानुसन्धेयम् । इत्थञ्चप्रकृते ईश्वरेच्छीयपदजन्यबोधविषयत्वनिष्ठप्रकारतायाऐक्या देकत्वस्ययोग्यतयान्वयोबोध्यः । प्रत्यक्षानुमानोपमानशब्दाःप्रमाणानि, पितरोदेवता इत्यादावुक्ताया अनुपपत्तेः समाधानमाह प्रत्यक्षानुमानेत्यादि । बाधितत्वेनेति प्रत्यक्षादीनांचतुर्णां न चतुष्ट्वेनैकरूपेण प्रमाकरणत्वमेकैकशः कार्यानुत्पादप्रसङ्गाद् नाप्यन्यतमत्वेन सहकारिनियमानुपपत्तेः। किन्तु प्रत्यक्षादिप्रमांप्रतिप्रत्यक्षत्वादिनैवकरणत्वं वाच्यम्। कारणताच अवच्छेदकभेदाद्भिन्नैव। अतोनात्र कारणत्वविशेषरूपकरणत्वेएकत्वान्वयः सम्भवति बाधितत्वादितिभावः ॥ एवमित्यादि यत्कर्माङ्गभूताः पितृपितामहादयः पितरः पितृत्वेनैकरूपेण "पितृभ्यःस्वधा" इत्यादिवाक्येन न निर्दिष्टाः किन्तु पित्रेस्वधा, पितामहायस्वधेत्यादिनाप्रत्येकरूपेणैव तत्रत्योऽयम्प्रयोगः। तत्र च पितृपितामहादौ त्यागोद्देश्यत्वरूपदेवतात्वं भिन्नमेव पितृत्वपितामहत्वादिरूपावच्छेदकभेदेन उद्देश्यताभेदात् । अतस्तत्रैकत्वान्वयस्य बाधितत्वाद्बहुवचनमितिभावः । स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वमिति यदुक्तंपूर्वं तत्र स्वप्रकृतिकत्वं यदि स्वाव्यवहितोत्तरत्वरूपं तदा दधिसुन्दरमित्यादौ दधिपदोत्तरविभक्तेरविद्यमानत्वेन स्वसमानविभक्तिकत्वञ्च स्यादत आह स्वप्रकृति कत्वंचेति । उक्तनियमेति स्वसमानविभक्तिकेन स्वाव्यवहित पूर्ववर्तिना च पदेनोपस्थापितस्यैवाभेदान्वयबोधइतिनियमेत्यर्थः

नामेकरूपेण देवतात्वविरहेण पितृत्वपितामहत्वादिना पृथगेवत्यागोद्देश्यत्वरूपदेवतात्वम् । उद्देश्यतावच्छेदकभेदेनैवोद्देश्यताभेदात् । तत्रैकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेतिदिक् ॥ स्वप्रकृतिकत्वञ्च स्वाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम् । तेनदधिसुन्दरमित्यादौ विशेष्यपदान्तरं विभक्तेरसत्त्वेऽपिनक्षतिः । तत्रविभक्तेरनुसन्धानं विना शाब्दबोधानुपगमात् । एवंताद्दशविभक्तिसजातीयविभक्तिकत्वमपि तथा विधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वम् । तेन 'इदंदधि' इत्यादौविशेषणपदानन्तरं विभक्तेरसत्त्वेऽपिनक्षतिः। अथ''नीलस्यघटः'' इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधान सम्भवात्कथं न नीलघटाद्योरभेदान्वयबोधः । सामग्र्या कार्यजनने उक्तनियमभङ्गप्रसङ्गरूपबाधकस्याकिञ्चित्करत्वादितिचेत्तथाविधान्वयबोधौपयिकाकाङ्क्षाविरहात् । तथाहि ताद्दशान्वयबोधे प्रथमाविभक्त्यन्तघटादिपदसमभिव्याहृत प्रथमान्तनीलादिपदत्वमेवासमस्तनीलघटपदाद्याकाङ्क्षा । समासस्थले च घटपदाव्यवहितपूर्ववर्तिनीलादिपदत्वं नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वंवाऽऽकाङ्क्षा । उक्तस्थले च ताद्दश्याएकस्या

---

अकिञ्चित्करत्वादिति नियमस्य फलानुसारेण कल्पनीयतया नीलस्यघट इत्यादावप्यभेदान्वयबोधजनने तदनुसारेणैव नियमोऽपिकल्प्येतेतिभावः प्रथमाविभक्त्यन्तघटादिपदेत्यादि नात्र प्रथमात्वेनाकाङ्क्षाशरीरे प्रवेशोनवा सुत्वादिना प्रथमात्वाद्यज्ञानदशायामपि शाब्दबोधोत्पत्तेः । किन्तुनील इत्याद्यानुपूर्वीविशेषविशिष्टघटइत्याद्यानुपूर्वीविशेषविशिष्टयोः समभिव्याहाररूपैवाकाङ्क्षा । समभिव्याहारश्च पदविशिष्टपदत्वरूपोवैशिष्ट्यञ्च स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्वभिन्नत्वोभयसम्बन्धेनेन्युक्तमधस्तात् । विनिगमनाविरहात्समासस्थले आकाङ्क्षाद्वयमाह समासस्थलेचेति नन्वेवं पदार्थोपस्थित्यादिकारण कलापसत्त्वे विभक्तिरहितनीलघटेत्यंतन्मात्रज्ञानेऽपिनीलघटयोरभेदान्वयबोधप्रसङ्गः । नीलपदाव्यवहितोत्तरघटपदत्वादिरूपाकाङ्क्षाज्ञानस्यात्रापिसत्त्वादितिचेन्न । अत्रत्यंहिनीलपदं प्रकारताप्रयोजकमेवनतु विधेयताप्रयोजकंभवितुमर्हति अपूर्वांशस्यैवविधेयत्वान्नीलपदार्थस्यचोद्देश्यघटविशेषणत्वेन सिद्धतयाऽपूर्वत्वाभावाद्विधेयत्वासम्भवः । शाब्दबोधेऽप्यनुमिताविवविधेयतानियमेन समासस्थलेऽपि विधेयीभवदेकत्वादिप्रकारकस्यैवशाब्दबोधस्य प्रसिद्धतया तत्सामग्र्या विभक्त्यन्तनीलघटपदादिज्ञानघटिताया व्यापकधर्मावच्छिन्नकार्योत्पत्तौव्याप्यधर्मावच्छिन्नसामग्रीविधयाऽपेक्षितायाअभेदसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रकारतानिरूपितघटत्वाद्यवच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपितैकत्वादिप्रकारकशाब्दबुद्धित्वावच्छिन्नप्रयोजिकाया अभावात् । व्यासस्थलीयस्वन्तनीलादिपदज्ञानघटितायाश्चनापत्तिः सम्भवति ननु नीलोघट इत्याकाङ्क्षाज्ञानाभा-

अप्याकाङ्क्षाया विरहान्नापत्तिः । कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नोक्ताकाङ्क्षाज्ञानयोःपरस्परबोधेव्यभिचारः । यत्तु समासव्याससाधारणं विशेषणपदस्यविशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपम् विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाकाङ्क्षा विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वञ्च न तथा नीलघटमानयेत्यादावसम्भवादिति । तदसत् । विशेष्यवाचकपदाप्रकृतिकत्वस्यतादृशपदानुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसन्धीयमानत्व-

---

वेऽपि नीलघटइतिसमासस्थलीयाकाङ्क्षाज्ञानादभेदसम्बन्धेन नीलप्रकारकघटविशेष्यकशाब्दबोधस्योत्पत्तेः । एवमुक्तसमासस्थलीयाकाङ्क्षाज्ञानव्यतिरेकेऽपि नीलोघट इत्याकाङ्क्षाज्ञानात्तादृशशाब्दबोधस्योत्पत्तेश्च परस्परव्यतिरेकव्यभिचारान्नोक्तरीत्याकार्यकारणभावः सम्भवतीत्याशङ्कायामाह कार्यतावच्छेदककोटाविति तथाच नीलोघटइत्याकाङ्क्षाज्ञानाव्यवहितोत्तरनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधत्वावच्छिन्नम्प्रत्येवनीलोघट इत्याकाङ्क्षाज्ञानत्वेनकारणत्वमतो न व्यभिचारः । नचात्राव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वमस्तु नतुविषयतादेरितिवाच्यम् । उक्तशाब्दबोधत्वस्यकार्यतावच्छेदकत्वेहि प्रवृत्तिम्प्रतीष्टतावच्छेदकावच्छिन्नसाधनताज्ञानस्य कारणत्वात्नीलघटान्वयबुद्धिरिष्टेति नीलघटान्वयबुद्धित्वावच्छिन्नविशेष्यकेष्टत्वप्रकारकज्ञानदशायामुक्तान्वयबुद्धित्वावच्छिन्ननिरूपितसाधनत्वज्ञानान्नीलोघटइतिवाक्यंप्रयुज्यते । अव्यवहितोत्तरत्वमात्रस्य कार्यतावच्छेदकत्वेतु नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधत्वावच्छिन्नजनकंनीलोघट इदंवाक्यमित्याकारकेष्टतावच्छेदकावच्छिन्ननिरूपित साधनताज्ञानाभावान्नैतद्बोधनजननायेदम्वाक्यंप्रयुञ्जीतअतोविषयत्वादिप्रवेशआवश्यकइति । प्रकारान्तरेणापि विषयत्वादिप्रवेशसार्थक्यन्तु विवेचितमस्मद्गुरुचरणैर्गूढार्थतत्वालोके । नोक्ताकाङ्क्षाज्ञानयोरिति इदमुपलक्षणम् । समासस्थलेव्यासस्थलेऽपिच घटादिपदस्थाने तत्पर्यायकलशादिपदंनीलादिपदस्थाने कृष्णादिपदं च प्रक्षिप्य तद्घटिताकाङ्क्षाज्ञानानामपि परस्परबोधे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वंबोध्यम् । व्यभिचारइति व्यतिरेकव्यभिचारइत्यर्थः । समासव्याससाधारणमिति समासव्यासोभयवृत्तीत्यर्थः । व्यासपदस्यासमस्तवाक्यमर्थः । विशेषणवाचकपदस्येति षष्ठ्यर्थो निष्ठत्वं । नचैतत्पक्षे वेदाःप्रमाणमित्यादौ वेदपदाप्रकृतिकसुविभक्तिप्रकृतित्वस्यैव प्रमाणपदे सत्वादुक्ताकाङ्क्षाविरहादनुपपत्तिःकुतोनोक्तेतिवाच्यम् ततोऽपिगुरुतरस्यासम्भवदोषस्यात्रसत्वे तस्यैवप्रतिपादयितुमुचितत्वेनासंभवस्यैवतदसदित्यादिनाप्रतिपादनात् । अथवा विशेषणवाचकपदस्येत्यस्य विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याबोधनेच्छयोच्चरितविभक्त्यप्रकृतिविशेषणवाचकपदस्येत्यर्थकत्वान्नदोषः । सुन्दरं

रूपस्यवा नीलोघट इत्यादौ नीलादिपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृत-विभक्तिभिन्नतया सत्त्वात् । अथविशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्म-वद्विभक्तिराहित्यस्य विवक्षणान्नदोषइतिचेत्तर्हि विभक्तित्वादिकमजानतःपुरुषस्य-तादृशधर्मज्ञानासम्भवात् शाब्दबोधानुपपत्तिः नीलोघटइत्यावपि सुपदस्याम्पद-त्वादिभ्रमदशायां तादृशशाब्दबोधस्यानुदयात् । नीलस्यघटइत्यादावपिपष्ठ्यादेः सुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतोविरुद्धविभक्तिराहित्यस्याप्रयो-जकत्वात् । अथनीलोघटो नीलघटइत्यादिद्विविधबोधसाधारणं स्वोत्तरसुपदभि-

---

दधीत्यादौ विभक्तेरश्रवणादाह तदुत्तरत्वेनेति । नीलोघट इत्यादाविति यद्यपि "उद्देश्यवचनंपूर्वंविधेयस्यततःपरम्" इत्यभियुक्तोक्तेः घटोनीलइत्येवप्रयोक्तु-मुचितम् तथापि तदुक्तेःप्रतिज्ञावाक्याभिप्रायकतयान्यत्र प्रयोगस्यैच्छिकत्वं दृष्टानुसारात्कल्प्यते । विशेष्यवाचकपदोत्तरेत्यादि अत्र विभक्तित्वेन विभक्तिप्र-वेशे प्रयोजनविरहात्तादृशपदोत्तरत्वेनप्रवेशः । तदपि सुन्दरंदधीत्यादिसंग्रहा-योक्तपदोत्तरत्वेन प्रतिसन्धीयमानत्वरूपं बोध्यम् । नन्वत्रसामान्यतोविशेष्यवा-चकपदत्वेनप्रवेशोनसम्भवति सर्वस्यैवसुत्वादिधर्मस्य तत्तत्स्थलभेदेन विशे-ष्यवाचकपदोत्तरवृत्तित्वेन विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मस्यैवा प्रसिद्धेः । नवा घटपदत्वादिना प्रवेश एतदप्रसिद्धिदोषतादवस्थ्यात् । विभक्तित्वस्य सुप्तिङ्साधारणत्वेन सुत्वादेर्विभक्तिविभाजकत्वासम्भवेन विभक्तिविभाजकधर्मपदेनसुत्वौत्वादेरेव वक्तव्यतया सर्वस्यैव तत्तत्स्थल-भेदेन घटपदोत्तरवृत्तित्वात् नीलोघट इतिवाक्यघटकघटपदोत्तरावृत्तीति-क्रमेण तत्तत्पदानां विशिष्यप्रवेशे तात्पर्यं च समासव्याससाधारणाका-ङ्क्षाभिधानप्रवर्तमानस्य न शोभनम् । एवं सति प्र.तवाक्यमाकाङ्क्षाया भेदात् अनुगतत्वासम्भवादितिचेन्न । विशेषणपदे विशेष्यपदवत्त्वमाकाङ्क्षेत्यत्र-तात्पर्यात् । पदवत्त्वञ्च स्वोत्तरनिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिता-कस्वाभाववद्विभक्तिविभाजकधर्मवत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व-सम्बन्धेन । धर्मवत्त्वञ्च स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धेनेति । अस्तिच नीलोघट इत्यादौ घटपदवत्त्वंनीलपदे । तथाहि स्वम्प्रकृतवाक्यघटकमेवघटपदं, स्वपदस्य-विशेषे एवविश्रामात् । तदुत्तरसुविभक्तिनिरूपितवृत्तित्वं सुत्वे एव नतु औत्वादौ । अतस्तथाविधवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकघटपदाभाव-वान् विभक्तिविभाजको धर्मः औत्वादिस्तदाश्रयाव्यवहितपूर्वत्वञ्च न नीलपदे इत्यत उक्तसम्बन्धावच्छिन्नप्रतियोगिताकघटपदाभाववत्त्वं नीलपदे । नीलस्य घटइत्यादौतु उक्तसम्बन्धेनघटपदवत्त्वं न नीलपदे । एतद्वाक्यघटकघटपदोत्तर सुनिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकघटपदाभाववत्त्वस्य ङस्त्वेस-त्त्वात् तथाविधङस्त्वधर्मवत्त्वस्यैवस्वाश्रयाव्यवहितपूर्वत्वसम्बन्धेन नीलपदेस-

न्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदवत् स्वन्तघटादिपदत्वमेव तथास्त्विति चेन्न। नीलघटरूपमित्यादि वाक्यसाधारण्यानुरोधेनान्यादृश्याअप्याकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शितसमासव्याससाधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति । अथनीलं घटमानयेत्यादौ

---

स्वात्। तथाच नीलपदंघटपदवदित्याकारकं नीलपदधर्मिकघटपदवत्त्वावगाह्याकाङ्क्षाज्ञानं नीलोघट इतिशाब्दबोधेकारणमिति पर्यवसितम्। नचैवं विभक्तित्वादेःसंसर्गकोटौ प्रविष्टतया संसर्गस्यत्वनुस्थितस्यापिभानाद् विभक्तित्वादिकमजानत इत्युत्तरग्रन्थासङ्गतिरितिवाच्यम् । यत्रघटपदे एवाव्यवहितोत्तरत्वसम्बन्धेननीलादिपदवत्वग्रहस्तत्रापिशाब्दबोधस्यानुभविकतया तत्र नीलपदंघटपदवदितिज्ञानाभावादनुपपत्तौतात्पर्यात् अत्रच विशेष्यवाचकपदोत्तरावृत्तिधर्मवद्विभक्तिराहित्यमात्रोक्तौ घटादिपदोत्तरविभक्त्यवृत्तित्वस्य नीलादिपदोत्तरस्वादिनिष्ठतत्तद्व्यक्तित्वादिधर्मे सत्वात्तद्धर्मवद्विभक्तिमत्त्वस्यैवनीलादिपदेसत्त्वादनुपपत्तिरतोविभक्तिविभाजकधर्मेत्युक्तम् । विभक्तिराहित्येत्यत्रविभक्तिपदोपादानप्रयोजनम् न किमपिपश्यामः। स्वोत्तरेति इयञ्च नीलोघटइत्यादिस्थलीयसुविभक्त्यन्तविशेष्यविशेषणपदयोर्नीलघट इत्यादिसमासस्थलीयविशेष्यविशेषणपदयोश्चाकाङ्क्षा । नीलौ घटौ इत्यादौ च स्वोत्तरौपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वसम्बन्धेन नीलपदवदौविभक्त्यन्तघटपदवत्त्वमाकाङ्क्षा एवमन्यत्राप्यूह्यम्। सुपदेति अत्र शक्तंपदंविवक्षितं नतु सुप्तिङन्तंपदमितिवैयाकरणपारिभाषिकम्। नीलादिपदवत्स्वन्तेति अत्र स्वन्तत्वानुक्तौ नीलोघटाइत्यादावाकाङ्क्षापत्तिनीतस्तदुपात्तमिति। नीलघटरूपमित्यत्र विशेष्यवाचकघटपदस्य स्वाद्यन्तत्वविरहादनुपपत्तिरित्याह । नीलघटरूपमित्यादीति ननु स्वन्तत्वमिह सुभिन्नविभक्त्यव्यवहितपूर्वत्वाभावरूपमेववाच्यम् । तावतैव नीलोघटावित्यादौ वारणम् । तथाच नीलघटरूपमित्यत्रनानुपपत्तिरितिचेन्न । नीलोघटरूपमित्यादौ घटपदे सुभिन्नविभक्त्यव्यवहितपूर्वत्वाभावसत्त्वादाकाङ्क्षापत्तेरिति । अथ नीलघटरूपमित्यत्रनीलश्चासौघटोनीलघटो नीलघटस्यरूपन्नीलघटरूपमिति विग्रहे निपातातिरिक्तनामार्थयोःसाक्षाद्भेदेनान्वयस्याव्युत्पन्नतया घटपदस्यघटीयेलक्षणांविनाघटपदार्थस्य रूपपदार्थेन सहान्वयो न सम्भवति। अतो लक्षणाया आवश्यकतया घटीयमात्रेलक्षणायां नीलपदार्थस्य घटीयैकदेशेघटेऽन्वयोवक्तव्यइत्येकदेशान्वयापत्तिः तद्वारणाय घटपदस्य नीलघटीयेएवलक्षणायुक्ता नीलपदंतात्पर्यग्राहकं। तथाच घटपदस्यैवविशेषणवाचकत्वात् घटपदोत्तरसुभिन्नपदानुत्तरत्वविशिष्टघटपदोत्तरत्वस्यस्वन्तत्वस्यचरूपपदेसत्वादनुपपत्तिप्रदर्शनमयुक्तम् । एवं घटस्यरूपं घटरूपमितिविग्रहनिष्पन्नघटीयरूपार्थकघटरूपशब्देन सह नीलञ्चादोघटरूपमितिविग्रहेनीलपदार्थस्याभेदेन घटीयरूपेणसहान्वयान्नीलं घटीयरूपमित्य-

नीलादिपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय इतिचेत् नकुत्रापि। विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते। अभेदएव वा विशेषणविभक्तेरर्थः। अभेदस्यसंसर्गमर्यादया भानन्तु समासस्थलएव। तत्रलुप्तविभक्त्यनुसन्धानं विनापिशाब्दबुद्धेरानुभविकत्वादित्यपि वदन्ति। अथैतन्मते अभेदोयदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः। यदि च भेदप्रतियोगिकोऽभावस्तदानीलं जलमित्यादिवाक्यस्यापि प्रामाण्यापत्तिः! जलेद्वि-

---

न्वयबोधोदयात् घटरूपपदस्यैव विशेष्यवाचकत्वात। तत्रस्वन्तत्वस्यस्वोत्तरसुभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वसम्बन्धेन नीलपदवत्त्वस्य च सत्त्वान्नानुपपत्तिरितिचेन्न। यत्रहिघटीयलाक्षणिकघटशब्देनसह नीलशब्दस्य कर्मधारयस्ततो नीलघटशब्दस्यरूपशब्देनसहकर्मधारयस्तथाचाभेदेन नीलविशिष्टंयद्घटीयमभेदेनतद्विशिष्टंरूपमितिवाक्यार्थः। तत्र नीलपदस्यविशेषणवाचकस्यस्वोत्तरसुभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वसम्बन्धेन घटपदेसत्त्वेऽपि घटपदस्यस्वन्तत्वविरहादनुपपत्तिस्सङ्गच्छत इतिबोध्यम्॥ननु निरर्थकप्रयोगकस्यान्याय्यतयाऽर्थान्तरबोधकानुशासनविरहेण च नीलं घटमानयेत्यादौ विशेषणपदोत्तरद्वितीयादेरपिकारकविभक्तित्वमेवयुक्तमतः कर्मत्वादिरेवतदर्थः। कर्मत्वादेश्चक्रियासापेक्षतया नीलकर्मताकं घटकर्मताकञ्चानयनमितिप्राथमिकोबोधः पार्ष्टिकश्च विशेष्यविशेषणयोरभेदभानमितिमन्वानोमीमांसकः पृच्छति अथेति पदसंस्कारकतयापिविभक्तेःसार्थकत्वसम्भवे कर्मत्वादिपरत्वमयुक्तम्। स्रग्विणं, कुण्डलिनं, वाससिवनं चैत्रमानयेत्यादौ प्रतिविशेषणं क्रियान्वयस्य सर्वानुभवविरुद्धत्वात्प्रत्यक्षानुशासनाभावेऽपि क्रियाविशेषणानांकर्मत्वमितिवदनुशासनस्यकल्पनीयतया न कारकविभक्तित्वमित्याशयेनोत्तरयति. न कुत्रापीति तथाच यदि तत्र कर्मत्वाद्यर्थःप्रतीयेत स्यादपिकुत्रचिदन्वयो नत्वेवमितिभावः। पदसाधुत्वार्थंप्रयुक्तोऽपि द्वितीयादिरर्थानवभासकत्वान्निरर्थकप्रायएवेत्यतः समाधानान्तरमाह अभेदएववेति तथाच तस्यापि पदोपस्थाप्यतयाप्रकारविधयैव भानम्। एवमपि न कारकविभक्तित्वमितिहृदयम्। लुप्तविभक्तीति पदजन्योपस्थितिविषयात्मकस्यपदार्थस्यैव प्रकारविधयाभानं समासस्थलेचाभेदोपस्थापकपदाभावान्नपदजन्योपस्थितिविषयत्वमभेदस्येत्यतो न तस्य प्रकारविधयाभानंतत्रसम्भवति। संसर्गस्यानुपस्थितस्यापिभानादितिभावः एतन्मतइति विशेषणविभक्तेरभेदार्थकत्ववादिमते इत्यर्थः। अभेदस्य संसर्गतामतोपपत्तिरुपपरिष्टाद् व्यक्तीभविष्यति भेदत्वावच्छिन्नेति भेदत्वेतरधर्मानवच्छिन्नप्रतियोगिताकाभावइत्यर्थः। तेन भेदत्वावच्छिन्नप्रतियोगिताकस्य भेदघटोभयाद्यभावस्य प्रसिद्धत्वेऽपि न क्षतिः अप्रसिद्धिरिति सर्वत्र यत्किञ्चिदभेदसत्त्वेन निरुक्तभेदत्वावच्छिन्नप्रतियोगिताकाभावस्यहि न कुत्रापिसत्त्वमितिभावः। प्रामाण्यापत्तिरिति प्रमाकरणत्वापत्तिरित्यर्थः। द्वित्वादिनेत्यादि नीलभेदघटोभयंनास्तीत्यादिप्रतीतिसिद्धस्यद्वित्वाद्यव-

त्वादिनानीलभेदाद्यभावस्य सत्त्वात् । नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे- नीलादिपदार्थानन्वयप्रसङ्गः । नच भेदप्रतियोगिकाभाव एव विभक्त्यर्थः नीलपद- समभिव्याहारात् नीलभेदत्वावच्छिन्नाभावःप्रतीयत इतिवाच्यम् । पदार्थद्वयसंस- र्गभानस्यैवाकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्तिं विना

---

च्छिन्नप्रतियोगिताकाभावस्येत्यर्थः नीलभेदत्वावच्छिन्नाभावस्येति नीलभेदत्वा- तिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः। तथाच नीलभेदत्वातिरिक्तोयो- द्वित्वादिधर्मस्तदनवच्छिन्नप्रतियोगिताको न नीलभेदघटोभयाद्यभावइति न दोषः। नचैवं पीतोघटइत्यत्रपीतभेदत्वावच्छिन्नाभावोऽपि विभक्त्यर्थावाच्यः । एवंक्रमेण विशेषणविभक्तिशक्तेरननुगमप्रसङ्ग इतिवाच्यम्। यथाहितदादिपदशक्यतावच्छेद- कानां घटत्वपटत्वादीनां बुद्धिविषयतावच्छेदकत्वेनानुगमात् बुद्धिविषयतावच्छे- दकत्वोपलक्षितधर्मावच्छिन्नेऽनुगतशक्तिरुपपद्यते । तथा प्रकृतेऽपि नीलत्वादिध- र्माणां प्रकृत्यर्थतावच्छेदकत्वेनानुगमात्प्रकृत्यर्थतावच्छेदकत्वोपलक्षितधर्मावच्छि न्नप्रतियोगिताकाभावेऽनुगतैवशक्तिः सम्भवतीतिबोध्यम् । नीलादिपदार्थानन्वयेति अत्रनीलादिपदार्थस्य विभक्त्यर्थघटकनीलत्वादावाधेयतासम्बन्धेनान्वये एकदेशा न्वयनियमभङ्गो नानन्वयप्रयाजकोऽभिमतः। तथासति नचभेदप्रतियोगिकाभाव- एवेत्यनुपदाग्रिमग्रन्थस्यानुत्थानापत्तेः। तत्राप्येकदेशानन्वयनियमभङ्गप्रसङ्गदोषस्य सत्त्वात् । किन्तु नीलत्वविशिष्टस्यनीलत्वे आधेयतयान्वये आकाङ्क्षाविरहोवक्ष्य माणएवानन्वयप्रयोजकोऽभिमतः । अथवा प्रकृत्यर्थाभानेऽपि नीलत्वावच्छिन्न- प्रतियोगिताकभेदाभाववान् घट इति वाक्यार्थस्यपर्यवसानान्नीलत्वादावाधेयतास- म्बन्धेन प्रकृत्यर्थान्वयोऽकिञ्चित्करइत्यभिमतः । अथ भेदनिष्ठप्रतियोगिताकस्य तत्तद्भेदाद्यभावस्य सर्वत्र प्रसिद्धस्य प्रतियोगितासम्बन्धेन भेदविशिष्टाभावत्वेन- विभक्त्यर्थतामाशङ्कते नचेति। नन्वेवमपि नीलभेदप्रतियोगिकस्य नीलभेदघटोभयाद्य भावस्यजलेऽपि सत्त्वान्नीलंजलमितिवाक्यस्यप्रामाण्यापत्तिर्दुवारेत्यतआह नीलप- दसमभिव्याहारादिति तथाच नीलपदार्थस्य भेदेनीलत्वावच्छिन्नप्रतियोगिताकत्व- सम्बन्धेनान्वयः । विशेषणविभक्त्या प्रतियोगितासम्बन्धमात्रेण भेदविशिष्टाभावो पस्थितावपि नीलपदसमभिव्याहारबलान्नीलभेदत्वावच्छिन्न प्रतियोगितासंसर्गेणै- वान्वयः एवञ्च नीलत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभाव- स्य नीलमिति विशेषणविभक्तिपर्यन्तार्थस्य जलेबाधितत्वान्ननीलंजलमितिवाक्य- स्य प्रामाण्यापत्तिरिति भावः। पदार्थद्वयसंसर्गभानस्यैवेति विभिन्नशक्त्युपस्थापि- तार्थद्वयसंसर्गभानस्यैवेत्यर्थः । तेनाख्यातार्थयोः कालकृत्योःसंसर्गस्य आकाङ्क्षाभा- स्यत्वेऽपिनक्षतिः । तत्राख्यातस्य हि वर्तमानकालत्वादिनावर्तमानकालादौकृति त्वेन कृतौच भिन्नैव शक्तिर्नत्वेका। प्रकृतेच भेदविशिष्टाभावे एकस्याएवशक्तेःस्वी- कारे भेदाभावयोर्विभिन्नशक्त्यनुपस्थापितत्वान्नतयोराकाङ्क्षा प्रयोज्यः संसर्गःसम्भव

भेदरूपपदार्थत्वावच्छेदकस्याभावे तादृशसम्बन्धेन भानासम्भवात् मैवम् भेदोऽभावश्च विशेषणविभक्तेरर्थः। विशिष्टलाभस्त्वाकाङ्क्षादिवशाद्। एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इतिनिरस्तम्। नच विशेषणविभक्तेरभेदार्थकत्वे नीलं घट इत्यादावप्यभेदान्वय्यबोधापत्तिः धान्येन धनवान् इत्यादौ तृतीययाऽभेदबोधनात् अभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यस्यानपेक्षणादितिवाच्यम् द्वितीयादिनाऽभेदबोधने द्वितीयाद्यंतविशेष्यवाचकपदसमभिव्याहारस्यप्रयोजकत्वमित्यु-

---

तीतिभावः भेदोऽभावश्चेति तथाचोक्तार्थद्वये खण्डशःशक्त्युपगमेविभिन्नशक्त्युपस्थापिते भेदे नीलपदार्थस्य नीलत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धो भेदस्यचाभावे नीलपदसमभिव्याहारवलान्नीलप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपःसंसर्गःसम्भवतीत्याह विशिष्टलाभइति तथाच नीलोघट इतिवाक्यान्नीलभेदाभाववान् घट इत्यन्वयबोध उपपद्यते इतिभावः। पूर्वोक्तदोषमेतत्पक्षेनिरस्यति एतेनेति शक्तिद्वयाङ्गीकारेणेत्यर्थः निरस्तमिति भेदस्य मुख्यार्थत्वात्तत्रान्वये एकदेशान्वयदोषविरहइतिभावः। न च विशेषणविभक्तेरभेदार्थकत्व इति संसर्गतावादिनांतु समानविभक्तिकविशेष्यविशेषणवाचकपदघटिताकाङ्क्षाज्ञानस्य हेतुत्वोपगमान्नानुपपत्तिः। नच समानविभक्तिकपदघटिताकाङ्क्षाज्ञानाभावेऽपि धान्येन धनवान् इत्यादावभेदसंसर्गकबोधस्यजायमानत्वात्संसर्गतापक्षेऽपि तथाविधाकाङ्क्षाज्ञानत्वेन कारणत्वस्य निर्वक्तुमशक्यतया नीलंघट इत्यादावापत्तिस्तुल्यैवेतिवाच्यम् "प्रकृत्यादिभ्यउपसङ्ख्यानम्" इति वार्तिकेनाभेदार्थेतृतीयाविधानात् तदर्थोऽभेदोहिप्रकारविधयैव संसर्गतावादिमतेऽपि तत्र भासते। एवं प्रत्यक्षानुशासनविहितद्वितीयाद्यर्थकर्मत्वादयोऽपि प्रकारविधयैवभासन्ते विशेषणविभक्तिस्थलेत्वभेदबोधकविभक्तिविधायकप्रत्यक्षानुशासनाभावात् नाभेदोविशेषणविभक्तेरर्थः। अतः संसर्गविधयाभानमिति संसर्गतावादिनामभिप्रायः। इत्थञ्च संसर्गतामतेऽपि न धान्येन धनवानित्यादौ अभेदसंसर्गकबोधः। येन संसर्गतावाद्यभिमतकार्यकारणभावे व्यभिचारःस्यादितिभावः द्वितीयादीति अथात्रादिपदात् तृतीयायाःपरिग्रहे धान्येन धनवान् इत्यादावनुपपत्तिः। अपरिग्रहेच सुन्दरेणघटइत्यादिप्रयोगापत्तिर्नियामकाभावादितिचेन्न "प्रकृत्यादिभ्यउपसंख्यानम्" इति वार्तिकविहिततृतीयातिरिक्तविभक्तेरादिपदग्राह्यत्वेनानुपपत्तिविरहादिति भेदाप्रसिध्येति अत्र संयोगादिसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायाःसंयोगेन प्रमेयोनास्तीत्यादिप्रतीतिसिद्धायाः सत्वाद्। भासमानवैशिष्ट्यप्रतियोगित्वस्य प्रकारत्वपक्षेसंयोगेन प्रमेयावगाहि प्रमेयवान् इति प्रतीत्यासंयोगप्रतियोगित्वरूपप्रकारतायां प्रमेयत्वावच्छिन्नत्वसत्वाद्वानप्रमेयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धिरतो भेदपर्यन्तानुधावनम्। संसर्गतामतेयथानिर्वाहस्तथानुपदमेवव्यक्तीभविष्यति। अभावप्रतियोगितानवच्छेदकत्वेतिगुरोः

पगमात् अथ प्रमेयोघटइत्यादौ प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या लघुधर्मसमनियतगुरु-
धर्मस्याभावप्रतियोगितानवच्छेदकत्वेकम्बुग्रीवादिमान् घट इत्यादावपि कम्बुग्रीवा-
दिमत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या विशेषणविभक्तेरभेदकार्थकत्वासम्भवः।
एवं नीलपटादिपरनीलादिपदघटितस्य नीलोघट इत्यादिवाक्यस्यापिप्रामाण्यापत्तिः
नीलत्वादिनापटादेर्भेदाभावस्यनीलादौसत्त्वात् । एतेनविशेषणतावच्छेदकीभूत-
नीलत्वप्रमेयत्वादिकमेवविशेषणविभक्त्यर्थः । नीलत्वादेर्नीलत्वावच्छिन्नभेदाभा-
वरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपिनिरस्तम् । नीलत्वादौनीलत्वादिमतः-
स्ववृत्तित्वसंबन्धेनान्वयेआकाङ्क्षाविरहाच्च । यथाहितद्विशिष्टेऽधिकरणेतदधिकरण-

रपिधर्मस्यविषयतावच्छेदकत्वमावश्यकम् अन्यथा कम्बुग्रीवादिमत्त्वावच्छिन्नप्र-
कारताशालिनीकम्बुग्रीवादिमद्घानित्यादिप्रतीतिरेवनोपपद्येत । अतउक्तं प्रतियो-
गितेति । भासमानवैशिष्ट्यस्य प्रतियोगित्वानुयोगित्वेएवप्रकारत्वविशेष्यत्वे इति
पक्षेगुरोरपि धर्मस्योक्तप्रतियोगितावच्छेदकत्वसत्त्वादभावेत्युक्तमितिबोध्यम् नील-
पटादिपरेति अयंभावः भेदोऽभावश्चेत्युक्तपक्षेनीलत्वावच्छिन्नप्रतियोगिताकभेदा-
भावस्यनीलइत्यन्तार्थस्यानुगततयासर्वेष्वेवनीलघटपटादिष्वेकस्यैवतस्यसत्त्वान्नील
पटतात्पर्येण प्रयुक्तनीलपदघटितनीलोघटइतिवाक्यस्यप्रामाण्यापत्तिरिति॥ एतेनेति
उक्तवाक्यस्यप्रामाण्यप्रसङ्गेनेत्यर्थः ॥ अथात्रविशेषणविभक्तेर्नीलत्वाद्यर्थकत्वेप्यु-
क्तप्रयोगस्यप्रामाण्यापत्तिर्नसंभवति अत्रत्यनीलपदस्यगुणिपरत्वेननीलरूपात्मक-
मेवहि नीलत्वंविशेषणविभक्त्यर्थःस्यान्नतुजातिरूपम् प्रकृतिजन्यबोधेप्रकारीभूत-
स्यैवभावप्रत्ययार्थतयानीलपदात्मकप्रकृतिजन्यनीलाश्रयविषयकबोधेनीलरूपस्यै-
वप्रकारत्वात् एवंचपटवृत्तिनीलरूपव्यक्तेर्घटेऽभावादितिचेन्न ॥ विशेषणवि-
भक्तेर्नीलरूपेशक्त्युपगमेऽनन्तेषुशक्तिकल्पनायांगौरवात् यावन्नीलवृत्तिनीलत्व-
जातावेव तद्विभक्तेःशक्तिस्तस्याश्चजातेःस्वाश्रयाश्रयत्वसंबन्धेन विशेष्येऽन्वयः
प्रकृत्यर्थस्यचतत्रस्ववृत्तिवृत्तित्वसंबन्धेनान्वयः ॥ एवंचप्रकृतेनीलपटपरकनीलप-
दघटितनीलोघटइतिवाक्यस्थलेनीलत्वस्यैतत्संबन्धेनपटइवघटेऽपिसत्त्वादापत्ति-
संभवादिति ॥ नचैवमपिपटवृत्तिनीलत्वस्यविशेषणविभक्त्यन्तार्थस्यविशि-
ष्टाधिकरणतायावैलक्षण्येनघटेविरहादापत्तिरसंगतेतिवाच्यम् विशिष्टवैशिष्ट्या
वगाहिबुद्धौप्रामाण्यापत्तेरसंभवेऽपिविशेष्येविशेषणंतत्रापिचविशेषणान्तरमिति-
रीत्याजायमानायांघटे स्वाश्रयाश्रयत्वसंबन्धेननीलत्वंतत्रस्ववृत्तिवृत्तित्वसबन्धेन-
नीलाश्रयीभूतपटवत्वमवगाहमानायामुपलक्षितवैशिष्ट्यावगाहिशाब्दबुद्धौप्रामा-
ण्यस्यापत्तौतात्पर्यादिति प्रवादोपपत्तिरिति नचप्रमेयो घटइत्यादौप्रमेयत्वावच्छि
न्नप्रतियोगिताकभेदाप्रसिध्द्या।प्रमेयत्वावच्छिन्नभेदाभावरूपाभेदात्मकत्वं प्रमेयत्वेऽ-
संभवीतिनतत्रोक्तप्रवादोपपत्तिरितिवाच्यम् । प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदा-
भावरूपस्यमुख्याभेदपदार्थस्यतत्रबाधितत्वेऽपिगौणस्यैवकस्यचिद्भेदप्रतियोगिता
वच्छेदकत्वाभावादिरूपस्यतत्रवाच्यत्वादिति । दूषणान्तरमप्याह नीलत्वादावि-

तयातदन्वयोऽनुभवविरुद्धः तथातद्धर्मआश्रयतया तद्धर्मवदन्वयोपि॥ अतएव कर्मंगच्छतीति वाक्यस्य निराकाङ्क्षता। नचैवं संसर्गतामतेऽप्यनिस्तारः। नीलोघटइत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थलेप्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम्॥ स्ववृत्तिनीलत्वादेः स्वस्मिन्संबन्धतोपगमे पटादिवृत्तिनीलत्वादेर्घटादौपटादिसंबन्धताविरहेण तादृशातिप्रसङ्गाभावात्॥ वस्तुतस्तु तत्तद्वस्तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभावएव नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन्

ति स्ववृत्तित्वसंबन्धेनेति स्ववृत्तिवृत्तित्वसंबन्धेनेत्यत्रतात्पर्यम्अथवास्ववृत्तित्वंस्वाश्रयाश्रयत्वसंबन्धावच्छिन्नंविवक्षितम्। नतुसमवायसंबन्धावच्छिन्नमेवमग्रेऽपिचबोध्यम् यथाहीति हिर्हेतौ तद्विशिष्टेऽधिकरणेइति घटस्य घटाधिकरणमित्यादौ घटाधिकरणे घटस्याधिकरणतयान्वयोऽनुभवविरुद्धःघटस्य भूतलमित्यादावधिकरणतया घटादेरन्वयस्त्वानुभविकइतिभावः॥ कर्मंगच्छतीति अत्रद्वितीयार्थकर्मत्वे प्रकृत्यर्थस्य कर्मण आधेयतयान्वयस्यानुभवविरुद्धत्वान्निराकाङ्क्षतेत्यर्थः नन्वभेदस्य संसर्गतोपगमेऽपि अभेदस्य भेदाभावरूपत्वे पूर्वोक्तो भेदत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिध्यादिदोषः परिस्फुरति तद्वारणायविशेषणतावच्छेदकीभूतनीलत्वादेरेवसंसर्गताभ्युपेया तथासति नीलपटादिपरकनीलादिपदघटितस्य नीलोघटेतिवाक्यस्य प्रामाण्यापत्तिर्दुर्वाराइत्यभिप्रायवान् शङ्कत नचैवमिति स्ववृत्तिनीलत्वादेःस्वस्मिन्निति अत्रोभयत्र स्वपदेनैकपदनीलपटादिर्ग्राह्यः॥ षष्ठ्यर्थोनिष्ठत्वं सप्तम्यर्थोऽनुयोगित्वं तस्य निरूपितत्वसंबन्धेन संसर्गतायामन्वयः तथाच नीलपटादिनिष्ठानुयोगितानिरूपिता या स्ववृत्तिनीलत्वादिनिष्ठासंसर्गता तदङ्गीकारेणेत्यर्थः॥ तत्र च वृत्तित्वं विशेषणतया विवक्षितं नोपलपक्षणतया। अतः स्ववृत्तित्वविशिष्टनीलत्वादिमत्वरूपसंबन्धस्य स्वस्मिन्पटे एव सत्वं न तु घटे। प्रकारतापक्षे तु नीलत्वस्य न स्ववृत्तित्वं विशेषणम् अस्य संबन्धविधया भासमानत्वात् प्रकारविधयाभासमानसंसर्गविधयाभासमानयोर्विशेष्यविशेषणभावविरहात् न चाधेयत्वसंबन्धेन नीलपटादिरेव नीलत्वविशेषणतया विवक्षणीयम्अतो न तस्य घटादिवृत्तित्वं स्यात् विशिष्टाधिकरणताया वैलक्षण्यादिति वाच्यम्॥ नीलपटो विशेषणमेव नोपलक्षणमित्यत्र नियामकाभावात्॥ संसर्गतायास्तु विशिष्टबुध्यनुसारेण कल्पनाद् स्ववृत्तित्वनीलत्वत्वोभयधर्मावच्छिन्नायाः स्ववृत्तिनीलत्वनिष्ठाया एव कल्पनीयतया स्ववृत्तित्वस्योपलक्षणत्वे एतदुभयधर्मावच्छिन्नत्वासंभवादतो नास्योपलक्षणत्वं संभवतीत्यतः प्रकारतापक्षे उक्तवाक्यस्य प्रामाण्यापत्तिर्दुर्वारेतिभावः॥ विशेषणतावच्छेदकीभूतनीलत्वादेः संसर्गत्वेऽभेदपदमुख्यार्थस्य भेदाभावस्य संसर्गत्वालाभात्—अत्राभेदपदस्य पारिभाषिकत्वापत्तिरतआह वस्तुतस्त्विति तत्तद्व्यक्तित्वावच्छिन्नभेदाभावएवेति अस्य संबन्धतया भासते इत्यनेनान्वयः तत्तद्व्यक्तीनामिति अत्र षष्ठ्याःप्रतियोगित्वमर्थः स्वस्मिन्निति सप्तम्याअनुयोगित्वमर्थः॥ तस्य निरूपितत्वसम्बन्धेन स-

सम्बन्धतया भासते इति न काप्यनुपपत्तिः। सम्बन्धता च तस्य भेदप्रतियोगिताकाभावत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाभावत्वेन वेत्यन्यदेतत् न चैवं विशेषणविभक्तेरभेदार्थकत्वमतेऽपि तत्तद्व्यक्तित्वावच्छिन्नाभेदएव विभक्त्यर्थोवक्तव्य

---

म्बन्धतायामन्वयः सवन्धतयेति तृतीयार्थो वैशिष्ट्यं, तथाच तत्तद्व्यक्तिनिष्ठप्रतियोगितानिरूपिता तत्तद्व्यक्तिनिष्ठानुयोगितानिरूपिता च या संसर्गता तद्विशिष्टउक्तभेदाभावएव भासत इत्यर्थः न काप्यनुपपत्तिरिति पटात्मकनीलपदार्थस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदएव हि घटे नतु तदभावइति भावः अन्यदेतदिति भेदप्रतियोगिताकाभावत्वावच्छिन्ना तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना वा संसर्गतेत्यविचारणीयम्। पक्षद्वयेऽप्युक्तप्रामाण्यापत्तिवारणसम्भवादितिभावः। ननु भेदप्रतियोगिताकाभावत्वं तद्व्यक्तिभेदगगनोभयाभावादिसाधारणमतस्तादृशाभावत्वेन रूपेण संसर्गत्वे उक्तोभयाभावोऽपि संसर्गतया परिगृह्येत॥ तस्य च जलादौ सत्वात्। नीलं जलमित्यादिवाक्यस्य प्रामाण्यापत्तिः भेदत्वावच्छिन्नप्रतियोगित्वाकाभावत्वस्यालीकतया नापि तेन रूपेण संसर्गत्वसम्भवइति चेन्न अतिप्रसक्तो हि धर्मः प्रतियोगिताद्यनवच्छेदकोऽपि विषयतावच्छेदको भवत्येव॥ कथमन्यथा द्रव्यवत्कपालमित्यादिज्ञाने समवायसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नप्रकारताया घटमात्रनिष्ठयाअतिप्रसक्तमपि द्रव्यत्वं भवत्यवच्छेदकं नत्वनतिप्रसक्तमपिघटत्वमिति तत्र घटत्वस्यावच्छेदकत्वे द्रव्यवत्कपालं घटवत्कपालमिति प्रतीत्योःको भेदः स्यात्–"अर्थैनैव विशेषो हि निराकारतया धियामित्याचार्योक्तेः" विषयवैलक्षण्यं विना विषयिवैलक्षण्यासंभवात्॥ इत्थंचातिप्रसक्तेनाऽपि भेदप्रतियोगिताकाभावत्वेनावच्छिद्यते प्रकृतसंसर्गताविषयतारूपत्वात्साचेयं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठैव कल्पनीया न तु नीलभेदगगनोभयाभावनिष्ठा॥ नीलं जलमिति विशिष्टबुध्यनुदयादिति॥ इदं तु बोध्यम् घटत्वेन पटोऽस्ति घटत्वेन पटोनास्तीति प्रयोगद्वयस्याप्रामाणिकत्वमिव नीलपटपरकनीलपदघटितनीलोघटइति वाक्यस्याप्रामाणिकत्वे तत्र नञ्घटितस्य नीलो न घटइत्यस्याप्यप्रामाणिकत्वमेव युक्तम्॥ अत्र हि नर्थभेदे नीलपदार्थस्य नीलत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयो वाच्यः तथाच नीलत्वावच्छिन्नप्रतियोगिताकभेदस्य घटे विरहात्प्रामाण्यासंभवः नचात्र नीलत्वेन पटभेदएवप्रतीयते इति वक्तुं युक्तम् सामान्यरूपेण विशेषाभावानङ्गीकारात्॥ तदङ्गीकारपक्षेऽपि प्रतियोगिविशेषवाचकपदघटितस्यैव वन्हित्वेन महानसीयवन्हिर्नास्तीत्यादिवाक्यस्य तदभिलापकत्वात्॥ प्रतियोगिविशेषवाचकपदाघटितस्यापि वाक्यस्य तदभिलापकत्वे पर्वते वन्हिर्नास्तीत्यादिप्रयोगापत्तिः॥ नहि सामान्यरूपेण विशेषाभाववादिनामप्येतादृशः प्रयोगोऽनुमत इति बोध्यम्॥ तत्तद्व्यक्तित्वावच्छिन्नाभेदएवेति तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावएवेत्यर्थः विभक्त्यर्थोवक्तव्य इति नीलपटपरकनीलपदघ-

इति वाच्यम् । तथा सति अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य कथञ्चिदपि भानासम्भवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासम्भवेन संसर्गतामतेऽनुपपत्त्यभावात् ॥ न च विभक्त्यर्थेऽपि भेदे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धे नीलत्वादिना तत्तद्व्यक्तीनामन्वयः । तादृशभेदानामपि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयउपेयते तावतैव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभइति न किंचिदनुपपन्नमिति वाच्यम् ॥ विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया

---

घटितस्यनीलोघटइतिवाक्यस्यप्रामाण्यापत्तिवारणायेतिभावः अपूर्वव्यक्तीति या व्यक्तिः न केनचिदपि प्रमाणेन पूर्वं गृहीता सा पूर्वं व्यक्तिरित्युच्यते ॥ यथास्मद्गृहे घटोऽस्तीत्युक्ते तद्वाक्यश्रवणाद् पूर्वं श्रोतुस्तद्गृहवृत्तिघटो न केनचिदपि प्रमाणेन गृहीतोऽतः सोऽपूर्वोपि शाब्दबोधेभासते एवेति बोध्यम् ॥ बोधानुपपत्तेरिति यद्यप्यत्र तत्तद्व्यक्तित्वावच्छिन्नाभेदरूपविभक्त्यर्थघटकतत्तद्व्यक्तित्वे नीलादिपदार्थस्याधेयतासंबन्धेनान्वये एकदेशान्वयापत्तिरपि दोषस्तथापि महाकविरित्यादौ महत्पदार्थस्य कवित्वादिरूपैकदेशेऽन्वयस्य एवं जात्याब्राह्मणइत्यादौ जात्यभिन्नब्राह्मणत्ववानित्यन्वयस्यानुभविकत्वात्सदोषो न गरीयानतो नोद्भावितः ॥ संसर्गतामतेऽनुपपत्त्यभावादिति न च नीलोघट इदंवाक्यमभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकबोधपरमितितात्पर्यज्ञानमवश्यमपेक्षणीयम् ॥ तथाच विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया नीलत्वावच्छिन्नप्रकारतायां विशेषणीभूताभेदसंबन्धावच्छिन्नत्वघटकस्याभेदस्य ग्रह आवश्यकएवेति वाच्यम् ॥ नीलोघटइदंवाक्यंनीलविषयताविशिष्टबोधपरमित्याकारकमेव हि तात्पर्यज्ञानं शाब्दबोधोपयोगि । वैशिष्ट्यं च स्वनिरूपितसंसर्गतानिरूपितघटादिविषयताकत्वसंबन्धेन तथाचानुपस्थितस्यापि संसर्गस्य भानान्नाभेदोपस्थितेरपेक्षेति बोध्यम् ॥ भेदोऽभावश्च विशेषणविभक्तेरर्थइत्यभिप्रायवान् शङ्कते नचेति नीलत्वादिनेति वैशिष्ट्यं तृतीयार्थः तथाच नीलत्वादिविशिष्टतत्तद्व्यक्तीनामित्यर्थः इत्थमेव कंबुग्रीवादिमान् घटइत्यत्र कम्बुग्रीवादिमत्त्वेन रूपेण भासमानकम्बुग्रीवादिमद्व्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदेऽन्वयान्न गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धिनिबन्धनो दोषः एवं प्रमेयो घटइत्यादौ प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वस्य भेदेऽप्रसिद्धावपि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धत्वान्न दोषइति बोध्यम् विशेषणतावच्छेदकावच्छिन्नेति तथाच नीलोघटइत्यादौ नीलत्वेन रूपेण नीलस्य भानान्नीलत्वमेव विशेषणतावच्छेदकं न तु तत्तद्व्यक्तित्वमतो न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितायाभानसंभवइति भावः ॥ अथ यद्यपि विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति रीत्या शाब्दबोधऔत्सर्गिको यतो विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छेदकप्रकारकज्ञानस्याधिकस्य कारणत्वं

अभावेप्रतियोगिनः संबन्धतया भानात् अन्यथाविशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः॥ प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इति दर्शनात् केवलं विशेष्ये विशेषणमितिरीत्या न कश्चिदभ्युपैतीचेत्सत्यम् । अभेदस्ता-

---

विशेष्ये विशेषणमिति रीत्या जायमाने उपलक्षितवैशिष्ट्यावगाहिबोधे तु विशिष्टबुद्धिसामान्यं प्रति विशेषणज्ञानस्य कारणत्वमिति रीत्या विशेषणज्ञानस्यैव कारणत्वं ननु विशेषणतावच्छेदकप्रकारकज्ञानस्यापीति कारणलाघवम्, तथापि यत्र विशेषणतावच्छेदकप्रकारकज्ञानरूपकारणसंपत्तिस्तत्र विशिष्टवैशिष्ट्यावगाहिबोधोऽपि भवत्येव ॥ अभावविषयकस्तु विशिष्टवैशिष्ट्यावगाह्येवबोधः प्रायशो भवति यत्रापि क्वचिदभावप्रतियोगिप्रकारस्योपलक्षणत्वं तत्रापि न विशिष्टवैशिष्ट्यबोधमर्यादाभङ्गइत्याशयवानाह अन्यथाविशिष्टवैशिष्ट्येति यज्ज्ञानीयविशेषणान्वयिनिविशेषणांशे प्रकारीभूतोऽपि धर्मो भासते तद्ज्ञानं विशिष्टवैशिष्ट्यावगाहीत्युच्यते यच्च ज्ञानं नैवं किंतु विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति रीत्या जायते तदुपलक्षितवैशिष्ट्यावगाहीत्युच्यते तत्र गुणकर्मान्यत्वविशिष्टसत्तावान्गुणइति विशिष्टवैशिष्ट्यावगाहिज्ञानं न प्रमा यतोऽत्र गुणे भासमानायाः सत्ताया यद्विशेषणं गुणकर्मान्यत्वं तदपि गुणे भासते तच्च न गुणवृत्तीति अपितु द्रव्यधर्मिकमेवैतादृशं ज्ञानं प्रमेति उपलक्षितवैशिष्ट्यावगाहि तु गुणकर्मान्यत्वविशिष्टसत्तावान्गुणइति ज्ञानं प्रमैव यतोऽत्र गुणे सत्ता तस्यां गुणकर्मान्यत्वं भासते नतु गुणे गुणकर्मान्यत्वमपीति घटोनास्तीत्यादावभावप्रत्ययस्थले तु अभावांशे प्रतियोगितासंबन्धेन प्रतियोगि भासते । प्रतियोगिनि भासमानं घटत्वादिकमपि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावांशे भासते । अतोऽस्य प्रत्ययस्य विशिष्टवैशिष्ट्यावगाहित्वं भवति । घटत्वस्याभावांशे भानाङ्गीकारे स्वसमानाधिकरणप्रतियोगितादिसम्बन्धेन भानाङ्गीकारे या घटवत्यपि घटो नास्तीति प्रत्ययस्यप्रामाण्यापत्तिः । द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटविशिष्टस्याभावस्य तत्र सत्वात् । स्वसमानाधिकरणप्रतियोगित्वादिसम्बन्धेन घटत्वविशिष्टस्याभावस्य च तत्र सत्वात् । घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भानाङ्गीकारे तु तादृशसम्बन्धेन घटत्वविशिष्टाभावस्य घटवत्यसत्वात् । तत्र घटो नास्तीति प्रत्ययस्य न प्रमात्वसम्भवः इत्थञ्च घटोनास्तीत्यादिप्रतीतिर्घटादेः प्रतियोगितासम्बन्धमात्रमभावांशेऽवगाहते नतु द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वम् । एकस्मिन्नभावे द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वघटत्वमात्रावच्छिन्नप्रतियोगिताकत्वयोर्विरोधात् । प्रकृते च नीलःप्रतियोगितासम्बन्धेन विभक्त्यर्थे भेदे यदि भासेत तदा तत्र नीलत्वमपि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव भासेत । ननु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेति बोध्यम् केवलंविशेष्येविशेषणमिति विशेषणे प्रकारीभूतो यो धर्मस्तस्य विशेष्यासम्बद्धत्वमिह कैवल्यं विवक्षित् । तन्नाभावप्रत्ययेऽस्तीतिभावः । एतच्चेदानीमेव विशदीकृत्य प्रदर्शितम् । केवलपदोपादानात्प्रतियोगि-

दात्म्यम् तच्च स्ववृत्त्यसाधारणोधर्मः। असाधारण्यञ्च एकमात्रवृत्तित्वम्। तच्च स्वसामानाधिरण्य स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्मएव विशेषणविभक्तेरर्थः। वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते

---

प्रकारस्योपलक्षणत्वमपि क्वचिद्भवतीति सूचितम्। तेन गन्धप्रागभाववान्नास्तीत्यादौ रक्तो दण्डो नास्तीत्यादौ च प्रतियोगिप्रकारस्य गन्धप्रागभावरक्तत्वादेरुपलक्षणत्वोक्तिर्न विरुध्यते नन्वेवं पूर्वोक्तयुक्त्या प्रतियोगिप्रकारीभूतस्योपलक्षणत्वासम्भवः। विशिष्टवैशिष्ट्यावगाहिबोधमर्यादां नातिशेते इत्युक्तनियमविरोधश्चेति चेन्न पूर्वोक्तयुक्त्या अभावप्रत्यये प्रतियोग्यंशे प्रकारीभूतस्य हि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोग्यंशे भानमायातं नतु विशेषणत्वमेवेति उपलक्षणमपि रजतत्वादिकं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वेतीत्यनुपपत्तिविरहः। नच तथासति उपलक्षणत्वमेव व्याहतमिति वाच्यम् यतः प्रतियोग्यंशे प्रकारीभूतस्य प्रतीकाले प्रतियोगिनि विद्यमानत्वे तस्य विशेषणत्वम्। तादृशस्थलीयाभावप्रत्ययस्य च विशिष्टवैशिष्ट्यावगाहित्वं प्रतीतिकाले तस्य प्रतियोगिन्यविद्यमानत्वे तूपलक्षणत्वं तत्स्थलीयाभावप्रत्ययस्य चोपलक्षितवैशिष्ट्यावगाहित्वमिति। अतएवाभावप्रत्ययो विशिष्टवैशिष्ट्यावगाह्येव भवतीत्यनभिधाय मर्यादां नातिशेते इत्युक्तिः सङ्गच्छते मर्यादा त्वत्ररीतिः। तथाच विशिष्टवैशिष्ट्यावगाहिनो रीतिं विशेषणविशेषणांशे प्रकारीभूतधर्मोभयसम्बन्धावगाहित्वरूपामभावप्रत्ययो न व्यभिचरतीत्याशयः। इदन्तु बोध्यम् प्रतियोग्यंशे प्रकारीभूतस्यैव स्वावच्छिन्नत्वसम्बन्धेनाभावे भाननियमो नतु प्रतियोगितावच्छेदकांशे प्रकारीभूतस्यापीत्यतो घटत्वादिसमानाधिकरणोभयावृत्तित्वेनोपलक्षणीभूतधर्मेण तत्तद्व्यक्तित्वान्यनुगमय्य यत्रोक्तोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकास्तत्तद्घटादिव्यक्त्यभावाविवक्ष्यन्ते नतत्रोक्तोभयावृत्तित्वं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावे सम्बध्नाति तस्य प्रतियोग्यंशेऽप्रकारत्वात्। किन्तु प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वांश एव प्रकारत्वादिति स्वसामानाधिकरण्येत्वादि अत्र यत्किञ्चिदेकव्यक्तिभेदमुपादाय सङ्गमनीयम् घटत्वादिकन्तु यत्किञ्चित्तद्घटव्यक्तिभेदस्यानुयोगिन्यपरघटेप्रतियोगिनि तद्घटे च वर्तमानमतो नोभयावृत्तीति। नच तद्व्यक्तित्वस्यापि कालिकसम्बन्धेन तद्व्यक्तिभेदाधिकरणवृत्तित्वं तद्व्यक्तिभेदप्रतियोगिवृत्तित्वञ्चास्तीति वाच्यम्। उभयत्र वृत्तित्वस्य स्वरूपसम्बन्धेन विवक्षितत्वात्। नन्वेवं घटादावतिप्रसङ्गः। घटत्वे स्वरूपसम्बन्धेन वृत्तित्वविरहेणोक्तोभयसम्बन्धेन भेदविशिष्टत्वविरहादिति चेन्नस्वरूपसम्बन्धावच्छिन्नवृत्तित्वघटितोक्तोभयसम्बन्धेन भेदविशिष्टान्यत्वे सति स्वरूपेण वृत्तिमत्वस्य विवक्षितत्वात् घटत्वादौ तद्विरहान्नदोषइति बोध्यम्॥ स्ववृत्तिसाधारणधर्म इत्यत्र स्ववृत्तित्वांतर्भावेन विभक्त्यर्थतागौरवादतस्तस्य संसर्गमर्यादैवभानमित्याह वृत्तिश्चतत्रेति नन्वेवमपूर्वव्यक्तेः शाब्दबोधस्थले तद्व्यक्तित्वे श-

तादृशधर्मस्तत्तद्व्यक्तिरूप एव। अपूर्वव्यक्तिनिष्ठतादृशधर्मस्य विशिष्य ज्ञातुमशक्यत्वेऽप्येकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव। अभेदस्य संसर्गतामतेऽप्येतादृशानुगताभेदस्यैव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे घटो न नीलइति वाक्यजन्यबोधे प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमाविति न्यायेन तादृशाननुगतसंबन्धावच्छिन्नप्रतियोगिताकाननुगताभावाएव भासेरन्। ननु नीलवृत्तिरेकोऽभावः तथा सतियत्किंचित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीलेऽपि न नीलइत्यादिवाक्यस्यप्रामाण्यं स्यात्इदन्तु बोध्यम् विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ नञानीलाद्यभेदाभावएव प्रत्या

---

क्तिग्रहाभावात्तदनुपस्थित्या न तस्य प्रकारत्वसंभवइत्याशङ्कायामाह अपूर्वव्यक्तीति तथाच यत्किंचिद् घटादिनिष्ठतद्व्यक्तित्वे एकव्यक्तिमात्रवृत्तित्वग्रहादनुगतेन तेन रूपेण निखिलैकव्यक्तिमात्रवृत्तिधर्माः सामान्यलक्षणाप्रत्यासत्त्या सुग्रहाइत्यतो नानुपपत्तिरिति भावः॥ एतादृशानुगतेति एकव्यक्तिमात्रवृत्तिधर्मत्वेनानुगततत्तद्व्यक्तित्वादिरूपाभेदस्यैवेत्यर्थः॥ अभावकूटस्येति अत्रकूटपदं न कूटत्वेन संसर्गत्वाभिप्रायकम्किन्तु नीलो घटइत्यादौ नीलव्यक्तीनां घटव्यक्तीनां च बहुत्वात्बहवस्तत्तद्व्यक्तिभेदाभावाः बाधन्ते इति बोधनार्थं यत्र तु तन्नीलव्यक्तेस्तद्घटव्यक्तेरेवान्वयबोधःसइत्यादिवाक्याज्जायते तत्र तु एकएवतद्व्यक्तिभेदाभावो भासते इतिबोध्यम्॥ विशिष्यतथात्वेति तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन रूपेण भेदाभावस्य संसर्गत्वे इत्यर्थः॥ तुल्ययोगक्षेमाविति योगः प्राप्तिः लब्धपरिरक्षणंक्षेमः तुल्यौ योगक्षेमौ यस्येति बहुव्रीहिः तथाच यद्धर्मावच्छिन्ने येन संबन्धेन यद्धर्मावच्छिन्नस्यान्वयो नञ्समभिव्याहारविरहस्थले प्रतीयते नञ्समभिव्याहारस्थले तद्धर्मावच्छिन्ने तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावः प्रतीयते इति तात्पर्यार्थः॥ तादृशाननुगतेत्यादि अयंभावः नीलो घटइति शाब्दबुद्धौ तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाभावत्वेन रूपेणैका संसर्गता एवमपरेण तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेनापरा एवं क्रमेणानन्ताः संसर्गता अनन्ताश्चतदवच्छेदकताः कल्पनीया नत्वेकेति यावन्तस्तत्तद्व्यक्तिभेदाभावा भासेरन तावतामेकरूपेण संसर्गत्वासंभवः तत्तद्व्यक्तिभेदाभावकूटत्वेनानुगतरूपेण संसर्गता तु न संभवति तत्तद्व्यक्तित्वाच्छिन्नप्रतियोगिताकभेदाभावानां स्वस्वप्रतियोगिभेदप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वाश्रयेष्वेवसत्वात् तादृशाभावकूटाधिकरणस्याप्रसिद्धेः। इत्थंचाननुगतेनैव तत्तद्व्यक्तिभेदाभावसंसर्गेण नीलादिपदार्थानां घटादिपदार्थेष्वन्वयो वक्तव्यः तथासति नीलघटादावपि न नीलइति वाक्यस्य प्रामाण्यापत्तिः तथाहि उक्ततुल्ययोगक्षेमन्यायाद्धि नञ्समभिव्याहारस्थले तत्तद्व्यक्तिभेदाभावसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावा एव प्रत्येतव्याः प्र-

ययिष्यते नतु नीलादिभेदः। यादृशसमभिव्याहारस्थले येन सम्बन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्वं नञसत्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृशसम्बन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावबोधस्य व्युपत्तिसिद्धत्वात् प्रतियोग्यभावान्वयौ चेत्यादेरयमेवार्थः। एवञ्च नञो भेदबोधकत्वं न कुत्रापि सम्भवति। अनीलं घटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनानीलपदस्य नीलभिन्नपरतया नञोभेदवत्येव लक्षणायाउपगन्तव्यत्वात् इदन्तु तत्वम्। असमस्तनीलो घट इत्यादिस्थलेऽभेदस्य संसर्गतोपगमेऽपि गौरवविरहात्। तत्र विशेषणविभक्तेः वृत्तिकल्पनमनुचितम्। न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमते एवाभेदप्रकारकबोधस्य नीलोघटइत्यादिवाक्यादुत्पत्या

---

तियोगितावच्छेदकधर्मस्यानुगतत्वेऽपि संसर्गतावच्छेदकधर्मस्यानुगमाभावादुक्तसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावानां नानात्वस्यैव वाच्यत्वात् तेषां चाभावानां पीतघटादाविव तन्नीलघटादिव्यक्तिभिन्नायां अपरनीलघटादिव्यक्तावेवं क्रमेण सर्वत्रैव नीलघटादौ चालनीन्यायेन परस्पराभावसत्वातअतो न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेन संसर्गता अपि तु एकमात्रवृत्तिधर्मत्वेनानुगता तत्तद्व्यक्तित्वनिष्ठैव संसर्गता वाच्या। तथाचानुगतसत्सम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावस्यैकतया न तस्य नीलघटादौ सत्वमतो नानुपपत्तिरिति नीलवृत्तिरिति नीलात्मकघटादिवृत्तिर्नीलप्रतियोगिकोऽनुगतैकोऽभावइत्यर्थः एवञ्चेति भेदाभावस्य नञर्थत्वे चेत्यर्थः अभेदस्य संसर्गतया भानमुपपादयति इदन्तुतत्वमितिअसमस्तेति अथात्र नीलोघटइत्यादिस्थले इत्युक्त्यैव सामञ्जस्येऽसमस्तेत्युक्तिर्निरर्थिकेति चेन्न, नीलःपटइत्यादिसङ्ग्रहाय "नीलोघटइत्यादिस्थले" इत्यत्रादिपदोपादानस्यावश्यकतया आदिपदेन समासस्यापि बोधो मा भवतु एतदर्थं हि तदुपादानम्। "अभेदस्य संसर्गतया भानन्तुसमासस्थलएव" इति पूर्वमुक्तत्वात् समासस्यादिपदग्राह्यत्वे सन्दर्भविरोधः स्यादिति बोध्यम् वृत्तिकल्पनमिति वृत्तिर्नाम शाब्दबोधोपयिकः पदपदार्थसम्बन्धः। सच सङ्केतो लक्षणा च। तत्रास्माच्छब्दादयमर्थो बोद्धव्यः इदं पद ममुमर्थं बोधयतु इतिवेश्वरेच्छा तदीयविषयता वा सङ्केतः शक्तिरिति व्यपदिश्यते। एतादृशी चाधुनिकेच्छा परिभाषा। शक्यसम्बन्धश्च लक्षणेतिबोध्यम्। अनुचितमिति तथा च विकरणादेरिव विशेषणविभक्तेरपि पदसंस्कारकत्वमेव। विवादाध्यासिता विशेषणविभक्तिरर्थवती विभक्तित्वादितरविभक्तिवदित्यनुमानन्तु वृत्तिकल्पनागौरवप्रतिकूलतर्कपराहतमितिभावः। स्वारसिकलक्षणाग्रहोवेति विवक्षितार्थतात्पर्यानुपपत्तिप्रतिसन्धानमूला लक्षणा स्वारसिकलक्षणेत्युच्यते। यात्वनादितात्पर्य-

तादृशसमभिव्याहारज्ञानस्यद्विविधबोधे हेतुताद्वयं कल्पनीयम्। अभेदस्य संसर्गवादि नेतिगौरवम्। एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोर्योग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकम्प्रति तादृशशाब्दसामग्रीप्रतिबन्धकताया आधिक्यमिति वाच्यम्। अभेदस्य संसर्गतावादिनोक्तस्थलेऽपि तत्संसर्गकबोधस्यै वोपगमादिति दिक्। स्तोकं पचति मृदुपचतीत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेः धात्वर्थपाकादावभेदान्वयोऽपि व्युत्पत्तिसिद्धः। तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समधिभिव्याहारस्याप्यभेदान्वयबोधौपयिका-

---

वती सानिरूढलक्षणेत्युच्यते तादृशसमभिव्याहारेति नीलघटइति समभिव्याहारेत्यर्थः द्विविधबोधेति अभेदप्रकारकेभेदसंसर्गके च बोधे इत्यर्थः। हेतुताद्वयंकल्पनीयमिति नभेदसम्बन्धावच्छिन्ननीलत्वावच्छिप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रतिनीलोघटइत्याकाङ्क्षाज्ञानस्य कारणत्वं न सम्भवति। विनाप्युक्ताकाङ्क्षाज्ञानं श्यामः कुम्भइत्याद्याकाङ्क्षाज्ञानात्तथाविधशाब्दबोधस्य जायमानत्वेन व्यतिरेकव्यभिचारात् अतः कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशआवश्यकः। तथाच तन्मात्रस्यैव कार्यतावच्छेदकत्वं वाच्यम्। नत्वभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारत्वादेः प्रयोजनविरहात्। एवञ्च प्रकृते सुपदस्याभेदे शक्तिग्रहोलक्षणाग्रहो वास्तु किन्तेन, नहि ततः कार्यकारणभावभेदइति "हेतुताद्वयं कल्पनीयम्" इत्युक्तिरयुक्तेति चेन्नैवम्। कारणाव्यवहितोत्तरत्व मात्रस्य हि कार्यतावच्छेदकत्वे प्रवृत्याद्यनुपत्तिरिति प्रागेवाभिहितम्। अथवोक्तप्रकारेण कारणताद्वैविध्यासम्भवमवधार्य दूषणान्तरमाह एवमिति अयम्भावः अस्त्वाकाङ्क्षाज्ञानानां अव्यवहितोत्तरत्वघटितः कार्यकारणभावः तथाप्येकत्राभेदप्रकारकोऽपरत्राभेदसंसर्गकः शाब्दबोधः इति फलयोर्वैलक्षण्यमवश्यमभ्युपेयम्। तच्च कारणभेदं विना न सम्भवत्यतः एकत्र प्रकारकयोग्यताज्ञानसुपदशक्तिभ्रमादिभिर्घटिता सामग्री परत्र तु तद्रहितैवसामग्री वाच्या। तथाच विभिन्नविषयकप्रत्यक्षादिकं प्रतिद्वयोरपि शाब्दसामग्रयोः प्रतिबन्धकत्वं वाच्यम्। इत्थश्च संसर्गतामते न्नक्तप्रतिबन्धकत्वद्वयतदवच्छेदकत्वादिकल्पनागौरवम्। प्रकारतामते त्वभेदसंसर्गकशाब्दसामग्रयाएवाभावान्न तदंशे प्रतिबन्धकत्वादिकल्पनप्रितीलाधषमिति भावः उक्तस्थलेपीति यत्रु सुपदे शक्ति मो लक्षणाग्रहो वा तत्स्थलेऽपीत्यर्थः तत्संसर्गकबोधस्यैवोपगमादिति तथाच संसर्गतावादिनाऽभेदप्रकारकशाब्दसामग्रयेव न क्वलृप्ता अतो नैतन्मतेऽभेदप्रकारकशाब्दसामग्रयादेः प्रतिबन्धकत्वादिकल्पनमिति भावः। सिद्धान्तोप्यभेदस्य संसर्गतापक्षएव। सत्वादेः संसर्गपुर्वपक्षे "नीलोघटइत्यादौ" "विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वाद्" इति वक्ष्यति उभयवादिसम्प्रतिपन्नस्यैव दृष्टान्तत्वादिति बोध्यम कर्मत्वमिति नपुंसकत्वमित्यपि

काङ्क्षात्वमुपगम्यते क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्रकर्मत्वातिदेशात् । न चैवं स्तोकः पाक

द्रष्टव्यम् । तत्र नपुंसकत्वञ्च अनियतलिङ्गस्थलेएव । यच्च प्रातिपदिकमनपुंसकमेवनियतं तत्र नानेन नपुंसकत्वम् अतएव "जगाद मधुरां वाचं विशदाक्षरशालिनीम्" इत्यादौ वाचः क्रियाविशेषणत्वेऽपि न नपुंसकत्वम् स्पष्टं चैतत्पदवाक्यरत्नाकरे तृतीयाविवरणेऽन्यत्र चेति ॥ कर्मत्वातिदेशादिति मुख्यं कर्मत्वं धात्वर्थतावच्छेदकफलशालित्वरूपं स्तोकादौ नास्ति अतउक्तमतिदेशादिति । वस्तुत: "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इति वार्तिकघटकस्य "ततोऽन्यत्रापि दृश्यते" इत्यस्य "अन्यत्र क्रियाविशेषणस्थले द्वितीयादृश्यते" इत्यभिप्रायकस्यानुवादकमेव क्रियाविशेषणानां कर्मत्वमिति । तथाच नातिदैशिकमपि कर्मत्वं किन्तु द्वितीयामात्रमित्यत्र तात्पर्यं बोध्यम् अतएव पदवाक्यरत्नाकरे उक्तवार्तिकघटकस्य "ततोऽन्यत्रापिदृश्यते" इत्यस्य विवरणे "अन्यत्र स्तोकंपचतीत्यादौ क्रियाविशेषणस्थले" इत्युक्तं भाट्टरहस्येऽपि कथं तर्हि तत्र द्वितीयानियमइत्याशङ्कायां "ततोऽन्यत्रापिदृश्यते" इत्यनेनैव क्रियाविशेषणवाचकपदाद्द्वितीया समर्थितेति बोध्यम् । यत्तु धात्वर्थतावच्छेदकफलशालित्वरूपं मुख्यमेव कर्मत्वं स्तोकादेरपि वाच्यम् उक्तफलशालित्वञ्च तादात्म्य फलतावच्छेदकान्यतरसम्बन्धेन तत्र पाकात्मकफलस्य तादात्म्येन स्तोकादौ सत्त्वात् धातुमात्रस्य फलव्यापारवाचकत्वेन अकर्मकधातुस्थलेऽपि फलस्य धात्वर्थतावच्छेदकत्वात् न स्तोकं तिष्ठतीत्यादेरप्यनुपपत्तिः । न च सर्वस्यैव धातोर्व्यापारवाचकत्वे सकर्मकत्वाकर्मकत्वव्यवस्था नोपपद्यतइति वाच्यम् व्यापारस्य फलव्यधिकरणत्वे सकर्मकत्वं फलसमानाधिकरणत्वे चाकर्मकत्वमित्युपगमात् तथाच "कर्तुरीप्सिततमं कर्म इति कर्मसंज्ञया "कर्मणिद्वीतीया" इति द्वितीयेत्याहुः प्राञ्चो वैयाकरणास्तन्न मुख्यकर्मत्वस्य हि तत्रापि स्वीकारे कर्मणि लकारापत्त्या स्तोकःपच्यत इत्यादयः प्रयोगा आपद्येरन् । न च फलतावच्छेदकसम्बन्धमात्रेण धात्वर्थतावच्छेदकफलाश्रये कर्मणि लकारः स्वीक्रियतइति वाच्यम् । मन्दं गच्छति द्रुतंगच्छतीत्यादिप्रयोगानुपपत्तेः तथाहि संयोगात्मकं फलं न मन्दाद्यात्मकमतोऽत्रोक्तसंयोगानुकूलव्यापारएव मन्दादेस्तादात्म्येनान्वयो भवति । तथाच मन्दादौ तादात्म्येन धात्वर्थतावच्छेदकफलस्याभावात् मन्दादिवाचकपदाद् द्वितीया न स्यात् । न च क्रियाविशेषणद्वितीयाया अकारकविभक्तित्वे स्तोकपक्वाइत्यादौसमासानुपपत्तिः । असतिविशेषानुशासने कारकविभक्तिभिन्नविभक्त्यन्तेन समासस्यासाधुत्वात् । कारकविभक्तित्वोपगमे च न तदनुपपत्तिरितिचेदत्राहुः स्तोकं पक्वेति विग्रहे कर्मधारय एव समासः । न च पदद्वयार्थयोर्यत्राभेदो यत्र च पदद्वयस्य समानविभक्तिकत्वं तत्रैव कर्मधारयो नास्ति चैतत्प्रकृतइति वाच्यम् । यतो महाकविर्महाविज्ञ

इत्यादावपि द्वितीयाप्रसङ्गस्तत्रापिस्तोकादेः क्रियायामेव विशेषणत्वात् भावक्तां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम्। क्रियापदस्यतत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात् स्तोकं स्थीयत इत्यादावाख्यातस्यापि वर्तमानार्थकतया सार्थकत्वात् न च वर्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरिति वाच्यम् वर्तमानत्वादिविवक्षास्थलइव अर्थबोधस्वरूपयोग्यताप्रयोजकाका-

---

इत्यादाविव स्तोकादेः पाकादावेकदेशेऽन्वयेऽपि भवति समासस्य साधुत्वम्। समानविभक्तिकत्वन्तु उक्तसमासे नतन्त्रम् "तत्पुरुषः समानाधिकरणः कर्मधाधारयः" इत्यनुशासननं हि पदद्वययोः सामानाधिकरण्यमात्रमपेक्षते । सामानाधिकरण्यञ्च तदर्थयोरभेदएवेति। तथाचोक्तं शब्दशक्तिप्रकाशिकायाम् स्तोकपक्त्यादौ क्रियाविशेषणैः कर्मधारयएवेति। क्रियाविशेषणैः समासएवाव्युत्पन्न इति तु न देश्यम्। "स्तोकनम्रास्तनाभ्याम्" इत्यादेः कालिदासाद्यैः प्रयुक्तत्वादिति च॥ नन्वत्र पाकस्य घञन्तनामप्रतिपाद्यतया धातु प्रतिपाद्यत्वाभावात् न क्रियात्वमित्याशङ्कायामाह भावक्तामिति। प्रयोगसाधुत्वमात्रेति न च कर्तरि विहितस्य तृजादेः कर्तृरूपार्थइव भावविहितघञादेः भावएवार्थः कुतो न स्वीक्रियतइति वाच्यम्। "धात्वर्थः केवलः शुद्धो भावइत्यभिधीयते" इति व्याकरस्मृतेः। धात्वर्थरूपस्य भावस्य धातुतएव लाभात्। अनन्यलभ्यो हि शब्दार्थ इतिन्यायात् पुनस्तदर्थस्यभानासम्भवात्।धात्वर्थपाकप्रत्ययार्थपाकयोर्विरूपापस्थितत्वाभावात् घटोघटइत्याविव तत्रान्वयबोधासम्भवाच्चेति बोध्यम्। क्रियापदस्येति क्रियाविशेषणानामित्यनुशासनघटकस्येति शेषः। ननु तर्हि भावाख्यातस्यापिनिरर्थकत्वात् तत्समभिव्याहृतस्ताकादिपदाद् द्वितीयानुपपत्तिरित्याशङ्कायामाह स्तोकंस्थीयतइति ननुभगवदिच्छायाअविसंवादिनीत्वात पच्धातूत्तरघञ्प्रत्ययधर्मिकाया यत्किञ्चिदर्थविषयकबोधजनकत्वप्रकारिकायास्तस्या अभावेऽपि "करणाधिकरयोश्च" इति सूत्रेण करणादौ घञ्प्रत्ययस्य विधीयमानत्वेन घञ्पदं करणमर्थं बोधयतु इत्यादिभगवदिच्छावश्यं कल्पनीया। तस्याश्च घञत्वेन भावविहितघञोऽपि विषयत्वमतस्तत्रापि वृत्तिमत्त्वरूपं सार्थकत्वमस्त्येव। यदि चेश्वरेच्छाया अविसंवादिनीत्वादेव घञत्वेन भावविहितघञो नैतस्यां विषयत्वम्। अतिप्रसक्तस्यापि घञत्वस्य विषयतावच्छेदकत्वे बाधकाभावात् विषयतावच्छेदकत्वस्यातिप्रसक्तेऽपि स्वीकारादित्युच्येत तदा भावाख्यातस्थलेऽपि तेपदं वर्तमानकालं बोधयत्विति भगवदिच्छायामविसंवादिन्यामविवक्षास्थलीयाख्यातस्यापि शक्तिमत्त्वरूपसार्थकत्वाभावः समान इत्यतआह अर्थबोधस्वरूपेत्यादि अयं भावः अर्थबोधस्वरूपयोग्यत्वमर्थबोधजनकतावच्छेदक धर्मवत्त्वरूपं। तत्प्रयोजिकाकाङ्क्षा, आकाङ्क्षावदेवहि वाक्यमर्थंबोधयति।

ङ्काशालित्वेनैव तदविवक्षास्थलेऽपि भावाख्यातस्यार्थवत्त्वात् ॥ केचित्तु धातोरिव घञन्तस्यापि पाकादौ शक्तिरुपेयते ! अन्यथा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां तत्र-पाकादावन्वयानुपपत्तेः । प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेर्धा-

तस्याश्चानुपूर्वीविशेषरूपाया यथाविवक्षितार्थकभावप्रत्ययान्तस्थीयतइत्यादौ सत्त्वं तथा अविवक्षितार्थकभावप्रत्ययान्तस्थीयत इत्यादावपीत्यतः उभयत्र स्तोकं स्थीयत इतिप्रयोगोपपत्तिः। घञ्प्रत्ययस्थले च यदि पच्धात्वर्थघञ्प्रत्ययार्थयो-रन्वयबोधः स्यात् स्यात्तदा पच्धातुघञ्प्रत्यययोस्तथाविधाकाङ्क्षा स एव तु ना-स्तीति भावः ॥ भावकृदन्तस्थले समुदायशक्तिं मन्वानानां केषाञ्चिन्नैयायिकाना म्मतमाह केचित्त्विति॥ अन्यथासुब्विभक्त्यर्थेति अत्र सुप्पदं तिङोऽप्युपलक्षकं तेन तिङर्थकर्तृत्वादेर्धात्वर्थेन सममन्वयस्याव्युत्पन्नत्वात् प्रथमाप्रकृत्यर्थएवान्वयात्। पाकशब्दस्य शक्त्यनङ्गीकारे पाकोऽस्तीत्यादौ पच्धात्वर्थपाके सत्ताश्रयत्वैकत्व-योरन्वयानुपपत्तिरपि दोषः संगृह्यते ॥ कर्मत्वादीनां तत्रपाकादाविति तत्रेत्यस्य विवरणवाक्यं पाकादाविति अत्र षष्ठ्याः प्रतियोगित्वं सप्तम्याश्चानुयोगित्वं नार्थः। तथासति कर्मत्वप्रतियोगिकपाकाद्यनुयोगिकान्वयइत्यर्थो लभ्येत । स च नोपप-द्येत। कर्मत्वस्य धात्वर्थे एवान्वयस्य व्युत्पन्नत्वात्पाकादिप्रातिपदिकार्थेऽन्वया-नुपपत्तेरिष्टत्वेनासङ्गत्यापत्तेः किन्तु षष्ठ्याः सप्तम्याश्च प्रतियोगित्वानुयोगित्वोभ-यसाधारणं यन्निरूपितत्वत्वं तदाश्रयोऽर्थः तथाच पाकप्रतियोगिकः कर्मत्वानु-योगिको योऽन्वयस्तदनुपपत्तेरित्यर्थः॥प्रकृत्यर्थान्वितेति अत्र प्रकृतिपदेन स्वप्र-कृतिर्विवक्षिता तेन पच धातोर्घञ्प्रत्ययप्रकृतित्वेपि स्वपदग्राह्यसुप्प्रकृतित्वाभा-वान्न तत्र सुबर्थान्वय इति बोध्यम् ॥ नन्वत्र किं स्वनिरूपितप्रकृतित्वं न ताव-त्स्वपूर्ववर्तित्वं घटः पटश्चेत्यादौ घटपदादेरपि पटपदोत्तरवर्तिसुप्प्रकृतित्वापत्तेः नापि स्वाव्यवहितपूर्ववर्तित्वमागमादिव्यवहितयोर्धातुप्रातिपदिकयोः प्रकृति-त्वानुपपत्तेः । एवं बहुगुड इत्यादौ प्रकृतेः बहुच् प्रत्ययपूर्वत्वाभावात्प्रकृतित्वानु-पपत्तेरिति चेन्न स्ववृत्तित्वविशिष्टविधेयतानिरूपितोद्देश्यत्वमेव हि स्वनिरूपित प्रकृतित्वमुद्देश्यविधेयभावश्चेयमस्य प्रकृतिरिति विलक्षणानुभवसिद्धः प्रकृति-प्रत्यययोरागमविकरणादिव्यवधानेऽप्यस्त्येव । स्ववृत्तित्वस्यात्र विशेषणतया विवक्षितत्वात् पटपदोत्तरसुवृत्तित्वविशिष्टविधेयतानिरूपितोद्देश्यत्वस्य पटपद-एव सत्वं नतु घटादिपदेऽतो नापत्तिः ॥ अथ प्रकृत्यर्थत्वं यदि प्रकृतिवृत्त्युपस्था-प्यत्वं तदा कृदन्तनाम्नः समुदायशक्त्यनुपगमात् पाचकइत्यादौ पाककर्तुः प्र-कृत्यर्थत्वं न स्यात् तथाच तदन्वितैकत्वाद्यर्थकसुप्प्रत्यये उक्तव्युत्पत्तिर्न प्रवर्त्तेत न चास्तु तेषामपि समुदायशक्तिः नहि कश्चित्प्रमाणमन्तरेणानभ्युपगममात्रेण वस्तुसत्तां निषेधयितुमीष्टे इति वाच्यम्। यतो धात्वर्थभागस्य क्लृप्तशक्तिकै-र्धातुभिरेव भानसम्भवात् यद्यदर्थेऽनुशासनेन योयः कृत्प्रत्ययो विहितस्तत्तदर्थे तत्तत्कृत्प्रत्ययस्य शक्तिस्वीकारेण पाचकादिपदात्पाककर्त्राद्यात्मकविशिष्टवि-षयकान्वयबोधनिर्वाहे पुनरेकैककृत्प्रत्ययसमभिव्याहृतानन्तधातुघटितानन्त-

तूनाञ्चसुब्विभक्त्यप्रकृतित्वात् प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे पचन्तं पश्यती त्यादितः पचमानं पश्यतीत्यादितश्च पाकादौ द्वितीयाद्यर्थ कर्मत्वाद्यन्वयबोधप्रसङ्गात् एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र

---

कृदन्तसमुदायानामनन्तशक्तिकल्पने गौरवेण विशिष्टशक्तिकल्पने प्रमाणाभावस्तथाच प्रकृत्यर्थत्वं दुर्निरूपमेवेति चेन्न। प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतासमानाधिकरणनिरूपकतानिरूपितनिरूप्यतावद्वृत्तिप्रयोज्यविषयत्वमेवहि प्रकृत्यर्थत्वं तथाच पाचकइत्यादौ सुप्प्रत्ययनिष्ठविधेयतानिरुपिता योद्देश्यता सा प्रातिपदिकत्वावाच्छिन्ना प्रातिपदिकोद्देशेनसुप्प्रत्ययविधानात्। प्रातिपदिकञ्चनाखण्डस्फोटात्मकं तदनङ्गीकाराद्। किन्तु तत्तद्वर्णोत्तरतत्तद्वर्णरूपमेव, तथाच प्रकृतिघटकचरमवर्णनिष्ठैवोद्देश्यता पर्यवसन्ना एवं पाचकपदघटकाकपदनिरूपिता च या सङ्केतलक्षणान्यतररूपा कर्तृनिष्ठावृत्तिस्तन्निष्ठनिरूप्यतानिरूपिताकपदत्वावच्छिन्ननिरूपकताश्रयस्याकपदस्य च स्वरूपे विचार्यमाणे अकारोत्तरककारोत्तराकारएव स्वरूपं पर्यवस्यतीत्यतोऽकनिष्ठनिरूपकतापि चरमवर्णवर्तिन्येवेति भवति तथाविधोद्देश्यत्वनिरूपकत्वयोः समानाधिकरण्यं तथाच तादृशनिरूपकतानिरूपितनिरूप्यतावती या वृत्तिस्तत्प्रयोज्यविषयत्वस्य कर्तृरूपार्थेसत्त्वात् विशिष्टशुद्धयोरभेदेन पाककर्तर्यप्युक्तप्रकृत्यर्थत्वंस्य सत्त्वान्नानुपपत्तिः। उक्तरीत्योद्देश्यतायाश्चरमवर्णे एववृत्तितया च पाचकपदघटकपच्धातुनिष्ठनिरूपकताया नोक्तोद्देश्यतासामानाधिकरण्यमतो न पाचकइत्यादौ पाकस्य प्रकृत्यर्थत्वापत्तिः न वा पाकइत्यादौ भावप्रत्ययान्तप्रकृतिकेऽनुपपत्तिः तत्रापि सुनिष्ठविधेयतानिरूपिता या पाकपदनिष्ठा प्रातिपदिकत्वावच्छिन्नोद्देश्यता सा चरमवर्णे विश्रान्तापि तद्वर्णनिष्ठा या निरूपकता सा पाकरूपार्थनिष्ठशक्तिवृत्तिनिरूप्यतानिरूपिता पाकपदत्वावच्छिन्नैव पाकपदे समुदायशक्तेः स्वीकारात्। तथाच तादृश वृत्तिप्रयोज्यविषयतायाः पाकरूपार्थेसत्त्वादिति॥ ननु प्रकृत्यर्थान्वितस्वार्थेतिव्युत्पत्तिघटकप्रकृत्यर्थत्वंप्रकृतिजन्यबोधविषयत्वरूपंप्रकृत्यर्थप्रकृत्येकदेशार्थसाधारणमेव वाच्यमतो न समुदायशक्त्यनङ्गीकारेऽपि पाकइत्यादावनुपपत्तिः। पच्धातूपस्थाप्येन पाकेन सहैकत्वादेरन्वयबोधसम्भवादित्यतआह प्रकृत्येकदेशार्थेऽपीति॥

एकत्रेत्यादि अत्र त्रल्प्रत्ययद्वयं विशेष्यत्वार्थकं विशेष्यत्वद्वयञ्च विशेषणत्वद्वयेऽन्वेति प्रथमतृतीयार्थौ वैशिष्ट्यं तस्योपस्थितपदार्थेऽन्वयः। उपस्थितत्वञ्चोपस्थितिविषयत्वं तथाचोपस्थितीयविषयत्वविशिष्ठेविशेषणत्वस्यान्वये उद्देश्यतावच्छेदकीभूतं यदुपस्थितिविषयत्वं तत्प्रयोज्यत्वस्य विशेषणत्वे लाभोऽसतिबाधके उद्देश्यतावच्छेदकप्रयोज्यत्वस्यविधेये भानात्। धनवान् सुखी इत्यादौ तथा दृष्टत्वात्। एवञ्च तुल्यन्यायात् उक्तविषयत्वे विशेषणत्वप्रयोजकत्वमपि लभ्यते। द्वितीयतृतीयायाश्च प्रतियोगिकत्वमर्थः। तस्यान्वयेन सह सम्बन्धस्तथाच एकत्र विशेषणत्वेनोपस्थितस्य नान्यत्रविशेषणत्वेनान्वय इत्यस्यैकनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकोपस्थितीयविषयतावतोऽन्यनिष्ठविशेष्यतानि

प्रत्ययार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयान्वयइति ।चेत्तथापि पाकादिविशेषण तया सुवर्थसङ्ख्याया अन्वयसम्भवात् । यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाकादेश्च तदबाधितं तत्र पचन्तौ पश्यति पचमानौ पश्यतीत्यादिप्रयोगप्रसङ्गस्य दुर्वारत्वात् धातूपस्थाप्यार्थे सुवर्थान्वयबोधम्प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चि-दर्थपरत्वज्ञानस्य प्रतिबन्धकतामभ्युपगम्यैतादृशातिप्रसङ्गवारणे च गौरवात् ।

---

रूपितविशेषणत्वप्रतियोगिकसम्बन्धो न भवतीत्यर्थः पर्यवसितः । एवञ्च पशु-पदजन्यबोधे लाङ्गूलनिष्ठविशेष्यतानिरूपितलोमनिष्ठविशेषणत्वप्रयोजिका या लोमवल्लाङ्गूलाश्रयविषयकोपस्थितीयलोमनिष्ठाविषयता तद्वतो लोम्नोऽन्यनिष्ठ-विशेष्यतानिरूपितविशेषणत्वं न भवति । तत्रोक्तव्युत्पत्तिर्यथा प्रवर्तते तथा ययो-रर्थयोर्मध्ये एकस्य परस्मिन् विशेषणतयाऽन्वयएव तद्बोधकपदयोराकाङ्क्षा-नियमस्तत्तदर्थोपस्थापकपदद्वयघटितकृतद्धितान्तसमासादिस्थलेऽप्युक्तव्युत्पत्तिः प्रवर्तते तत्रापि या पाचकपचमानादिपदजन्यबोधीया कर्तृनिष्ठविशेष्यतानिरूपि-तपाकनिष्ठविशेषणता ताम्प्रति पाचकादिपदघटकपच्धातुजन्योपस्थितीयपाक-निष्ठविषयतायाः प्रयोजकत्वेन तद्विषयताश्रयस्य पाकस्य कर्तृभिन्नविशेषणत्वं न भवति । कर्तर्य्येव पाकस्यान्वये तत्र धातुप्रत्यययोः साकाङ्क्षत्वात्तथाच प्रत्यया-र्थनिष्ठविशेष्यतानिरूपितस्वार्थनिष्ठविशेषणताकबोधसामग्रयास्तदितरार्थविशेष्य कस्वार्थप्रकारकबोधं प्रति प्रतिबन्धकत्वं पर्यवसितम् ॥ अत्र तृतीयार्थस्तादात्म्यं तस्योपस्थितत्वेऽन्वयः । तथाचैकनिष्ठविशेष्यतानिरूपितवि-शेषणत्वाभिन्नोपस्थितीयविषयतावतोऽन्यनिष्ठविशेष्यतानिरूपितविशेषणत्वस-म्बन्धो न भवतीत्यर्थस्तु न सम्यक् पाचकादिशब्दानां सिद्धान्ते विशिष्टशक्तिविर-हेण पाचकादिपदघटकपच्धातोः पाकविशेष्यिकाया एवोपस्थितेर्जायमानत्वेनो-क्तविशेषणत्वाभिन्नोपस्थितीयविषयत्वस्यासम्भवादित्यवधेयम्॥ कर्मत्वस्यप्रकृत्य-र्थइवप्रकृत्यर्थैकदेशेऽपिविशेषणतयान्वयोऽव्युत्पन्न इत्यतःकर्मत्वान्वयापत्तिपरित्यज्य सङ्ख्यान्वयापत्तिमाह तथापीति॥ पाकादेश्चतदबाधितमिति इदञ्च योग्यताज्ञान-सम्पत्त्यर्थमुक्तम् धातूपस्थाप्यार्थे इति तथाच पचमानावित्यादौ शानच्प्रत्ययधर्मिक-स्यकर्तृपरत्वज्ञानस्य सत्त्वात् न धातूपस्थाप्यपाकादौ सुवर्थान्वयबोधः। पाकइत्या-दौ च घञ्प्रत्ययधर्मिकं न किञ्चिदर्थपरत्वज्ञानमतो धात्वर्थपाकादौ सुवर्था-न्वये बाधकाभावइति भावः । ननूक्तरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनेऽपि यत्र राजद्वयसम्बन्ध्येकःपुरुषोऽस्ति तत्र राजपुरुषौ पश्यतीति प्रयोगापत्तिर्न वार्यते राजपदार्थस्य धातूपस्थाप्यत्वाभावेन तद्धर्मिकसुवर्थान्वयबोधस्योक्तप्रति-बध्यतावच्छेदकधर्मानाक्रांततया राजपदार्थे द्वित्वान्वयबोधे बाधकाभावादिति चेन्न तत्तत्पदार्थधर्मिकसुवर्थान्वयबुद्धौ तत्तत्पदाव्यवहितोत्तरसुभिन्नपदधर्मिकतत्तत्प-दार्थान्वितार्थपरत्वज्ञानत्वेन प्रतिबन्धकत्वस्य विवक्षितत्वेनोक्तस्थले राजपदा-व्यवहितोत्तरपुरुषपदधर्मिकस्य राजपदार्थान्वितार्थपरत्वज्ञानस्य प्रतिबन्धकस्यैव

एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र शोभनाद्यभेदान्वयबोधानुपपत्तिः विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वात् । प्रकृत्येकदेशसाधारण तादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे तत्र ल्युडादेरधिकरणपरत्वेऽपि तथाविधान्वयबोधापत्तेः । कस्यचित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात् न चैव सुपकुम्भार्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपदात् कुम्भसमीपपिप्पल्यर्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थाभेदान्वयस्य चानुपपत्तिः । पूर्वपदस्य समासोत्तर विभक्त्यप्रकृतित्वादिति वाच्यम् तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यर्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाश्च स्वीकारात् । वस्तुतस्तु तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपार्धादौ प्रत्यया-

सत्त्वात् । अत्र तत्पदार्थान्वितेत्यस्यानुक्तौ घटपटावित्यादिद्वन्द्वस्थले पटपदधर्मिकार्थपरत्वज्ञानस्य प्रतिबन्धकत्वापत्त्या घटे द्वित्वान्वयबोधानुपपत्तिरतस्तदुक्तम् । तथाच पटपदधर्मिकस्य घटपदार्थान्वितार्थपरत्वज्ञानस्याभावान्नानुपपत्तिः । घटइत्यादौ घटधर्मिकैकत्वान्वयबुद्धौ सुपदधर्मिकस्य घटान्वितार्थपरत्वज्ञानस्यापि प्रतिबन्धकत्वापत्तिरतः सुब्भिन्नेत्युक्तम् ॥ अथ भावविहितघञो निरर्थकत्ववादिना भावविहितल्युटोऽपि निरर्थकत्वमेव स्वीकार्यम् । अतो न सुवर्थान्वयानुपपत्तिदोषोऽतो दोषान्तरमाह एवंशोभनमिति ॥ विशेषणविभक्तिसजातीयेति स्वसमानविभक्तिकपदोपस्थापितयोरेवाभेदः संसर्गविधया भासते इतिनियमादितिभावः ननु स्वसमानविभक्तिकपदविशिष्टपदोपस्थाप्यत्वमेवाभेदान्वयबोधोपयोग्याकाङ्क्षानिर्वाहकनियमो वाच्यः वैशिष्ट्यञ्च स्वतादात्म्य स्वघटकत्वान्यतरसम्बन्धेन । प्रकृते च तथाविधपदघटकत्वस्य पच्चूपदे सत्त्वान्नानुपपत्तिरनआह प्रकृत्येकदेशसाधारणेति ॥ अधिकरणपरत्वेऽपीति अधिकरणपरत्वग्रहेऽपीत्यर्थः ॥ तथा विधान्वयेति शोभनाभिन्नपाकान्वयेत्यर्थः । कस्यचित्प्रतिबन्धकतामिति धातूपस्थाप्यार्थद्वितीयान्तभिन्नप्रातिपदिकार्थयोरभेदान्वयबुद्धौ धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामित्यर्थः । अत्र स्तोकं पचतीत्यादौ सार्थकप्रत्ययान्त पच्धातूपस्थाप्यपाकादौ स्तोकादेरन्वयबोधोपपत्तये द्वितीयान्तभिन्नेत्युक्तम् ॥ गौरवादिति तस्मात् घञाद्यन्तसमुदायएव शक्तिःस्वीकार्येति भावः ॥ नचैवमिति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्त्यनुरोधेन घञाद्यन्तसमुदायस्य शक्तिस्वीकारेऽपीत्यर्थः ॥ विभक्त्यप्रकृतित्वादिति अनुपदोपपादितस्य प्रकृतित्वस्यात्र विभक्त्यव्यवहितपूर्ववर्तिवर्णे एव पर्यवसानादनुपदोक्तप्रकृत्यर्थत्वस्य समुदायघटकचरमपदार्थे एव पर्यवसानाच्च पूर्वपदार्थेन्वये प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः स्वसमानविभक्तिकपदोपस्थापितयोरेवाभेदः संसर्गविधया भासते इति व्युत्पत्तिश्च विरुध्यते अतउत्तरपदार्थे एव विभक्त्यर्थादेरन्वयः प्रसक्त इति भावः ॥ तदनुरोधेनैवेति उक्तव्युत्पत्तिद्वयानुरोधेनैवेत्यर्थः ॥ वस्तुतस्त्विति

र्थान्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावोऽप्याकाङ्क्षा एवं तत्र प्रातिपदिकान्तरार्थाभेदान्वयबोधे समानविभक्तिकयोस्तादृश पदपदान्तरयोश्च समभिव्याहारोऽप्याकाङ्क्षा तथा सत्यतिप्रसङ्गविरहात्। धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरार्थाभेदान्वयबोधे च ल्युड्घञाद्यन्तसमुदायप्रत्यययोरव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षात्वोपगमे दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुरुद्धरतया न तत्सम्भवः। अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टावाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तकसंज्ञात्वनिराकरणं दीधितिकृतांविरुद्धमिति चेत्काक्षतिः नहि कस्यचिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम् एवञ्च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैव यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव। तदुक्तं कातन्त्रपरिशिष्टकृता कथं स्तोकः पाकः कृदन्तविशेषणत्वात् धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति वदन्ति॥ तदर्थकपदोत्तरविभक्त्या संङ्ख्याबोधनेऽभेद

---

तथाच विभक्त्यादे रुत्तरपदेनाकाङ्क्षाविरहान्नतदर्थेन समं विभक्त्यर्थस्य प्रातिपदिकांतरार्थस्य चान्वयबोधप्रसङ्गः। एतदेवाह तथासत्यतिप्रसङ्गविरहादिति अत्रेदमालोचनीयम् उक्तरीत्याकाङ्क्षोपपत्तावपि उपपादितस्यप्रकृत्यर्थत्वस्यसमीपादौ विरहान्न सुवर्थस्यप्रकृत्यर्थेनसहान्वयोऽतउक्तप्रयोगस्यप्रामाण्यानुरोधेनोक्तव्युत्पत्तिसंकोचस्यावश्यकत्वात्पाकइत्यादावपिसंकोचे बाधकाभावःसमुदायशक्त्यनङ्गीकारे लाघवञ्चेति॥ ननु समुदायशक्त्यनङ्गीकर्तृभिरपि पाकइत्यादौ सुबर्थैकत्वादेर्धात्वर्थेऽन्वये घञन्तपाकपदसुप्पदयोरव्यवहितपूर्वापरीभावआकाङ्क्षा वाच्या एवं पचनमित्यादावपि तथाच तथाविधाकाङ्क्षाविरहादेव न पचमान इत्यादावेकत्वादेर्धात्वर्थेऽन्वयः स्यादितिशङ्कते धात्वर्थपाकादाविति॥ भावार्थकल्युट्प्रत्ययान्तपचनमित्यादिस्थलीयाकाङ्क्षाया अधिकरणार्थकल्युट्प्रत्ययान्तपचनमित्यादावपि सत्त्वादत्राप्येकत्वादेर्धात्वर्थेऽन्वयप्रसङ्गइत्याह दर्शिताधिकरणार्थकेति।।नैमित्तिकसंज्ञेति यस्याः संज्ञाया जातिविशिष्टेऽर्थे सङ्केतः सा नैमित्तिकसंज्ञेत्युच्यते।।धात्वर्थैकाधिकरण्ये त्विति धात्वर्थेन सहाभेदे विवक्षिते त्वित्यर्थः। अत्र धात्वैकाधिकरण्येत्वित्यपि पाठः। तत्र स्तोकपदस्येति शेषः। तथाच स्तोकपदस्य धातुप्रतिपाद्यान्वितस्तोकपरत्वे त्वित्यर्थः।।वदन्तीति अत्रास्वरसबीजन्तु गूढार्थतत्त्वालोके प्रपञ्चितं गुरुचरणैस्तत्रैव निरीक्षणीयं विशेषजिगृक्षुभिः।।तदर्थकपदोत्तरविभक्त्येति अत्र चैत्रो ग्रामं गच्छति ग्रामो गच्छतीत्यादौ ग्रामादेराधेयतासम्बन्धेनकर्मत्वादौ प्रकार-

सम्बन्धावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्र्यपेक्षिता। तादृशश्च बोधस्तदर्थविशेष्यकस्तदर्थनिरूपितभेदान्वयविषयकश्च नीलौ घटावित्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते। एवञ्च क्रियाविशेषण वाचकपदोत्तरविभक्त्या अबाधितयोरपि द्वित्वबहुत्वयोः प्रत्यायनासम्भवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव भावाख्यातस्थलवदित्यवधेयम्॥ अभेदान्वयबोधश्च

---

त्वेऽपिग्रामादावेकत्वद्वित्वाद्यन्वयबोधजननादुक्तमभेदसम्बन्धावच्छिन्नेति।नन्वेतेन किमायातमित्यतआह तादृशश्चबोधइति। नीलौघटावित्यादाविति वस्तुमात्रसाधारणस्य केवलैकत्वस्य नीलो घटइत्यादौ नीलेऽपि भानसम्भवात् द्विवचनान्तप्रयोगः प्रदर्शितः। ननु नीलघटपदार्थयोरभेदान्नीलपदमपि घटार्थबोधकं तथाचाभेदसम्बन्धावच्छिन्नप्रकारताभिन्ननीलपदार्थीभूतघटनिष्ठविशेष्यताशालिशाब्दसामग्र्याः सत्त्वान्नीलपदोत्तरविभक्त्या कुतो न नीलपदार्थे द्वित्वाद्यन्वयः एवं स्वाश्रयप्रमाणत्ववत्त्वसम्बन्धेन प्रमाणे एकत्वान्वये वेदाःप्रमाणमित्यत्र प्रमाणनिष्ठविषयताया अभेदसम्बन्धावच्छिन्नप्रकारतात्मकत्वात् प्रमाणे एकत्वान्वयानुपपत्तिश्चेति चेन्न तत्पदोत्तरविभक्तिप्रयोज्यसङ्ख्यानिष्ठप्रकारतानिरूपिततदर्थनिष्ठविशेष्यताकबोधम्प्रति अभेदसम्बन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठतत्पदप्रयोज्यविषयताकशाब्दसामग्र्यपेक्षितेत्यत्र तात्पर्यात् एवञ्च घटनिष्ठविषयताया घटत्वावच्छिन्नविषयतारूपाया नीलपदाप्रयोज्यत्वान्नीलनिष्ठविषयताया नीलपदप्रयोज्यत्वेऽपि तस्या उक्तप्रकारतात्मकत्वान्न नीलपदोत्तरविभक्त्या संख्यान्वयबोधापत्तिः। संख्यानिष्ठप्रकारतायां पर्याप्तिसम्बन्धावच्छिन्नत्वस्य विवक्षितत्वाच्च न वेदाःप्रमाणमित्यत्रानुपपत्तिरिति। न चैकज्ञानीयसमानाधिकरण विषयतयोरभेदपक्षे उक्तरीत्योक्तस्थले नीलादौ संख्यान्वयबोधवारणेऽपि तयोरवच्छेद्यावच्छेदकभावपक्षे नीलौघटावित्यादिस्थलेऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्नाया नीलत्वादिनिष्ठप्रकारतानिरूपितविशेष्यताया नीलादौ सत्त्वात्तत्र द्वित्वाद्यन्वयबोधापत्तिर्दुर्वारेति चेदुच्यते अभेदसम्बन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठतत्पदप्रयोज्यविषयतान्तस्यानुपदोक्तस्य अभेदसम्बन्धावच्छिन्नप्रकारताविशिष्टान्यविषयत्वमर्थः वैशिष्ट्यञ्चस्वप्रयोजकपदप्रयोज्योपस्थितीयविशेष्यताप्रयोज्यत्वसम्बन्धेन तथाच नीलोघट इत्यादौ नीलनिष्ठप्रकारताप्रयोजकनीलपदप्रयोज्योपस्थितीयानीलत्वनिष्ठप्रकारतानिरूपितनीलनिष्ठविशेष्यता तत्प्रयोज्यत्वस्य शाब्दबोधीयनीलत्वनिष्ठप्रकारतानिरूपितनीलनिष्ठविशेष्यतायां नीलत्वावच्छिन्नप्रकारतायाश्च सत्त्वेनोभयस्यामपि विषयतायामुक्तवैशिष्ट्यस्यैव सत्त्वात् घटत्वावच्छिन्नविषयतायान्त्वत्र तद्विशिष्टान्यत्वसत्त्वान्न दोषः॥एवञ्चेति विभक्त्या संख्याबोधने एतत्सामग्र्यामपेक्षितायां चेत्यर्थः॥असम्भवादिति निरुक्तसामग्र्यभावादिति शेषः तथाच तत्र संख्याप्रतिपत्त्यर्थं न विभक्तिप्रयोगः किन्तु न केवला प्रकृतिः प्रयोक्तव्येति न्यायात् पदसंस्कारार्थएव। एवञ्च यस्यां कस्यांचिद्विभक्तौ प्रयोक्तव्यायां

विरूपोपस्थितयोरेवेति व्युत्पत्तिः। घटोघटः दण्डवान् दण्डवान् पाकं पचतीत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वयबोधानुदयात्। अथ तत्प्रयोजकसमानविभक्तिकत्वादेः सत्त्वात्कथं न तादृशान्वयबोधः। अत्राहुः। यादृशं फलं क्वचित्प्रसिध्यति तादृशस्यैवापत्तिः सम्भवति कॢप्तसामग्रीवलात् यादृशं च सर्वथैवाप्रसिद्धं तादृस्य चापादकाप्रसिद्धे रापत्तिरशक्यैवेति घटत्वावच्छिन्नविशेष्यता-

प्राथमिकत्वात्प्रथमैकवचनमेव प्रयुज्यते अथवा यथाख्यातस्थले शप्श्यनादयः पद-संस्कारमात्रार्थका अपि प्रतिनियता एव तथा प्रथमैकवचनमेव पदसंस्कारकतयानि-यतं भिन्नान्यतः प्रथमैकवचनमेव प्रयुज्यते इति बोध्यम्॥ औत्सर्गिकमेकवचनमिति औत्सर्गिकं क्लीवत्वमपि तदप्यनियतलिङ्गकस्थल एवेत्युक्तमधस्तादिति॥ विरूपोप-स्थितयोरेवेति अत्र यदिषष्ठ्या विषयत्वमर्थः एवकारस्य चेतरव्यावर्तकस्य सरूपो-पस्थितविषयकत्वाभावोऽर्थस्तयोश्चाभेदान्वयबोधइत्यनेनान्वयस्तदा सरूपोप-स्थितविषयकत्वाभाववान् विरूपोपस्थितार्थद्वयविषयकोऽभेदान्वयबोध इत्यर्थः-स्यात् सच नयुक्तः नीलोघटः पीतोघटश्चेत्यादिवाक्यान्नीलाभिन्नघटविषयकपीता-भिन्नघटविषयक समूहालम्बनबोधस्य सरूपोपस्थितार्थद्वयविषयकस्यापि जाय-मानत्वात्। किन्तु प्रतियोगिनिरूपितत्वानुयोगिनिरूपितत्वोभयसाधारणनिरू-पितत्वत्वावच्छिन्नं षष्ठ्यर्थः तस्याभेदपदार्थेनान्वयः एवकारस्य चोक्तनिरू-पितत्वातिरिक्तव्यवच्छेदोऽर्थः तथाचोपस्थितीयविषयता शाब्दबोधीयाभेदत्वाव-च्छिन्नसंसर्गतात्वव्यापिकेति पर्यवसितोऽर्थः। व्यापकता च स्वावच्छेदकावच्छि-न्नप्रकारतानिरूपितत्व स्वभिन्नोपस्थितीयविषयतावच्छेदकावच्छिन्न विशेष्यता-निरूपितत्वोभयसम्बन्धेन। एवञ्च नीलोघटइत्यादौ अभेदत्वावच्छिन्नसंसर्गतायां नीलपदजन्योपस्थितीयविषयतायाः स्वावच्छेदकीभूतनीलत्वावच्छिन्नप्रकारतानि-रूपितत्व स्वभिन्नोपस्थितीयविषयतावच्छेदकीभूतघटत्वावच्छिन्नविषयतानिरूपित-त्वोभयसम्बन्धेन सत्त्वादुक्तनियमोपपत्तिः अथवा स्वनिरूपितप्रकारतावद्धर्मा-वच्छिन्नविषयतानिरूपितत्व स्वनिरूपितविषयत्वासमानाधिकरणविषयतावद्ध-र्मावच्छिन्नविषयतानिरूपितत्वोभय सम्बन्धेनोक्तव्यापकत्वंवाच्यंतेनोपस्थितीयवि-शेष्यतायाः प्रायशोऽनवच्छिन्नत्वेनस्वावच्छेदकधर्माप्रसिद्धावपि नक्षतिः विष-यतायां स्वनिरूपितत्वञ्चसाक्षात्परम्परासाधारणम्बोध्यम्। एवञ्च सरूपोपस्थि-तस्यापि पदद्वयार्थस्य किञ्चिदपेक्षया विरूपोपस्थितत्वेऽपि न क्षतिरित्यतिब-न्धेयम्॥ तथाविधान्वयेति अभेदान्वयेत्यर्थः। तत्प्रयोजकेति अभेदान्वयबोधप्रयो-जकेत्यर्थः॥ यादृशमिति यद्धर्मावच्छिन्नमित्यर्थः॥ आपादकाप्रसिद्धेरिति अयम्भाव आपत्तिर्नाम तर्कः तर्कयामीत्यनुभवसाक्षिकमानसत्वव्याप्यजातिविशेषाश्रयः। तं प्रति आपाद्यव्यतिरेकनिश्चय आपाद्यव्याप्यापादकवत्तानिश्चयश्च कारणम्। इत्थञ्च यदि क्वचिदप्यभेदसंसर्गकघटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशे-ष्यताकः शाब्दबोधः स्यात्। स्यात्तदा प्रकृते आपाद्यस्य तादृशशाब्दबोधस्य

काभेदसंसर्गक घटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः अथ घटो नीलघटः दण्डवान् रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्तर्हि घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका तदभावादेवघटो घटइत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित्।

---

व्यतिरेकनिश्चयः। तादृशशाब्दबोधव्याप्यंयदापादकं तथाविधान्वयबोधप्रयोजकसामग्रीरूपं तन्निश्चयश्चापत्तिकारणं न चायंबोधः क्वचित्प्रसिद्धोऽतो न तद्व्यतिरेकनिश्चयो नवा तद्व्याप्यापादकवत्तानिश्चयोऽतः कारणभावान्नापत्तिः सम्भवतीति भावः॥ अधिकावगाहिनइति उद्देश्यघटकनिखिलपदार्थान् विधेयघटकतयाऽवगाहमानस्येत्यर्थः। अभेदान्वयबोधस्थले विधेयस्यावश्यमुद्देश्यघटकाश्रयांशात्मकत्वमतो निखिलेत्युक्तं ॥ नवीनैरिति अनया च वाचोभङ्ग्या प्राचीनैरस्वीकृतत्वमिति सूचितम्। प्राचीना हि अभेदान्वयबोधस्थले उद्देश्यस्यापूर्वत्वाभावान्न विधेयत्वमतो घटो नीलघट इत्यादावपि नीलाभिन्नो घट इत्येवशाब्दबोधः। नचैवं नीलोघट इत्यत्रापि नैल्यमात्रस्य विधेयत्वमुचितं नत्वाश्रयांशस्यापीति वाच्यम्। नैल्यस्य घटेन सहाभेदान्वयस्य बाधितत्वात्सर्वानुभवसिद्धस्यात्र नीलघटयोरभेदान्वयबोधस्यापलापप्रसङ्गात्। सर्वो हि अभेदप्रतिपिपादयिषया नीलोघटइति वाक्यं प्रयुङ्क्ते नजातु कश्चित्परीक्षको नीलस्य घटइति। भेदप्रतिपिपादयिषयैव तु नीलस्य घट इत्यादिकं प्रयुङ्क्ते तत्र यदि नीलोघटइत्यादावपि भेदान्वयबोधएव स्यात् तदा भेदान्वयबुद्धौ समानवचनत्वस्यानियमेन क्व नीलोघटइति क्व च नीलस्य घटइति प्रयोक्तव्यमित्यगृहीतमूला शाब्दमतिः प्रति पुरुषं वारविलासिनीव विगतमर्यादैव स्यादतोऽकामेनापि आश्रयांशस्य विधेयकोटौप्रवेश आवश्यकः। घटो नीलघट इत्यादौ तु विधेयतया नीलस्यैव भानेऽपि न काचिदपि शाब्दमर्यादा भज्यते। अतस्तदंशस्यैव विधेयत्वमुररीकुर्वन्ति। तत्रार्वाचीनास्त्वेवमाहुः प्रवृत्त्युपयोगिविशिष्टविषयकज्ञानसम्पत्तिः संशयनिवृत्तिश्च वाक्यरचनाप्रयोजनमिति सार्वजनीनम् तथाच घटो नीलघटो नवेति संशयं बोद्धव्यपुरुषनिष्ठमनुमानादिना ज्ञात्वा तन्निवृत्तिमभीप्सवो नीलघटोघट इतिवाक्यं प्रयुञ्जते। तत्र यद्युक्तवाक्यान्नीलाभिन्नघटविषयकमेव शाब्दबोधमङ्गीकुर्यात्तदाऽयं शाब्दबोधोऽसमानप्रकारकतयोक्तसंशयं न प्रतिबध्नीयादतोऽगत्या विधेयांशेऽधिकावगाहिशाब्दबोध उपेयइति॥ स्वीकारादिति तथाचैतद्वाक्यजन्यशाब्दबोधस्य घटत्वावच्छिन्नविशेष्यताकस्य नीलघटत्वावच्छिन्नप्रकारताकत्वे घटत्वावच्छिन्नप्रकारताकत्वं सुतरामायातम् अधिकं प्रविष्टं नतु तद्धानिरिति न्यायात्। एवञ्च घटो घटइत्यादौ घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधोत्पत्तौ बाधकाभावइति भावः॥ घटाद्यंशेविशेषणतावच्छेदकेति ननु नीलोपस्थि-

तन्न। द्रव्यत्वादौ धर्मितावच्छेदकता संसर्गेण प्रसिद्धस्य शुद्धघटत्वावच्छिन्नप्रकारका भेदान्वयबोधस्य घटत्वादावापत्तिसंभवात्। नच तत्रापादकाभावः। तात्पर्यज्ञान-विशेषादिघटिताया धर्मितावच्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या

तिविरहेऽपि घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्द-बोधस्य घटो रक्तघट इत्यादौ जायमानत्वात्। एवं रक्तोपस्थितिविरहेऽपि पीतघटो घट इत्यादौ तादृशशाब्दबोधस्य जायमानत्वात् नीलाद्युपस्थिति-विरह उक्तशाब्दबोधेऽकिञ्चित्करएवेति कुतो न घटोघटइत्यादौ शाब्दबोध· इति चेन्न। घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्दबु-द्धित्वावच्छिन्नं प्रति हि न कश्चिदपि स्वातन्त्र्येण हेतुः। तथासत्यपि तद्धर्माव-च्छिन्नकार्यसत्त्वं तु नीलघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्य-ताकशाब्दबुद्धित्वादिरूपं यन्नीलघटो घट इत्याद्याकाङ्क्षाज्ञानजन्यतावच्छेदकं तद-वच्छिन्नसामग्रीप्रयोज्यमेव तस्याश्च सामग्र्यानीलादिपदजन्यनीलाद्युपस्थितिघटि-ताया अभावे उक्तकार्यसत्त्वासम्भवइति बोध्यम् धर्मितावच्छेदकतेति विशेष्यता-वच्छेदकतेत्यर्थः ननु धर्मिताप्रत्यासत्त्यैव कार्यकारणभावः कुतो नोपेयते धर्मि-भेदेप्येकधर्मावच्छिन्नाया धर्मिताया ऐक्यादनुगतेन तत्सम्बन्धेनाखिलधर्मिषु शाब्दबोधोत्पादे घटे शाब्दबोधउत्पद्यते इत्यादिर्धर्म्यंशे उत्पत्तिव्यवहारोऽप्युपद्यते इतिचेन्न। अपूर्वार्थविषयकशाब्दबोधो हि धर्मितासम्बन्धेनापूर्वेऽव्यक्तावपि जायते तत्र च योग्यताज्ञानादेस्तेनसम्बन्धेनासत्त्वादनुपपत्तिः द्रव्यत्वेनघटावगाहि नीलंद्र-व्यमितियोग्यताज्ञानसत्त्वे नीलोघट इति शाब्दबोधापत्तिश्चस्यात्। किञ्चैवं सतिद्रव्यत्वे शाब्दबोधउत्पद्यते इत्यादिव्यवहारानुपपत्तिः। द्रव्यत्वस्यधर्मितासम्ब-न्धेन कार्यानधिकरणत्वात्। नच धर्मिण्यप्युत्पत्तिव्यवहारस्येष्टतया धर्मितावच्छेद-तायाः प्रत्यासत्तित्वे धर्मिण्युत्पत्तिव्यवहारो न स्यादिति वाच्यम्। एतदुत्तरस्या-नुपदमेवोपपादयिष्यमाणत्वात्। शुद्धघटत्वावच्छिन्नेति केवलघटत्वावच्छिन्नेत्य-र्थः। विधेयांशेऽधिकावगाहिशाब्दबोधपक्षे घटत्वावच्छिन्नप्रकारताकशाब्दबोध-स्य घटत्वे इष्टत्वेनापत्त्यसम्भवादुक्तं शुद्धेति॥ आपत्तिसंभवादिति उक्तरीत्या आ-पाद्यतावच्छेदकधर्मस्य प्रसिद्धौ तदवच्छिन्नव्याप्यापादकवत्ताज्ञानादापत्तिसंभवा-दित्यर्थः। ननु ज्ञानापत्तिस्थले आपाद्यव्याप्यापादकवत्ताज्ञानस्य कारणत्वेऽपि कार्यापत्तिस्थले कार्यतावच्छेदकावच्छिन्नव्याप्यसामग्र्या एवापादकत्वात्। प्रकृते तस्या एवाभावान्नापत्तिः संभवतीत्याशङ्कते नचतत्रापादकाभावइति॥ तदुत्पादनि-यामकसामग्र्याएवेति ननु द्रव्यपदजन्यद्रव्यत्वप्रकारकोपस्थितियोग्यताज्ञानादि-घटिता द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारकशाब्दोबोधो-त्पादिका या सामग्री सा घटत्वेऽवर्तमाना कथं तत्र घटत्वावच्छिन्नप्रकारकशाब्द-बोधमापादयेदिति चेन्न। द्रव्यत्वे तदुत्पादनियामिका यादृशी सामग्री तादृश्या-एवेत्यर्थकत्वात्। तथाच द्रव्यपदजन्यद्रव्यत्वप्रकारकोपस्थितेः द्रव्यं घटइदंवाक्यं

एवापादकत्वात् । नच धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविषयकोपस्थिति तदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव । धर्मितावच्छेदकतायास्तत्कार्यताव-

घटान्वितद्रव्यपरमिति तात्पर्यज्ञानस्य द्रव्यत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकयोग्यताज्ञानस्याकाङ्क्षाज्ञानादेश्च सत्त्वे तद्घटितसामग्री यथा द्रव्यत्वे धर्मितावच्छेदकत्वसम्बन्धेन घटत्वावच्छिन्नप्रकारताक शाब्दबोधमुत्पादयति तथा घटपदजन्यघटत्वप्रकारकोपस्थितेः घटोघटइदंवाक्यं घटान्वितघटपरमिति तात्पर्यज्ञानस्य घटत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकयोग्यताज्ञानस्याकाङ्क्षाज्ञानादेश्च सत्त्वे तद्घटितसामग्री धर्मितावच्छेदकतासम्बन्धेन घटत्वेपि घटत्वावच्छिन्नप्रकारताकशाब्दबोधमुत्पादयेदित्यभिप्रायः । ननु यदि धर्मितावच्छेदकतायाः प्रत्यासत्तित्वं तदात्वियमापत्तिः सम्भवति । तथाहि कारणतावच्छेदकधर्मावच्छिन्नघटितसमुदायरूपैवसामग्री सा च स्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्या भवतीति सार्वजनीनम् एवंहि सति धर्मितावच्छेदकताप्रत्यासत्तिपक्षे घटत्वावच्छिन्नप्रकारताकज्ञानत्वरूपकारणतावच्छेदकधर्माश्रयीभूतं यद्घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानं तद्घटितसमुदायोऽपि सामग्री स्यात्। सा च घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधोत्पत्तिव्याप्यापि स्यात्। तदेव तु नास्ति किन्तु समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नं प्रति द्रव्यत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानं समवायेन कारणमिति रीत्याऽऽत्मनिष्ठप्रत्यासत्त्यैव कार्यकारणभावः । एवं सति घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य क्वचिदपि प्रसिद्धौ सत्यामेव घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकज्ञानस्य योग्यताज्ञानविधया कारणत्वं तद्घटितसमुदायस्य सामग्रीत्वञ्चकल्पनार्हम्। अन्यथा गगनकुसुमादिकं प्रत्यपि कस्यचित्कारणत्वकल्पनमुचितं स्यात् । तथाविधशाब्दबोधस्यचाप्रसिद्धौच नोक्तयोग्यताज्ञानस्य कारणत्वं न वा तद्घटितसमुदायस्य सामग्रीत्वं न चैतत्समुदायरूपायाः सामग्र्याः कार्योत्पत्तिव्याप्यत्वं नवाऽपत्तिः संभवतीत्याशयवान् शङ्कते नचेति॥ द्रव्यत्वादाविति यथा तन्तौ पटउत्पद्यते इत्यत्र सप्तम्यर्थावच्छेदकत्वस्योत्पत्तावन्वये तन्त्ववच्छिन्नोत्पत्तिमान् पटइत्यर्थो लभ्यते तथा प्रकृतेऽपि सप्तम्यर्थावच्छेदकत्वस्योत्पत्तावन्वये द्रव्यत्वावच्छिन्ना या घटत्वावच्छिन्नप्रकारताकशाब्दबोधोत्पत्तिस्तत्प्रयोजिकेत्यर्थो लभ्यते। सामग्र्येवेति एवकारो धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानादिघटितसमुदायस्य सामग्रीत्वं व्यवच्छिनत्ति।ननु कार्यतावच्छेदकसम्बन्धेन कार्यस्य कारणतावच्छेदकसम्बन्धेन कारणस्य वा यदधिकरणं तदेवोत्पत्त्यवच्छेदकम्। तद्धर्मावच्छिन्नायामेव कार्योत्पत्तौ तत्कार्यनिरूपिता या या कारणता तत्तदवच्छेदकधर्माश्रयघटितसमुदायरूपसामग्र्याःप्रयोजकत्वं चेति नियमोऽवश्यमुररीकार्योऽतएव कार्यतावच्छेदकसमवायसम्बन्धेन कार्यस्य घटस्याधिकरणं कारणतावच्छेदकतादात्म्यसम्बन्धेन कारणस्य कपाल-

च्छेदकताविरहेऽपि द्रव्यत्वादिनिष्ठायास्तत्कार्यतावच्छेदकधर्मघटकत्वात् तादृशसामग्रयाश्चात्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न सम्भवतीति वाच्यम्

---

स्य वाधिकरणं यत्कपालं तदवच्छिन्ना घटत्वाश्रयस्योत्पत्तिर्भवति। तस्यामुत्पत्तौ घटत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूतदंडत्वाद्यवच्छिन्नघटितसामग्र्याः प्रयोजकत्वं च भवति। अतएव च कपालादाविव न वृक्षादौ घटउत्पद्यते इत्थञ्च धर्मितावच्छेदकताया प्रत्यासत्तित्वानङ्गीकारे द्रव्यत्वे समवायेन कार्यस्य कारणस्य वाधिकरणत्वाभावात् द्रव्यं घटइति शाब्दबोधो द्रव्यत्वउत्पद्यते इत्यादिव्यवहारः कथमुपपद्येत कथं वा तदुत्पत्तिर्द्रव्यत्वेनावच्छिद्येत कथं वा तत्र सामग्रयाः प्रयोजकत्वं घटेतेत्याशङ्कायामाह धर्मितावच्छेदकतायाइत्यादि अयमाशयः उपदर्शितनियमघटकेन कारणस्यवाधिकरणमित्यन्तेन धर्मः संसर्गो वा साक्षात्परम्परया वा यः कश्चित्कार्यतावच्छेदकः कारणतावच्छेदको वा तदात्मकेन संसर्गेण कार्यस्यकारणस्यवाऽधिकरणंविवक्षितं यदि येन सम्बन्धेन कार्यता तेनैव सम्बन्धेन कार्याधिकरणं येन सम्बन्धेन कारणता तेनैव सम्बन्धेन कारणाधिकरणम्वा विवक्ष्येत तदा धर्मितावच्छेदकतायाः प्रत्यासत्तित्वपक्षे समवायस्य प्रत्यासत्तित्वपक्षे च द्रव्ये घटत्वावच्छिन्नप्रकारताकः शाब्दबोधउत्पद्यते घटे नीलत्वावच्छिन्नप्रकारताकः शाब्दबोधउत्पद्यते इत्यादयो व्यवहाराः कथमपि नोपपद्येरन् अवच्छेदकतासम्बन्धेन समवायसम्बन्धेन वा द्रव्यादेरुक्तशाब्दबोधानधिकरणत्वात् उक्तरीत्यातु नानुपपत्तिः तथाहि समवायस्य संसर्गत्वपक्षे द्रव्यत्वाद्यवच्छिन्नविशेष्यतायाः कार्यतावच्छेदककोटिप्रविष्टत्वेन परम्परया साऽपि कार्यताऽवच्छेदिका तेन च सम्बन्धेन द्रव्यादौ शाब्दबोधस्य सत्त्वात् धर्मितावच्छेदकतायाः संसर्गत्वे च तद्घटकधर्मिताऽपि संसर्गतावच्छेदिका तेन च सम्बन्धेन द्रव्यादौ शाब्दबोधस्य सत्त्वादिति। अनयैव च रीत्या स्वसमवायिसंयुक्तत्वसम्बन्धेन महौषध्यादिकम्प्रति तादात्म्येन हिमालयादीनां कारणत्वमुपेत्य हिमालये महौषधयउत्पद्यन्ते एवमेतत्सम्बन्धेन घटादिकम्प्रति तादात्म्येन कुलालगेहादेः कारणत्वमुपेत्य कुलालगेहे घटउत्पद्यते इत्यादयोऽपि व्यवहारा उपपादनीयाः इत्थञ्च समवायस्य प्रत्यासत्तित्वपक्षे द्रव्यवात्वच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वरूपो यः कार्यतावच्छेदकधर्मः तद्घटकं यद्द्रव्यत्वनिष्ठमवच्छेदकत्वं परम्परया कार्यतावच्छेदकीभूतं तदात्मकेन सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणत्वात्तदवच्छिन्नत्वमुत्पत्तौ तस्यां सामग्र्याः प्रयोजकत्वञ्चोपपद्यतएवेति न धर्मितावच्छेदकतायाः प्रत्यासत्तित्वस्यावश्यकताऽतो घटोघटइत्यादावापाद्यतावच्छेदकधर्मस्याप्रसिद्धत्वान्नापत्तिरिति भावः॥ तादृशसामग्र्याश्चेति अस्य व्याप्यतयेत्यनेन आ-

योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेनानन्तकारणताकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृशसम्बन्धेन धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात् घटत्वादिधर्मितावच्छेदककघटत्वाद्यवच्छिन्नप्रकारकयो-

---

पादकत्वं न सम्भवतीत्यनेन च सम्बन्धः॥धर्मितावच्छेदकंनिवेश्येति अयमभिप्रायः द्रव्यं घटइत्यादौ समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताकशाब्दबोधम्प्रति समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताकज्ञानत्वेन योग्यताज्ञानस्य कारणत्वमेवम्प्रमेयोघटइत्यादावपीत्येवं क्रमेण समवायस्यप्रत्यासत्तित्वपक्षे घटत्वावच्छिन्नप्रकारताकयोः शाब्दबोधयोग्यताज्ञानयोः कार्यकारणभावो विशेष्यतावच्छेदकधर्माणामानन्त्यादनन्तः स्यात् धर्मितावच्छेदकतायाः प्रत्यासत्तित्वपक्षे तु धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधे तेन सम्बन्धेन घटत्वावच्छिन्नप्रकारताकज्ञानत्वेन कारणत्वम्वाच्यमतो विशेष्यतावच्छेदकधर्माणामनन्तत्वेऽपि तेषां कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ वा प्रवेशविरहादेकएव कार्यकारणभावइति महालाघवम् नचैतत्पक्षे यदा चैत्रस्य घटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानं धर्मितावच्छेदकताप्रत्यासत्त्या द्रव्यत्वादौ नास्ति अस्ति च मैत्रस्य तदापि चैत्रस्य द्रव्यत्वादौ धर्मितावच्छेदकताप्रत्यासत्त्या घटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तिः मैत्रीयज्ञानस्य तथाविधस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ सत्वात् समवायस्य प्रत्यासत्तित्वे तु नापत्तिस्तत्पुरुषे पुरुषान्तरीयज्ञानस्यासमवेतत्वाद-तस्तद्वारणाय धर्मितावच्छेदकतासम्बन्धेन तत्पुरुषीयघटत्वावच्छिन्नप्रकारकशाब्दबोधम्प्रति तेन सम्बन्धेन तत्पुरुषीयघटत्वावच्छिन्नप्रकारकज्ञानत्वेन कारणत्वं वाच्यमेवञ्चविशेष्यतावच्छेदकधर्माणामिव पुरुषाणामप्यानन्त्यादेतत्पक्षेऽपि कार्यकारणभावानन्त्यमेवेति पक्षद्वयेऽपि न्यूनाधिकभावः परिच्छेत्तुमशक्यएवेति लाघवगौरवपरिज्ञानमेवदुर्घटमिति वाच्यम्। चैत्रादिषु दशसु पुरुषेषु घटादिदशविशेष्यकद्रव्यप्रकारकशाब्दबोधस्थले लाघवगौरवपरिज्ञाने ह्यन्यत्रापि तत्परिज्ञानं सुकरमेव तथाहि समवायस्य संसर्गत्वे समवायेन घटो द्रव्यमिति शाब्दबुद्धौ घटोद्रव्यमिति योग्यताज्ञानं समवायेन कारणमेवम्पटो द्रव्यमित्यत्रापीत्येवं क्रमेण दशविधविशेष्यप्रयुक्ता दश कार्यकारणभावा एवं घटादिष्विव पुरुषेष्वपि द्रव्यान्वयस्य योग्यतया समवायेन द्रव्यं चैत्रइति शाब्दबुद्धौ द्रव्यं चैत्रइति योग्यताज्ञानं समवायेन कारणमेवं द्रव्यंमैत्र इत्यत्रापीत्येवंरीत्या दशविधपुरुषप्रयुक्ता दश कार्यकारणभावाः सर्वेषाञ्च संकलने विंशतिः कार्यकारणभावाः पर्यवसिताः धर्मितावच्छेदकतापक्षे तु धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधे तेन सम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकयोग्यताज्ञानं कारणमिति रीत्या दशविध पुरुषप्रयुक्ता दशैवकार्यकारणभावाः नतु विशेष्यदशभेदप्रयुक्ता अपीति महल्लाघवम् इत्थञ्च धर्मितावच्छेदकतायाः प्रत्यासत्तित्वे सिद्धे घटत्वावच्छिन्नप्रकारताकज्ञानत्वरूपकारणतावच्छे-

ग्यताज्ञानबलादेव घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन तदापत्तेः नच योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदानुपस्थितत्वेऽपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्तिः। आत्मनिष्ठप्रत्यासत्त्याहेतुभूतां द्रव्यत्वाद्यवच्छिन्नोपस्थिति

---

दकस्य द्रव्यत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकज्ञानइव घटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकज्ञानेपि सत्त्वात्तद्घटितसमुदायस्यापि सामग्रीत्वं सम्भवतीति घटत्वे धर्मितावच्छेदकताप्रत्यासत्त्या घटत्वावच्छिन्नप्रकारकशाब्दबोधः कथन्नेति भावः॥ ननूक्तरीत्या योग्यताज्ञानस्य विषयनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे तस्योपस्थितिसहकारित्वं न घटेत उपस्थितेर्हि समवायेन तद्धर्मावच्छिन्नविषयताकशाब्दबोधे समवायेन तद्धर्मप्रकारकोपस्थितित्वेनैव कारणत्वं वाच्यं तत्तद्धर्मभेदेन कार्यकारणभावाननुगमेपि प्रकारान्तरस्य निर्वक्तुमशक्यत्वात् तथाच द्रव्यपदजन्योपस्थितिविरहेपि प्रमेयोघटइत्यादौ घटत्वावच्छिन्नप्रकारताकशाब्दबोधोत्पत्त्या घटत्वावच्छिन्नप्रकारकशाब्दबोधोत्पत्तौ द्रव्यपदजन्योपस्थितेरकिञ्चित्करत्वेन विनापि द्रव्यपदजन्योपस्थितिं द्रव्यं घटइति शाब्दबोधापत्तिरित्याशंकते नचेति वाच्यमिति परेणान्वयः॥ धर्मितावच्छेदकनिष्ठप्रत्यासत्त्येति धर्मितावच्छेदकनिष्ठायाऽवच्छेदकत्वरूपाप्रत्यासत्तिस्तयेत्यर्थः प्रत्यासत्तिः सम्बन्धः। प्रत्यासन्नेति सम्बद्धेत्यर्थः॥ शाब्दबोधापत्तिरिति समवायस्य प्रत्यासत्तित्वे तु द्रव्यत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वस्य कार्यतावच्छेदकतया तदाश्रयः शाब्दबोधो द्रव्यपदजन्योपस्थितिम्विना न क्वचिदप्युदेतीति भवति तदुपस्थितियोग्यताज्ञानयोः सहकारित्वमिति भावः॥ आत्मनिष्ठप्रत्यासत्त्येति समवायसम्बन्धेनेत्यर्थः॥ द्रव्यत्वाद्यवच्छिन्नोपस्थितिमिति अवच्छिन्नपदमत्राश्रयार्थकं तथाच द्रव्यत्वाश्रयविषयकोपस्थितिमित्यर्थः द्रव्यत्वप्रकारकोपस्थितिमिति यावत्। अथ तद्धर्मावच्छिन्नकार्योत्पत्तिः तद्धर्मावच्छिन्नकार्यम्प्रति यद्यद्धर्मावच्छिन्नं येन येन सम्बन्धेन कारणं तत्तधर्मावच्छिन्नकार्यस्य कार्यतावच्छेदकसम्बन्धेनाधिकरणे तत्तद्धर्मावच्छिन्नस्य कारणस्य कारणतावच्छेदकीभूतेन तेन तेन सम्बन्धेन वर्तमानस्य पूर्वक्षणवृत्तित्वमपेक्षते यस्य यस्य च वृत्तित्वमपेक्षितं तस्य तस्य परस्परसहकारित्वञ्च भवतीत्येतत्सार्वजनीनम् भवति च घटत्वावच्छिन्नम्प्रति तादात्म्येन कपालत्वावच्छिन्नस्य समवायेन कपालसंयोगत्वावच्छिन्नस्य स्वभ्रमिजन्यत्वादिसम्बन्धेन चक्रत्वाद्यवच्छिन्नस्य च हेतुत्वमतो घटत्वावच्छिन्नकार्यस्य समवायेनाधिकरणे कपाले कपालत्वावच्छिन्नस्यतादात्म्येन कपालसंयोगत्वावच्छिन्नस्य समवायेन चक्रत्वावच्छिन्नस्य स्वभ्रमिजन्यत्वेनैवं क्रमेण सर्वस्यैवकारणस्य स्वस्वकारणतावच्छेदकसम्बन्धेन वर्त्तमानत्वे सत्येव घटत्वावच्छिन्नस्योत्पत्तिरिति। इत्थञ्च घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नम्प्रति येन येन

मन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याकिञ्चित्करत्वादिति वाच्यम् । समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थि-

---

^ यद्यद्धर्मावच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नं घटत्वावच्छिन्नप्रकारताकशाब्दबोधरूपकार्यस्य धर्मितावच्छेदकतासम्बन्धेनाधिकरणे द्रव्यत्वे यदि वर्तमानंस्यात्स्यात्तदा द्रव्यंघटइति शाब्दबोधस्तेषां परस्परस्यसहकारित्वञ्च नचैतदस्ति उपस्थितेः समवायेन कारणत्वे द्रव्यपदजन्योपस्थितेः समवायेन द्रव्यत्वे वृत्तित्वविरहात् । तथाचानयारीत्या शाब्दबोधानुपपत्तेरेव सम्भवे आपत्तिप्रदर्शनमयुक्तम् । एवमनयैवरीत्या सहकारित्वस्यानुपपत्तिसम्भवे प्रमेयत्वादौ व्यभिचारम्प्रदर्श्य तदनुपपत्तिप्रदर्शनमप्ययुक्तम् किञ्चैवं घटत्वप्रकारकोपस्थितिरपि समवायेन द्रव्यत्वे नास्तीति तस्या अस्यसहकारित्वम्प्रदर्शयितुमुचितमिति चेन्मैवम् । तद्धर्मावच्छिन्नकार्योत्पत्तिः तद्धर्मव्यापका यावन्तः कार्यतावच्छेदकधर्मास्तत्तदाश्रयकार्यम्प्रति यद्यद्धर्मावच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नकारणस्य स्वस्वकार्यतावच्छेदकसम्बन्धेन तत्तद्धर्माश्रयकार्यस्याधिकरणे कारणतावच्छेदकसम्बन्धेन सम्बद्धस्य पूर्वक्षणवृत्तित्वमपेक्षते इत्यस्यापि नियमस्यावश्यकत्वात् अन्यथा विषयतासम्बन्धेन प्रत्यक्षम्प्रति तादात्म्येन विषयस्य कारणत्वेन त्वङ्मनोयोगादेः ज्ञानसामान्यम्प्रति समवायेनैव कारणत्वेन च विषयतासम्बन्धेन प्रत्यक्षाधिकरणे विषये घटादौ त्वङ्मनोयोगादेः समवायेन वृत्तित्वविरहेण तस्य विषयसहकारित्वन्नोपपद्येत उक्तरीत्या तूपपद्यते प्रत्यक्षत्वव्यापकीभूतज्ञानत्वाश्रयकार्यम्प्रति कारणस्य त्वङ्मनोयोगस्य स्वकार्यतावच्छेदकीभूतसमवायसम्बन्धेन प्रत्यक्षाधिकरणे आत्मनि कारणतावच्छेदकीभूतसमवायसम्बन्धेन पूर्वक्षणवृत्तित्वस्य सत्त्वात् तथाच घटत्वप्रकारकोपस्थितिमन्तरेण घटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नस्य न क्वाप्युत्पत्तिसम्भवः । घटत्वावच्छिन्नप्रकारताशाब्दबुद्धित्वव्यापकमुपस्थितिकार्यतावच्छेदकीभूतं यद्घटत्वावच्छिन्नविषयताकशाब्दबुद्धित्वं तदाश्रयकार्यम्प्रति कारणस्य घटोपस्थितेः स्वकार्यतावच्छेदकसमवायसम्बन्धेन तदाश्रयकार्यस्याधिकरणे आत्मनि पूर्वक्षणावच्छेदेन वृत्तित्वस्योक्तशाब्दबोधोत्पत्तावपेक्षितत्वात् द्रव्यत्वप्रकारकोपस्थितिकार्यतावच्छेदकस्य द्रव्यत्वावच्छिन्नविषयकशाब्दबुद्धित्वस्य घटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वाव्यापकत्वान्न द्रव्यत्वप्रकारकोपस्थितेः पूर्वकालसत्त्वापेक्षाऽतस्तद्विरहेऽपि घटत्वावच्छिन्नप्रकारकशाब्दबोधापत्तिः सम्भवतीति सोल्लिखिता इत्थञ्च कारणतावच्छेदकसम्बन्धेन यत्कारणाधिकरणं तदवच्छेदेन कार्योत्पत्तिप्राक्क्षणवृत्तित्वाभावएव सहकारिताविरहप्रयोजको वाच्यइति सर्वमवदातम् । तादृशप्रमेयत्वेत्यादि तादृशपदमात्मनिष्ठप्रत्याहेतुभूतेत्यर्थकं तस्योपस्थितावन्वयः । अकिञ्चित्करत्वादिति

तेः शाब्दबोधे हेतुत्वोपगमात् येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यम्प्रति

कार्यप्रतिरोधाक्षमत्वादित्यर्थः। शाब्दबोधे हेतुत्वोपगमादिति अथोक्तरीत्योपस्थितिसहकारित्वस्य योग्यताज्ञाने उपपत्तावपि तत्राकाङ्क्षाज्ञानसहकारित्वानुपपत्तिरस्त्येव घटो द्रव्यमित्याकाङ्क्षाज्ञानमन्तरेणापि घटत्वावच्छिन्नप्रकारकयोग्यताज्ञानस्य प्रमेयो घटइत्यादौ फलजनकत्वात् घटो द्रव्यमित्याकाङ्क्षाज्ञानस्य घटत्वावच्छिन्नप्रकारताकशाब्दबोधोत्पत्तावकिञ्चित्करतया तद्विरहेऽपि योग्यताज्ञानादिना घटो द्रव्यमिति शाब्दबोधापत्तिरिति चेन्न तद्धर्मावच्छिन्नकार्योत्पत्तिस्तद्धर्मव्याप्यकिञ्चिद्धर्मावच्छिन्नकार्यम्प्रति यद्यद्धर्मावच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नस्य स्वस्वकार्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नकार्याधिकरणे कारणतावच्छेदकसम्बन्धेनवर्त्तमानस्य पूर्वक्षणवृत्तित्वमपेक्षते इत्यस्य व्यापकधर्मावच्छिन्नकार्योत्पत्तौव्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षितत्वनियमस्वरूपभूतस्याप्यावश्यकत्वेन प्रकृते घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वव्याप्योयो घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधत्वादिधर्मो घटो द्रव्यमित्याद्याकाङ्क्षाज्ञानजन्यतावच्छेदकीभूतस्तदवच्छिन्नं घटो द्रव्यमित्याद्याकारकशाब्दबोधरूपकार्यम्प्रति घटो द्रव्यमित्याद्याकाङ्क्षाज्ञानत्वावच्छिन्नस्य कारणस्य स्वनिरूपितायाकार्यतातदवच्छेदको यः समवायसम्बन्धस्तेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधरूपकार्यस्याधिकरणे आत्मनि कारणतावच्छेदकसमवायसम्बन्धेन तदुत्पत्तिप्राक्क्षणावच्छेदेन वृत्तित्वविरहेण घटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तेरसम्भवात्। अथैवमपि घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वव्याप्यीभूतं यद्घटत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वं तदवच्छिन्नकार्यस्य कारणं घटः प्रमेयइत्याकाङ्क्षाज्ञानमपि तस्य समवायेनात्मनि सत्त्वे प्रमेयत्व इव द्रव्यत्वेऽपि घटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तिः नच द्रव्यत्वे प्रकारतासम्बन्धेनोपस्थित्यभावादेव न दोषइति वाच्यं प्रमेयोघटः द्रव्यंपट इति समूहालम्बनाकाङ्क्षाज्ञानदशायां द्रव्यपदजन्याया उपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वे सत्त्वाद्द्रव्यंघटः प्रमेयो घटः द्रव्यं पट इति समूहालम्बनशाब्दबोधापत्तौ बाधकाभावादिति चेन्न घटत्वावच्छिन्नप्रकारताकद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति घटो द्रव्यमित्यादिवाक्यधर्मिकस्य इदम्वाक्यं घटान्वितद्रव्यपरमिति तात्पर्यज्ञानस्यापि कारणतया तस्यस्वनिरूपितकार्यतावच्छेदकीभूतसमवायसम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधरूपकार्यस्याधिकरणे आत्मनि समवायेनोक्तशाब्दबोधोत्पत्तिप्राक्क्षणे वृत्तित्वविरहेणापत्त्यसम्भवात् नच स्वग्राहकप्रकरणज्ञानेनान्यथासिद्धं तात्पर्यज्ञानं न हेतुरिति वाच्यं प्रकरणज्ञानस्याननुगतरूपेण कारणत्वासम्भवात्तात्पर्यज्ञानस्यकारणताया आवश्यकत्वादिति। तात्पर्यज्ञानस्याहेतुत्वपक्षसाधारणो तूक्तापत्तिवारणरीतिस्तु गूढार्थतत्त्वालोके प्रदर्शिताऽस्मद्गुरुचरणैः।गदाधरभट्टाचार्याणान्तु सर्वत्रैव शाब्दबोधे तात्पर्यज्ञानस्य कारणत्व-

येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन सम्बन्धेन तद्धर्मावच्छिन्न-कार्योत्पादकसामग्र्या अपि तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षिततया प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थित्यसत्त्वे तत्र धर्मितावच्छेदक-तासम्बन्धेन शाब्दबोधापत्तेरयोगात् नच यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञा-नजन्यप्रमेयत्वाद्यवच्छिन्नविषयकोपस्थितावेव उद्बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्न-स्य भानं तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविषय-कशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थि ते हेतुता वाच्या तथाच प्रकारविशेषनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या

---

मभिमतमित्यग्रिमबहुस्थललेखस्वारस्यात्प्रतीयते अतएवाग्रे तात्पर्यज्ञानेनैव निर्वा-हात्समभिव्याहारज्ञानस्य कारणत्वं निराकरिष्यते इति बोध्यम्॥ ननूपस्थितिः प्रकारतासम्बन्धेन शाब्दबुद्धित्वरूपसामान्यधर्म मात्रावच्छिन्नम्प्रति हेतुर्नतु घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वरूपविशेषधर्मावच्छिन्नम्प्रत्यतो द्रव्यत्वप्र-कारकोपस्थितिविरहेऽपि योग्यताज्ञानादिना तत्रधर्मितावच्छेदकतासम्बन्धेन घट-त्वावच्छिन्नप्रकारताकशाब्दोत्पत्तौ बाधकाभाव इत्यत आह येन सम्बन्धेनेत्यादि तथाच धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वाव-च्छिन्नम्प्रति प्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं व्यापकमतः प्रकारता-सम्बन्धेन शाब्दोत्पादकसामग्र्याः प्रकारतासम्बन्धेनोपस्थित्यादिघटिताया अपि धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दोत्पत्तावपेक्षितत्वान्ना पत्तिः तदेतदाह प्रकारतासम्बन्धेनेत्यादिना नन्वेवं प्रकारता सम्बन्धेन घटत्वे उप-स्थितिविरहदशायामपि धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे घटत्वावच्छिन्नप्रका-रताकशाब्दबोधापत्तिर्दुर्वारा उक्तरीत्यनुसरणेऽपि घटत्वप्रकारकोपस्थित्यपेक्षणस्या-प्राप्तत्वादिति चेन्न द्रव्यं घटइति शाब्दबोधो यथा धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे उत्पद्यते तथाऽयं प्रकारतावच्छेदकतासम्बन्धेनघटत्वेऽप्युत्पद्यतएव एकत्रै-वोत्पद्यते इत्यत्र विनिगमकाभावात् तथाच प्रकारतावच्छेदकतासम्बन्धेन द्रव्यत्वा-वच्छिन्नविशेष्यताकशाब्दबोधम्प्रति तेन सम्बन्धेन द्रव्यत्वावच्छिन्नविशेष्यातक-ज्ञानत्वेनापि योग्यताज्ञानेकारणत्वस्य वाच्यतया प्रकारतावच्छेदकतासम्बन्धेनद्रव्य-त्वावच्छिन्नविशेष्यताकशाब्दबोधस्योत्पत्तौ तद्व्यापकीभूतस्य प्रकारतासम्बन्धेन शाब्दबोधस्योत्पादप्रयोजिकायाः प्रकारतासम्बन्धेनोपस्थितिघटितसामग्र्या अप्य-पेक्षितत्वात् प्रकारतासम्बन्धेन घटत्वे उपस्थितिविरहे तदवच्छिन्नप्रकारताक-शाब्दबोधस्योत्पत्तेरसम्भवादिति ॥ उपस्थितिशाब्दबोधयोरात्मनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भाववादी पुनः प्रत्यवतिष्ठते नचयत्रेति ॥ तत्रद्रव्यत्वाद्यवच्छिन्नेति तदु-पस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वेऽपि सत्त्वादित्यादि। हेतुतावाच्येति एवं सति प्रकृते द्रव्यत्वावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यद्रव्यत्वप्रकारकोपस्थितेरभावान्नाप-

हेतुत्वकल्पनमयुक्तम् तथासति पुरुषभेदेन कार्यकारणभाववाहुल्यप्रसङ्गइति वाच्यम्। स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशापत्तेर्वारणात्। नच पदार्थेऽपि प्रकारतासम्बन्धेन शाब्दवोधोत्पत्त्या तत्र प्रकारतासम्बन्धेन पदार्थोपस्थितेरभावात्प्रकारनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्येति वाच्यम् परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य वारणीयत्वादिति चेत्तर्हि तद्धर्मावच्छिन्ना-

---

त्तिरिति भावः। एवञ्चात्र प्रकारतासम्बन्धेन तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति प्रकारतासम्बन्धेनोक्तवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेन न कारणत्वम्वाच्यम् तथासति चैत्रस्य द्रव्यत्वप्रकारकोपस्थितिसत्त्वे मैत्रस्य द्रव्यत्वावच्छिन्नविषयकशाब्दबोधापत्तेः तदीयोपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वे सत्त्वादतस्तद्दोषवारणाय तत्तत्पुरुषीयत्वस्य कार्यतायाः कारणतायाश्चावच्छेदककोटौ प्रवेशनीयतया विषयपुरुषयोरुभयोरेव प्रवेशान्महागौरवमतःसमवायप्रत्यासत्त्यैवकार्यकारणभावोवाच्यइत्याह तथाचेत्यारभ्यवाहुल्यप्रसङ्गइत्यन्तेन। स्वजनकज्ञानीयेत्यादि स्वपदमुपस्थितिपरम् जनकत्वमत्राव्यवहितपूर्ववर्त्तित्वमात्रमधिकप्रवेशे प्रयोजनाभावात्। अवच्छेदकताविशिष्टेति अत्रोक्तावच्छेदकतामात्रस्य संसर्गत्वे यत्र द्रव्यं द्रव्यपदशक्यं प्रमेयं प्रमेयपदशक्यमित्याकारकसमूहालम्बनवृत्तिज्ञानं प्रमेयं प्रमेयपदशक्यमित्यंशेऽप्रामाण्यज्ञानास्कन्दितं तत्र तदनन्तरं जायमानोपस्थितिर्द्रव्यत्वमात्रप्रकारिकापि स्वजनकज्ञानीया या वृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता तत्सम्बन्धेन द्रव्यत्वइव प्रमेयत्वेऽप्यस्त्यतः प्रमेयत्वेऽपि प्रकारतासम्बन्धेन शाब्दबोधापत्तिरतउक्तावच्छेदकताविशिष्टप्रकारत्वस्य संसर्गत्वमुक्तम् वैशिष्ट्यञ्च स्वप्रयोज्यत्वसम्बन्धेन उपस्थितीया यादृशसम्बन्धावच्छिन्ना यादृशरूपावच्छिन्ना निरवच्छिन्ना वा या विषयता तस्याः तादृशसम्बन्धावच्छिन्ना तादृशरूपावच्छिन्ना निरवच्छिन्ना वा या वृत्तिज्ञानीयविषयता साप्रयोजिका भवतीति स्वीकारात् तथाच प्रकृते स्वप्रयोज्यत्वसम्बन्धेनोक्तावच्छेदकताविशिष्टायाप्रकारतातत्सम्बन्धेनोपस्थितिर्द्रव्यत्वनिष्ठैव नतु प्रमेयत्वनिष्ठापीति नदोषः इतिभाव॥हेतुतांस्वीकृत्येति प्रकारतासम्बन्धेन शाब्दबोधम्प्रतीति शेषः। ननु घटोद्रव्यमिति शाब्दबोधः प्रकारतासम्बन्धेन घटेऽप्यस्ति तत्र च प्रकारतासम्बन्धेनोपस्थितिर्नास्ति घटपदाद्घटविशेष्यिकाया एवोपस्थितेर्जायमानत्वादित्याशंकते नचपदार्थेऽपीति पदार्थश्चात्र पदवृत्तिज्ञानीयमुख्यविशेष्यः। प्रकारनिष्ठप्रत्यासत्त्येति प्रकारतासम्बन्धेनेत्यर्थः। परामर्शकारणतेत्यादि तत्रायम्विचारः धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकपरामर्शत्वेन कारणत्वे यत्र भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानो-

भेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापिहेतुतायाः स्वीकरणीयतया न घटोघटइत्यादिस्थले शाब्दबोधापत्तिः सघट इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदककस्य घटः सइत्यादिवाक्यात् स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य जातित्वादिविशिष्टं घटत्वावच्छिन्नप्रकारताकस्य शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये। घटो नीलघटइत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्रदर्शितरीत्या सोऽप्युपपादनीयः

---

त्तरं वह्निव्याप्यधूमवान्पर्वतइति परामर्शस्तदनन्तरं वह्निव्याप्यालोकवद्द्रव्यमिति परामर्शस्ततः पर्वतोवह्निमान् द्रव्यंवह्निमदिति समूहालम्बनानुमितिस्तत्र तस्याधूमालोकोभयलिङ्गिकाया द्रव्यत्वपर्वतत्वोभयस्मिन्नेव धर्मितावच्छेदकतासम्बन्धेन सत्वादुक्तपरामर्शयोरेकतरस्याप्युभयत्रतेनसम्बन्धेनासत्वाद्व्यभिचारोऽतस्तलिङ्गकपरामर्शधर्मितावच्छेदकताविशिष्टावच्छेदकतायाः कार्यतावच्छेदकसम्बन्धत्वं वाच्यं तथाच धूमलिङ्गकपरामर्शधर्मितावच्छेदकतायाः पर्वतत्वनिष्ठायाः स्वप्रयोज्यत्वसम्बन्धेन वैशिष्ट्यं पर्वतत्वनिष्ठायामेवावच्छेदकतायामतस्तादृशावच्छेदकतासम्बन्धेनानुमितेः पर्वतत्वएव सत्वं नतु द्रव्यत्वेऽप्येवमालोकलिङ्गकानुमितेरप्युक्तसम्बन्धेन द्रव्यत्वएव सत्वं नतु पर्वतत्वेऽपीति नदोषः। एवमेव प्रकृतेऽपि स्वजनकोपस्थितीयप्रकारताविशिष्टप्रकारतायाः कार्यतावच्छेदकसम्बन्धत्वं वैशिष्ट्यञ्च स्वप्रयोज्यत्वसम्बन्धेनवक्तव्यमतो न दोषइति भावः। विशेषणीयेइति तथाच तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारताकविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदः कारणमिति पर्यवसितम्॥ विधेयांशेऽधिकावगाहिनः शाब्दबोधस्य प्राचामनभिमतत्वादाह प्रामाणिकत्वेइति। अन्यत्रदर्शितेति अयम्भावः तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रकारताकविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य कारणत्वं वाच्यं तथाच घटत्वावच्छिन्नविशेष्यताकनीलघटत्वावच्छिन्नप्रकारताकशाब्दबोधस्योक्तकार्यतावच्छेदकानाक्रान्ततयानानुपपत्तिरिति॥ अथैवमपि नीलघटो नीलघटइति शाब्दबोधस्यापत्तिस्तस्याप्युक्तकार्यतावच्छेदकानाक्रान्तत्वेनोक्तभेदात्मककारणस्यानपेक्षितत्वात् नच तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदः कारणं वृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन अवच्छेदकत्वञ्च साक्षात्परम्परासाधारणं विवक्षणीयं तथाच तथाविधानुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबोधस्य नीलत्वनीलघटत्वैतद्द्वतसमुदायत्वे वृत्तित्वं तत्र तत्समुदायत्वभेदस्यासत्वान्नापत्तिरिति वाच्यं नीलघटोघटइत्युद्देश्यांशेऽधिकावगाहिशाब्दबोधापत्तेः नीलत्वनीलघटत्वैतत्समुदायत्वे घटत्वगतै-

ससइत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताक तद्धर्मावच्छिन्नप्रकारताव-च्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपित धर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधम्प्रति तद्धर्मभेदस्यापि पृथक्कारण-त्वं कल्पनीयम्। एवं दण्डवान् दण्डवानित्यादिवाक्याद्दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वयबोधस्य वारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्र-कारतानिरूपितविशेष्यतानिरूपित संयोगत्वाद्यवच्छिन्नावच्छेदकतानिरूपितावच्छे-

---

कत्वभेदस्य सत्त्वादिति चेदत्रास्मद्गुरुचरणाः विशेष्यतात्वसम्बन्धेन शाब्दबुद्धौ प्रकारतावदन्यत्वं हेतुः प्रकारतावत्ता च स्वनिरूपितत्व स्वनिरूपितावच्छेदक-तात्वव्यापकत्वोभयसम्बन्धेन, व्यापकता च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन अवच्छेदकतावत्ता च स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वान वच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन वृत्तित्वञ्च स्वानवच्छेदकान-वच्छिन्नत्वसम्बन्धेनेति प्राहुः तथाच नीलोघटइत्यादौ विशेष्यतात्वसम्बन्धेन शाब्दबोधो घटत्वावच्छिन्नविशेष्यतायां तत्र नीलत्वावच्छिन्नप्रकारतायाः स्वनि-रूपितत्वसम्बन्धेन सत्त्वेऽपि न स्वनिरूपितावच्छेदकतात्वव्यापकत्वसम्बन्धेन सत्त्वं घटत्वावच्छिन्नविशेष्यतायाः स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन नील-त्वनिष्ठावच्छेदकतायामसत्त्वान्नीलत्वनिष्ठावच्छेदकत्वघटत्वनिष्ठावच्छेदकत्वयोः सामानाधिकरण्यविरहादतः प्रकारतावदन्यत्वसत्त्वान्नानुपपत्तिः। न चोक्तप्रकार-तावदन्यत्वे हेतुत्वस्याभिमतत्वे ससइत्यादिवाक्यादित्यारभ्य निरवच्छिन्नत्व-निवेशोऽपि पूर्ववद्बोध्य इत्यन्तग्रन्थस्यानुत्थानापत्तिस्तद्दोषस्याप्यनेनैवकार्यकार-णभावेन वारणादिति वाच्यं तत्पर्यन्तस्याप्यत्रैवतात्पर्यादिति इत्थञ्च ससइत्यादि-ग्रन्थस्तु यथाश्रुतरीत्या एवं व्याख्येयः ससइत्यादीति अत्रतत्पदद्वयंजातिमद्बोधकं तथा च तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रकारताक-विशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकता सम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदस्य कारणत्वोक्तावपि जातिमान् जातिमानित्यस्य न वारणम् तद्धर्मपदेन घटत्वस्य परिग्रहे तन्निष्ठावच्छेदकताकप्रकारताकविशेष्यतानिरूपितावच्छेदकत्वाश्रये पट-त्वादौ घटत्वभेदसत्वादितिभावः। अथोक्तभेदस्यकारणत्वेपि दण्डवान् दण्डवान् इत्यादौ शाब्दबोधापत्तिः। तथाहि मतुवर्थः सम्बन्धी। सम्बन्धश्चात्र संयोगः तत्र संयोगांशे दण्डप्रतियोगिकत्वस्य प्रतियोगितानिरूपकत्वसम्बन्धेन दण्डस्य वा विशेषणत्वात् दण्डत्वेन दण्डस्य संयोगत्वस्य स्वरूपतः संयोगनिष्ठावच्छेदक-ताया अवच्छेदकत्वात्। तत्र तद्धर्मपदेन दण्डस्य परिग्रहे तदवच्छिन्नावच्छे-दकतानिरूपितप्रकारताकविशेष्यतावच्छेदकताश्रये संयोगत्वे दण्डभेदस्य सत्वा-त्। एवं संयोगत्वस्य परिग्रहे तद्भेदस्य दण्डे सत्वादित्याह एवंदण्डवानित्यादि॥ दण्डसंयोगत्वादीति दण्डसंयोगत्वोभयादीत्यर्थः आदिपदेनस्थलान्तरपरिग्रहः यत्रप्रकारतावच्छेदकविशेष्यतावच्छेदकयोरेकतरकोटौस्वरूपतो दण्डत्वस्यावच्छे-

दकतावच्छेदकत्वसम्बन्धेन शाब्दबोधेदण्डत्वादिभेदस्यापि पृथक्कारणत्वं कल्पनीयम्। अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोऽपि पूर्ववद्बोध्यः॥ वस्तुतस्तु तद्धर्मान्यवृत्ति-विषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुतालाघवात् एवञ्च घटत्वाद्यवच्छि-न्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृ-त्तिविषयतासम्बन्धेन ज्ञानत्वाद्यवच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेद-कतासम्बन्धेन शाब्दबोधापत्तिः। एवञ्च घटवान् घटवानित्यादिशाब्दबोधवारणा-नुरोधेन धर्मितावच्छेदकतावच्छेदकादिनिष्ठप्रत्यासत्त्या कारणत्वान्तरमपि न कल्प्यते। एवमुद्देश्यतावच्छेदकविधेययोरैक्येनैकोद्वावित्यादिवाक्यादेकत्वद्वित्वा-द्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयात् एकत्वत्वद्वित्वत्वाद्यवच्छिन्न-समवायादिसंसर्गावच्छिन्नप्रकारतानिरूतितविशेष्यतानिरूपितसमवायादिसंसर्गाव च्छिन्नावच्छेदकतावच्छेदकत्वादिसम्बन्धेन शाब्दबुद्धौ एकत्वत्वद्वित्वत्वादिभेदस्य। एवं कर्मगच्छतीत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासम्बन्धेन तद्वतोऽन्वयबो-धवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदकताकाधेयतासम्बन्धावच्छिन्नप्रकारतानि-रूपितधर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे कर्मत्वत्वादिभेदस्य घटो न घटइत्याद्य-नुमितेः शाब्दबोधस्य च वारणाय घटत्वाद्यवच्छिन्नभेदप्रकारतानिरूपितधर्मिताव-

---

दकत्वम् अपरत्र किञ्चिद्धर्मपुरस्कारेण तस्यावच्छेदकत्वं तत्र शाब्दबोधस्येष्टत्वादाह निरवच्छिन्नत्वनिवेशोऽपीति॥ लाघवादिति लाघवश्चानुपदमेव स्फुटीभविष्यति। नन्वेवमपि घटत्वान्यवृत्तिविषयताश्रये घटे घटत्वभेदस्य सत्त्वात् घटोघटइत्या-दावापत्तिस्तदवस्थेत्यतआह एवञ्चेत्यादि तथाच घटत्वावच्छिन्नप्रकारतानिरूपित विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधाधिकरणेषु द्रव्यत्वादिषु घटत्वान्य-वृत्तिविषयतासम्बन्धेन ज्ञानमप्यस्तीत्यतउक्तावच्छेदकत्वसम्बन्धेन शाब्दबोध-स्योक्तविषयतासम्बन्धेन ज्ञानं व्यापकमतउक्तावच्छेदकतासम्बन्धेन शाब्दबोधस्यो-त्पत्तावुक्तविषयतासम्बन्धेन तद्व्यापकीभूतंयज्ज्ञानंतदुत्पादकसामग्र्या अपि घट-त्वभेदघटिताया अपेक्षणाद् द्रव्यत्वादौ शाब्दबोध उपपद्यते घटत्वान्यवृत्तिविषय-तासम्बन्धेन व्यापकस्य ज्ञानस्य या घटत्वभेदघटिता सामग्री घटत्वे तदभावा-देव न घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन घटत्वे शाब्दबोधइति भावः। ननु प्रकारतावच्छेदकविशेष्यतावच्छेदकयोरेकतरकोटौ स्वरूपतोघटत्वमपरत्र प्रमेयत्वादिरूपेण घटत्वमवगाहमानस्य प्रमेयवद्वान् घट इत्यादिशाब्दबोधस्य घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्ब-न्धेन घटत्वेपिसत्त्वात्तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानस्यासत्त्वान्नोक्तवि-

च्छेदकतासम्बन्धेनानुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव। तद्धर्मभेदस्यैकककारणतयैव सकलातिप्रसङ्गवारणसम्भवादिति कृतं पल्लवितेन॥ भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते नत्वन्येन। सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजापुरुषः भूतलंघट इत्यादौ पुरुषाद्यंशे राजभूतलादेः स्वत्वाधेयत्वादि सम्बन्धेन 'तण्डुलःपचति चैत्रः पच्यते इत्यादौ कर्मत्वकर्तृत्वादिसम्बन्धेन तण्डुलचैत्रादौ पाकादेः 'स्वकर्मकत्वस्वकर्तृकत्वादिसम्बन्धेन पाकाद्यंशे वा तण्डुलचैत्रादेरन्वयबोधोऽनिपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताद्दशप्रातिपदिकार्थयोश्चभेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् विभक्त्यर्थमन्तराकृत्य तयोरप्यन्वयबोधात्साक्षादिति 'निपातातिरिक्तत्वादिविशेषणात् भूतले न घटः घटो न पट इत्यादौ घटादेर्नञर्थाभावेन मुखंचन्द्रइवेत्या-

---

षयतासम्बन्धेन ज्ञानम् उक्तावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति व्यापकं नच निरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं व्यापकमित्यपि वक्तुं युक्तं घटो नीलघटइति विधेयांशेऽधिकावगाहिशाब्दबोधाङ्गीकारपक्षे उक्तावच्छेदकत्वसम्बन्धेन शाब्दबोधाधिकरणे घटत्वे घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानस्यासत्त्वेन तस्य व्यापकत्वासम्भवादिति चेन्न निरवच्छिन्नघटत्वनिष्ठावच्छेदकता भिन्नावच्छेदकत्वानिरूपितप्रकारतानिरूपितविशेष्यतानिरूपितानवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधम्प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानस्य व्यापकत्वेबाधकाभावादिति अधिकन्तु गूढार्थतत्त्वालोकेऽवलोकनीयम्॥ भेदान्वयबोधश्चेति भेदशब्दोऽभेदान्यसम्बन्धेषु पारिभाषिकः। प्रातिपदिकार्थधात्वर्थयोरित्यत्र षष्ठ्याः प्रतियोगित्वानुयोगित्वसाधारणनिरूपितत्वृत्त्याश्रयोऽर्थः तस्य भेदान्वयबोधघटकभेदेऽन्वयः तथाच प्रातिपदिकार्थनिरूपितो धात्वर्थनिरूपितश्च, यः प्रत्ययार्थनिपातार्थान्यतरनिरूपितो भेदान्वयस्तद्विषयकएव शाब्दबोधो जायते नतु तदन्यनिरूपितभेदान्वयविषयक इत्यर्थः। सम्बन्धेनेति अस्य अन्वयस्याव्युत्पन्नत्वादित्यनेन सम्बन्धः क्रियाप्रातिपदिकार्थयोरपि भेदेनान्वयेबाधकमाह तण्डुलःपचतीति। ताद्दशेति निपातातिरिक्तेत्यर्थः अव्युत्पन्नत्वादिति निपातातिरिक्तनामार्थनिष्ठा या विभक्त्यर्थातिरिक्तभेदसम्बन्धावच्छिन्नप्रकारता तन्निरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति नामपदवृत्तिज्ञानजन्योपस्थितेर्विशेष्यतासम्बन्धेन प्रतिबन्धकत्वात्ताद्दशप्रतिबन्धकतानङ्गीकारे च राजापुरुषइत्यादावपि भेदान्वयबोधापत्तिरिति भावः। भूतले घटइत्यादौ भूतलवृत्तित्वस्यैवाधेयत्वसम्बन्धेन भूतलादेरपि घटादौ भानात् एवं राज्ञः पुरुषइत्यादौ राजस्वत्वस्यैव स्वत्वसम्बन्धेन राज्ञोऽपि पुरुषांशे भानादाह विभक्त्यर्थस-

दौ मुखचन्द्रादीनामिवार्थसादृश्यादिना नकलञ्जंभक्षयेदित्यादौ नैयायिकमते नञु-पस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाभावेन धात्वर्थभक्षणादेरनुयोगितया गुरुमते तु विध्यर्थापूर्वांशे विशेषणतयाऽन्वितेन नञुपस्था-

---

न्तराकृत्येति सम्बन्धकोटौ प्रविश्येत्यर्थः। कलञ्जमिति कलञ्जशब्दार्थस्तु "विषाक्तेनैव वाणेन हतौ यौ मृगपक्षिणौ। तयोर्मांसं कलञ्जं स्याच्छुष्कमांसमथापि वा इति कोशेऽभिहितः। विशिष्टेष्टसाधनत्वादीति आदिना कृतिसाध्यत्वस्य परिग्रहः ननु नैयायिकमते बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यताज्ञानं न प्रवृत्तिम्प्रति हेतुः त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानेककारणत्वप्रसङ्गात् किन्तु बलवदनिष्टाननुबन्धित्वज्ञान मिष्टसाधनताज्ञानं कृतिसाध्यताज्ञानञ्च त्रितयमेव हेतुः त्रयाणां परस्परसहकारित्वाच्च नैकैकशः प्रवृत्त्यापत्तिः एतज्ज्ञानत्रयविषयाणां बलवदनिष्टाननुबन्धित्वादीनां त्रयाणामेव च लिङादिपदशक्यता ननु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यतात्वेन त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नशक्यताबाहुल्यप्रसङ्गात् एवञ्च त्रयाणामेव योग्यताबलाद्धात्वर्थयागादावन्वयात् पचेदित्यादौ पाकः कृतिसाध्य इष्टसाधनं बलवदनिष्टाननुबन्धीचेत्याकारको बोधः यजेदित्यादावप्येवमेव बोध्यम् एवंसति न कलञ्जं भक्षयेदित्यादौ त्रयाणामेवविध्यर्थत्वस्य तेषां नञर्थाभावेन प्रतियोगितयाऽन्वयस्य च युक्तत्वेऽपि कलञ्जभक्षणे कृतिसाध्यत्वस्य तृप्तिरूपेष्टसाधनत्वस्य च सत्त्वान्नतयोर्विध्यर्थत्वं येन तदभावो नञा प्रत्याय्येत नवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वस्यविध्यर्थत्वमुक्तरीत्या गौरवप्रसङ्गात् किन्त्वत्र बलवदनिष्टाननुबन्धित्वमेवविध्यर्थस्तदभावएव नञाबोध्यते एवञ्च विशिष्टस्य विध्यर्थत्वं तस्याभावेन सहान्वयाभिधानञ्चायुक्तमिति चेदत्रेदं प्रतिभाति नञ्समभिव्याहारस्थले तेषामेकैकविशिष्टापरस्यापि विध्यर्थत्वं तदभावस्य नञर्थत्वं च सम्भवति नच त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहः विशेष्यवति विशिष्टाभावस्य विशेषणाभावरूपत्वेन विशेषणवति विशिष्टाभावस्य विशेष्याभावरूपत्वेन च प्रकृते तत्तद्विशिष्टाभावानां बलवदनिष्टाननुबन्धित्वाभावरूपत्वस्यादिति। गुरुमतेत्विति प्रभाकराणाम्मते त्वित्यर्थः। एषा हि तेषां प्रक्रिया स्वर्गकामो यजेतेत्यादौ लिङो नेष्टसाधनत्वमर्थः प्रत्यहं शुचिः संध्यामुपासीत इति विधेरप्रामाण्यप्रसङ्गात् नित्यस्य कर्मणः फलाजनकत्वेन संध्योपासनमिष्टसाधनमिति बोधस्य भ्रमत्वात् नचास्तु कार्यत्वमेव लिङर्थस्तथाचोक्तवाक्यात् स्वर्गकामनियोज्यताको नियोज्यताकत्वसम्बन्धेन स्वर्गकामविशिष्टो वा यागः कार्यतावानिति बोधइति वाच्यं यतः स्वर्गकामनियोज्यताकत्वं न स्वर्गकामकृतिसाध्यत्वं तथासति स्वर्गकामकृतिसाध्यताविशिष्टे यागे कार्यत्वान्वयबोधने उक्तवाक्यस्य निराकाङ्क्षत्वप्रसङ्गात्

कार्यत्वस्यापि कृतिसाध्यतात्मकत्वात् नच तदीयकृतिसाध्यत्वधीविशेष्यत्वमेव तन्नियोज्यताकत्वमिति वाच्यं स्वर्गकामः पचेदित्यादेः प्रामाण्यप्रसङ्गात् स्वर्गकामनिष्ठं यत् पाको मत्कृतिसाध्यः, इति ज्ञानं तद्विशेष्यत्वस्य पाके सत्त्वात् किन्तु स्वर्गकामनिष्ठस्वर्गसाधनताज्ञानजन्यकार्यताज्ञानविशेष्यत्वमेव स्वर्गकामनियोज्यताकत्वम् । इत्थञ्च स्वर्गकामनिष्ठं यत्स्वर्गसाधनताज्ञानं तद्यागविशेष्यकं प्रथमं न सम्भवति यागस्य हि इच्छाविशेषरूपत्वेन स्वर्गपर्यन्तस्थायित्वाभावान्न साक्षात्स्वर्गसाधनत्वं किन्तु स्वजन्यादृष्टद्वारैव तथाचादृष्टस्योपस्थापकपदाभावे उपस्थित्यसंभवात् स्वजन्यादृष्टवत्त्वसम्बन्धावच्छिन्ना या स्वर्गसाधनता तत्प्रकारकयागविशेष्यकज्ञानस्योक्तवाक्यादनुत्पत्तेः अन्विताभिधानवादिनां तेषाम्मते सम्बन्धस्यापि पदोपस्थितस्यैव भानात् अतः कार्यं एव लिङादिविधिप्रत्ययस्यार्थः कार्यञ्चापूर्वाख्यमदृष्टापरपर्यायं तत्रकार्यत्वंतु कृतिसाध्यत्वमेव तेनैवरूपेणलिङादिनाऽपूर्वस्यप्रतीतिः तथाच लिङादिपदेन कार्योपस्थित्या स्वर्गकामनिष्ठेन कार्यं स्वर्गसाधनम्, इत्याकारकज्ञानेन जायमानं यत् कार्यं कृतिसाध्यम्, इत्याकारकं कार्यत्वेनापूर्वावगाहिज्ञानं तद्विशेष्यत्वस्यापूर्वे सत्त्वात्तत्रोक्तनियोज्यताकत्वान्वयस्तदेकदेशेकृतावेव च धात्वर्थयागादेः विषयत्वसम्बन्धेनान्वयस्तथाच यागविषयककार्यं स्वर्गकामनिष्ठस्वर्गसाधनताज्ञानजन्यकृतिसाध्यताज्ञानविशेष्यम्, एतत्स्वरूपपर्यवसायी, यागस्य कार्यं स्वर्गकामनियोज्यताकम्, इत्याकारकः प्रथममन्वयबोधः अथवा नियोज्यताकत्वानवगाही, यागस्य कार्यं स्वर्गकामकृतिसाध्यम्, इत्याकारकः प्रथममन्वयबोधः। तदनन्तरं यागजन्यस्यापूर्वस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामनियोज्यताकत्वम्वा यागस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामनियोज्यताकत्वम्विनाऽनुपपन्नमित्यनुपपत्तिज्ञानसहकृतात् स्वर्गकामो यजेतेति वाक्यादेव, स्वर्गकामनियोज्यताको यागः इत्याकारकः यागः स्वर्गकामस्यकृतिसाध्य, इत्याकारको वा यागादिगोचरप्रवृत्त्युपयोगी जायमानोबोध औपादानिकोबोधइति व्यपदिश्यते। तृप्तिकामोभुञ्जीतेत्यादौ लौकिकलिङादिस्थले तु कार्यत्वमेवलिङर्थस्तस्य भोजनेऽन्वयात् तृप्तिकामस्य कार्यं भोजनमित्यन्वयबोधः अत्रापि कार्यत्वं कृतिसाध्यत्वं सर्वत्र च कार्यत्वाश्रयमुख्यविशेष्यकएव चैतन्मते बोधः सिद्धार्थकस्थले तैःशाब्दबोधस्यानङ्गीकृतत्वात् । न कलञ्जं भक्षयेदित्यादौ निषेधस्थले तु नञर्थाभावे प्रतियोगितासम्बन्धेन धात्वर्थभक्षणस्यान्वयः कलञ्जभक्षणाभावस्य च जन्यत्वसम्बन्धेन लिङर्थकार्येऽन्वयः तथाच कलञ्जभक्षणाभावजन्यं कार्यमिति प्राथमिकोऽन्वयबोधः अनन्तरं च कार्यस्य कलञ्जभक्षणाभावजन्यत्वख्यापनं कलञ्जभक्षणस्य दुरितसाधनत्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानसहकृतादुक्तवाक्यादेव कलञ्जभक्षणे दुरितसाधनत्वमवगम्य ततो निवर्तते इति ॥ अथ प्रसङ्गाद्भट्टमतमप्यत्रसंक्षेपतः प्रदर्श्यते तेषान्त्वेषा प्रक्रिया भावनाज्ञानमेव प्रवृत्तिकारणं प्रवृत्तिश्चद्विविधा स्वेच्छाधीना परेच्छाधीना च तत्राद्यायाम्प्रवृत्ताविष्टसाधनताज्ञानं कारणं द्वितीयस्यामाज्ञाप्रेरणादिज्ञानं कारणं गुरोराज्ञयेदं करोमि चैत्रस्य

प्रेरणयेदं करोमीत्यादिव्यवहारात् आज्ञादिश्च प्रवर्त्तयितृनिष्ठप्रवर्त्यपुरूषप्रवृत्त्यनुकूलव्यापाररूपा भावनैव सा च यत्र प्रवर्तयिता चेतनस्तत्र तन्निष्ठा तदभिप्रायरूपा यत्र चाचेतनो लिङादिः प्रवर्त्तयिता तत्राभिधापदव्यपदेश्या प्रवर्तनाऽपरपर्याया प्रवृत्त्यनुकूलव्यापारविशेषरूपव भावना तादात्म्येन लिङादिनिष्ठा नतु समवायेन तन्मते समवाया नङ्गीकारेण धर्मधर्मिणोस्तादात्म्यस्यैवोपगमात् अतएवैनां भावनां शाब्दीभावनेति व्यपदिशन्ति तथाच गुर्वभिप्रायज्ञानाद्यथा शिष्यः प्रवर्त्तते तथा लिङादिविधिनिष्ठोक्तभावनाज्ञानात् सर्वे आस्तिकाः प्रवर्त्तन्ते इत्थञ्च भावना द्विविधा आर्थीभावना शाब्दीभावना च तत्रार्थनिष्ठाऽर्थीभावना अर्थोयागादिः आत्माच तत्र यागादिनिष्ठत्वं यागादिविषयकत्वम् आत्मनिष्ठत्वमात्माश्रितत्वं तथाच यागादिविषयिकाऽऽत्माश्रिता प्रवृत्तिरार्थीभावना अर्थभावनाविषयिका शब्दनिष्ठा भावना शाब्दीभावना उभयाऽपि भावना लिङादिविधिवाच्या तत्रार्थीभावना लडादिर्वाच्याऽपि तथाच आख्यातत्वमर्थभावनायाः शक्तता वच्छेदकं विधित्वं शाब्दभावनायाःशक्ततावच्छेदकं तदुक्तम् । अभिधां भावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥ इति अत्रार्थाभावनेत्यस्य अर्थविषयिणी आत्मनिष्ठाभावनेत्यर्थः भावनात्वञ्च किंभाव्यं केनभाव्यं कथंभाव्यमित्यंशत्रयवद्व्यापारत्वरूपम् तत्रशाब्दभावनायां किंभाव्यमिति फलाकाङ्क्षायामार्थीभावना फलत्वेन सम्बध्यते केन भाव्यमिति करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्यते कथम्भाव्यमिति इतिकर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमिति कर्त्तव्यतात्वेन सम्बध्यते अर्थभावनायान्तु स्वर्गादि फलत्वेन यागादि करणत्वेन प्रयाजादिकमितिकर्तव्यतात्वेन सम्बध्यते तथाच स्वर्गकामो यजेतेति वाक्यात् यागकरणिकाप्रयाजादीतिकर्तव्यताकास्वगफलिकाभावना लिङ्ज्ञानकरणकप्राशस्त्यज्ञानेतिकर्तव्यताकप्रवर्तनाविषयीभूतेतिबोधः । एतन्मते न कलञ्जं भक्षयेदित्यादौनिवर्तनैव विधिप्रत्ययार्थो नञो द्योतकत्वमात्रम् एवञ्चात्र नञर्थस्य धात्वर्थेन प्रातिपदिकार्थेन वाऽन्वयविरहान्नैतन्मतं भट्टाचार्येणात्र प्रदर्शितम् ॥ मण्डनमिश्राणाम्मते तु नैयायिकानामिवेष्टसाधनत्वमेवविध्यर्थः तदुक्तं तैः । 'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः । प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम् ।' इति अस्यार्थस्तु 'इष्टाभ्युपायत्वात्, इष्टसाधनत्वात् अन्यो धर्मः क्रियासु न प्रवर्त्तकः किंत्विष्टसाधनत्वरूपो धर्मएवप्रवर्त्तकः तमेव प्रवृत्तिहेतुधर्ममिष्टसाधनत्वाख्यं प्रवर्त्तनाम्प्रवदन्तीति अत्रेष्टाभ्युपायत्वपदं तज्ज्ञानपरम् । एतन्मते न कलञ्जम्भक्षयेदित्यादावपि नैयायिकवदेव बोधइति प्रतिभाति॥

ननु राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणोपगमे राजसम्बन्ध्यभिन्नःपुरुष इत्यभेदान्वयबोधः स्यात्तथासति विग्रहवाक्यसमासयोः समानाकारकानुभवजनकत्वनियमो भज्येत अतो राजपदस्य राजसम्बन्धएव लक्षणोचिता एवं सत्युक्तवाक्यात् राजसम्बन्धवान् पुरुषइत्यन्वयबोधस्य जायमानत्वेन विग्रहवाक्यसमासयोः समानाकारकानुभवजनकत्वमप्युपपद्यते तथाच नामार्थयोः

प्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयान्वयेऽपि न क्षतिः। राजपुरुषइत्यादिसमासस्थले तु पुरुषादिपदार्थेन समंराजादिपदार्थस्य न भेदान्वयबोधः किंतु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसम्बन्ध्यादेरभेदान्वयबोध एवेति नदोषः एवं मुखंचन्द्रइत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाभेदान्वयबोधएव नतु सादृश्यादिसम्बन्धेन चन्द्रादेर्मुखादावन्वयइति न तत्र व्यभिचारः । केचित्तु रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किन्तु तत्र मुख्यार्थचन्द्रादेरभेदभ्रमो मुखादौ मुखं न चन्द्र इत्यादिविशेषदर्शनदशायाश्च न तत्र शाब्दोऽभेदप्रत्ययः अपितु शब्दजन्यविशकलितपदार्थोप-

---

साक्षाद्भेदेनानन्वयनियमस्वीकारो नोचितइत्यतआह राजपुरुषइत्यादीति अयमभिप्रायः उपदर्शितान्वयव्यतिरेकाभ्यां गृहीतस्य नामार्थयोर्भेदानन्वयनियमस्य बलवत्तरबाधकादृते परित्यागो नोचितः उक्तस्थले हि राजादिपदार्थस्य राजादिसम्बन्धिनि लक्षणोपगमेनापि निर्वाहः । यद्यपिसम्बन्धिनि लक्षणोपगमे विग्रहवाक्यसमासयोः समानाकारानुभवजनकत्वनियमभङ्गः प्रसज्यते तथापि पीतमम्बरं यस्येति विग्रहतो यत्सम्बन्धिपीताभिन्नाम्बरमिति बोधस्य पीताम्बरइति बहुव्रीहेश्च पीताभिन्नाम्बरवानिति बोधस्य विभिन्नाकारकस्यैवोदयात्समानाकारकानुभवजनकत्वनियमो न सार्वत्रिकइत्यतोनदोषः । तेनसममिति पुरुषादिपदार्थेन समम् । विभक्त्यन्तार्थेत्यादि विभक्त्यन्तार्थो यद्राजसम्बन्धित्वं तद्विशिष्टेत्यर्थः । ननु समासस्थले राजसम्बन्धिपुरुषाद्यर्थे शक्तिरेव किमितिनोपेयते इतिचेत् एवमपि शशशृङ्गादिपदार्थस्यालीकतया तत्र शक्त्यसम्भवात् पृथगर्थानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वरूपैकार्थीभावोऽपि न सम्भवतीति शशशृङ्गमित्यादौ समासः प्रातिपदिकसंज्ञा च नोपपद्येत सिद्धान्ते तु स्वार्थपर्यवसायिनां पदानामाकाङ्क्षावशात्परस्परसम्बन्धरूपव्यपेक्षात्मकसामर्थ्यमादायोपपद्यते नहि असत्ख्यातिविषयीभूते शशशृङ्गादौ शशशृङ्गादिपदस्य शक्तिः सम्भवति असत्पदार्थे ज्ञानकरणेन्द्रियादेर्व्यापारविरहेणासत्ख्यातेरनङ्गीकारात् भामत्यादावसत्ख्यातेर्विस्तरेणखण्डितत्वात् अतो न समासे शक्तिरधिकन्तु गूढार्थतत्त्वालोके विवेचितं गुरुचरणैः । एवमित्यादि ननु रूपकस्थलेऽपि सादृश्यस्यैव विषयत्वे चन्द्रइवमुखमित्युपमातो मुखंचन्द्रइति रूपकस्थलेऽनुभूयमानस्य चमत्कारवैलक्षण्यस्यानुपपत्तिरिति चेन्न यथाहि गङ्गातीरे घोषइतिवाक्यतो जायमानया गङ्गातीरवृत्तिर्घोषइति प्रतीत्या गङ्गायां घोष इत्यतोलक्षणया जायमानाया गङ्गातीरवृत्तिर्घोषइति प्रतीतेः साम्येऽपि गङ्गापदजन्यतीरोपस्थितिमहिम्ना शैत्यपावनत्वादिविशेषस्तीरे प्रतीयते तथा प्रकृते सादृश्यप्रत्ययस्योभयत्राविशिष्टत्वेऽपि अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वरूपाकाङ्क्षाज्ञानचन्द्रपदाधीनचन्द्रसदृशोपस्थित्यादिघटितसामग्रीप्रयोज्यत्वकृतं रूपकस्थले चमत्कारवैलक्षण्यं निर्वहतीति ॥ नतत्रशाब्दइति तद्धर्मिकतदभावनिश्चयस्य लौकिकसन्नि-

स्थितिमूलको मानसएवाहार्यभेदभ्रमइत्याहुः। परेतु तादात्म्यातिरिक्तसम्बन्धेन नामार्थयोर्नान्वयबोधः तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्त्वम् एवञ्च नीलोघटइत्यादौ स्ववृत्तिनीलत्वादिमत्त्वसम्बन्धेन। घटाद्यंशे नीलादिपदार्थस्यैव मुखंचन्द्रइत्यादौ स्ववृत्त्याह्लादकत्वादिमत्त्वसम्बन्धेन मुखादौ चन्द्रादेरन्वयबोधः तादृशार्थान्वयबोधेऽपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसङ्गइति वदन्ति॥ अथ राजापुरुषइत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्नभेदान्वयबोधः। सामग्र्याकार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिञ्चित्करत्वात् सामग्रीसत्त्वेऽवश्यं कार्यमिति नियमात्। नच तत्र भेदान्वयबोधौपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येवासिद्धेति वाच्यं समभिव्याहाररूपाया आकाङ्क्षायास्तत्रापि सत्त्वात्। नच तादृशाकाङ्क्षायास्तत्र

---

कर्षाजन्यदोषविशेषाजन्यानाहार्यतद्धर्मिकतद्वत्ताज्ञानमात्रम्प्रति प्रतिबन्धकत्वादिति भावः नन्वेवंयोग्यताज्ञानस्यशाब्दबोधेकारणत्वंकिमित्यङ्गीकार्यबाधनिश्चयकालेशाब्दापादनस्यानेनैव विशिष्टबुद्धिसामान्यंप्रति क्लृप्तप्रतिबध्यप्रतिबन्धकभावेनवारणादितिचेदत्राहुः शाब्दबोधोपत्तिक्षणे योग्यताज्ञानाभावस्यमानसप्रत्यक्षवारणायतत्प्रत्यक्षंप्रति शब्दसामग्रीत्वेन प्रतिबन्धकत्वस्यकल्पनीयतया गौरवम् योग्यताज्ञानस्य शाब्दकारणत्वेतु शाब्दसामग्रीयोग्यताज्ञानाभावयोर्युगपदवस्थोनाभावापत्तिरेवनेति। परेतु सत्यपिबाधनिश्चये मुखंचन्द्रइत्यादौ शाब्दोत्पादात्बाधनिश्चयनिरूपितप्रतिबध्यवच्छेदककोटौ अनाहार्यत्वमिवाशाब्दत्वमपिप्रवेशनीयम् तथाचाहार्ययोग्यताज्ञानात्तत्रशाब्दबोध इत्याहुः॥ मानसएवाहार्येति तथाचाहार्यज्ञानस्याप्रतिबध्यत्वान्नबाधनिश्चयः प्रतिबन्धकइति भावः। आहार्यन्तु बाधकालीनेच्छाजन्यं ज्ञानं तत्र बाधकालेयदि वह्न्यभाववति पर्वते वह्निज्ञानं जायताम्, इत्याकारिकेच्छा तदा वह्न्यभाववान् पर्वतो वह्निमानित्याकारकमाहार्यज्ञानमुत्पद्यते यदि च बाधकाले "पर्वते वह्निज्ञानं जायताम्, इत्याकारिकेच्छा तदा तु पर्वतोवह्निमानित्याकारकमाहार्यज्ञानम् इच्छावैलक्षण्याद्विलक्षणमुत्पद्यते। स्ववृत्त्याह्लादकत्वेति स्ववृत्तित्वोपलक्षिताह्लादकत्वेत्यर्थः। वदन्तीति अत्र मुखं चन्द्रइत्यादौ स्ववृत्याह्लादकत्वरूपाभेदस्य संसर्गत्वे मुखं न चन्द्रइत्यादौ नञा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावएव बोधनीयः प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वात् तथाच पद्मादिसदृशाह्लादजनके मुखे पद्मादिवृत्त्याह्लादजनकत्वं पद्मादिभ्यो भेदं च बोधयतै "न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषीइमे," इत्यादिवाक्यनिवहोऽप्रामाणिकतामेव प्राप्नुयात् स्ववृत्त्याह्लादकत्वरूपाभेदसम्बन्धेन पद्मादेर्मुखादौ सत्त्वादित्यस्वरसः सूचितः। प्रयोजनक्षतेरिति प्रयोजनमिष्टं नामार्थयोर्भेदानन्वयनियमरूपं तस्य, क्षतेः, हानेरित्यर्थः। अकिञ्चित्करत्वादिति कार्यप्रतिरोधाक्षमत्वादित्यर्थः॥ यद्यदर्थयोरभेदान्वयबोधोऽभिमतस्तत्तदर्थोपस्थापकपदयोः समभिव्याहाररूपाकाङ्क्षापि प्रकृतेऽस्त्येवेत्याह समभिव्याहारेति। ननु समभिव्याहाररूपाकाङ्क्षायाः

सत्त्वेऽपि राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदाव्यवहितोत्तरङसूपदत्वा-दिरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात् तदभावादेव न तत्र शाब्दसामग्रीति वाच्यं सम्बन्धादिविशेष्यकराजादिप्रकारकान्वयबोधएव तादृशा-काङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थप्रकारकान्वयबोधोत्पत्तौ तादृशा-काङ्क्षाज्ञानरूपकारणविरहस्याकिञ्चित्करत्वात् । अत्र केचित् नामार्थ-प्रकारकभेदान्वयबोधंप्रति समानविशेष्यत्वप्रत्यसत्त्याप्रत्ययजन्योपस्थितेर्हेतुत्व-कल्पनात् नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं नतु नामार्थान्तरस्य तत्र विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् न च सम्बन्धादेरपि नामार्थतया तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तेः तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबोधत्वावच्छिन्नम्प्रति प्रत्य-यजन्योपस्थितित्वेन हेतुत्वेऽपि राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्य-

---

घटःकर्मत्वमानयनं कृतिः'' इत्यादावपि सत्त्वात्तत्रापि घटकर्मताकानयनादिबोधः प्रसज्ज्येत अतआनुपूर्वीविशेषरूपाप्याकाङ्क्षाऽन्वयबोधप्रयोजिका वाच्या सा च यादृशी भेदान्वयबुद्धावपेक्ष्यते तादृशी राजापुरुषइत्यादौ नास्तीति नापत्तिरि-त्याशंकायामाह नचेति । सम्बन्धादिविशेष्यकेति ननु राजप्रकारकभेदान्वयबुद्धौ राज्ञः इत्यानुपूर्वीज्ञानस्य कारणत्वं न सम्भवति तदभावेऽपि राजानमित्यादौ भेदान्वयबुद्धेर्जायमानत्वेन व्यभिचारात् एवमुक्तान्वयबुद्धौ राजानमित्यानुपूर्वीज्ञान स्यापि कारणत्व न सम्भवति तदभावेऽपि राज्ञा राज्ञे इत्यादौ भेदान्वयबुद्धेरुत्पत्त्या व्यभिचारादतो राज्ञः इत्यानुपूर्वीज्ञानाव्यवहितोत्तरराजप्रकारकभेदान्वयबुद्धौ राज्ञः इत्यानुपूर्वीज्ञानत्वेन कारणत्वंवाच्यमेवं तत्रतत्राप्यव्यवहितोत्तरत्वघटितएव कार्यकारणभावो वाच्यः तथाच पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधे राज्ञः इत्याद्यनुपूर्वीज्ञानस्य कारणत्वाभावात्तदसत्त्वमकिंञ्चित्करमिति भावः। नामार्थेति प्रातिपदिकार्थेत्यर्थः । भेदान्वयबोधंप्रतीति निपातातिरिक्तविशेष्यकइतिशेषः तेन घटो नास्तीत्यादौ विशेष्यतासम्बन्धेन घटप्रकारकबोधस्य नञर्थेऽभावे उत्पत्तावपि न क्षतिरिति । कार्यतावच्छेदकोऽपि विशेष्यतासम्बन्धएवेति बोध-यितुमाह समानेति। नतुनामार्थान्तरस्येति नीलोघटइत्यादिबोधे घटस्य घट-त्वनिष्ठप्रकारतानिरूपितविशेष्यतया भानात नतु नामार्थस्येत्युक्तिरयुक्तास्यादतो-नतु नामार्थान्तरस्येत्युक्तम् तथाच पदार्थे पदार्थतावच्छेदके चैकस्यापवशक्तेः सत्त्वेन घटघटत्वयोरेकस्यैव पदस्यार्थतया न पदार्थान्तरत्वमिति । नचसम्बन्धादेरिति सम्बन्धपदस्य प्रमेयादिपदस्य च तत्र शक्तत्वादिति भावः ॥ तत्तन्नामपदेत्यादि अस्ययथाश्रुतार्थे राज्ञः पुरुषइति वाक्यजन्यबोधस्यापि राजादिनामपदजन्यत्वात् राजादिनामार्थप्रकारकत्वाच्च प्रकृतकार्यतावच्छेदकाक्रान्ततया तस्यविशेष्यतासम्बन्धे

द्वयजन्यवाक्यार्थद्वयान्वयबोधे पुरुषस्य राजसम्बन्धविशेष्यतया भानानुपपत्तिरिति-वाच्यम्। प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतत्तदर्थप्रकारकशाब्दत्वावच्छिन्नम्प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वोपगमात् । अथैवमपि यत्र राजापुरुष इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चित्प्रत्ययार्थोऽपि विषयीभूतः तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थितेर्विशेष्यतासम्बन्धेन पुरुषेऽपि सत्त्वात्तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव । नच प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेनोपस्थितेर्हेतुत्वोपगमान्नानुपपत्तिः तादृशसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्नएव जन्यतावच्छेदकत्वादिति वाच्यम् ज्ञानभेदेन विशेष्यताभेदाभावात् यत्र कुत्रचित्प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिस्तत्र तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः

---

नाधिकरणे पुरुषे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरभावाद्व्यभिचारोऽतस्त तन्नामपदप्रयोज्यतत्तन्नामार्थनिष्ठभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यता सम्बन्धेन शाब्दबोधे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमित्यत्रैवतात्पर्यम् । एवञ्चराजादिनामपदप्रयोज्यप्रकारतानिरूपितविशेष्यता सम्बन्धेन शाब्दबोधः स्वत्वएवनतुपुरुषेस्तीतिन व्यभिचारः । राजसम्बन्धःप्रमेयइत्यादि अत्र सम्बन्धपदेन षष्ठ्या च स्वत्वस्योपस्थित्या स्वत्वनिष्ठप्रकारतायां षष्ठीप्रयोज्यत्वस्येव सम्बन्धपदप्रयोज्यत्वस्यापि सत्त्वात् तथाविधविशेष्यतासम्बन्धेन शाब्दबोधाधिकरणे पुरुषे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिर्नास्तीत्यतोऽनुपपत्तिरिति भावः। राजसम्बधविशेष्यतयेति राजनिरूपितस्वत्वनिष्ठप्रकारतानिरूपितविशेष्यतयेर्थः । प्रत्ययाधीनेति तथाचोक्तस्थले सम्बन्धपदेन षष्ठ्या च स्वत्वस्योपस्थितत्वेन प्रत्ययाधीनस्वत्वोपस्थित्यजन्यस्वत्वप्रकारको नोक्तवाक्यजन्यः शाब्दबोधोतोऽस्य कार्यतावच्छेदकानाक्रान्ततया न प्रत्ययजन्योपस्थितेरपेक्षेति भावः । अस्यापियथाश्रुतार्थे न तात्पर्यं तथासति राजापुरुषइत्यादौ भेदान्वयबोधो नवार्थेत विभक्त्युपस्थापितैकत्वस्य पुरुषे प्रकारत्वेन तच्छाब्दबोधस्य सम्भावितस्य प्रत्ययाधीनोपस्थितिजन्यत्वेनोक्तकार्यतावच्छेदकानाक्रान्तत्वादतः प्रत्ययाधीनोपस्थितिविषयत्वाप्रयोज्यभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्व एवतात्पर्यम् एवञ्च पुरुषे प्रत्ययजन्योपस्थित्यभावान्न तत्र विशेष्यतासम्बन्धेन भेदान्वयबोधः । तस्येति पुरुषस्येत्यर्थः । प्रत्ययजन्यतेति एवञ्च प्रत्ययजन्याया उपस्थितेः समूहालम्बनत्वेऽपि प्रत्ययजन्यतावच्छेदकीभूतविशेष्यताऽत्र स्वत्वएव नतु पुरुषे तदंशे नामपदजन्यतावच्छेदकविशेष्यताया एव सत्त्वात्तदाह तादृशसमूहेत्यादिना। ज्ञानभेदेऽपि समानाकारकज्ञानीयविषय-

पुरुषादिपदजन्य पुरुषाद्युपस्थितिविशेष्यताया अभिन्नतया तावताऽप्युक्तातिप्रसङ्गवारणासम्भवादिति चेन्न स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरुपितविशेष्यतासामानाधिकरण्यविरहान्नातिप्रसङ्ग इतिवदन्ति॥ तदसत् प्रत्ययत्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया उक्तकार्यकारणभावकल्पनाया असम्भवात्। राजसम्बन्धः पुरुष इत्यादौ सम्बन्धादिपदे ङसुपदत्वादिभ्रमदशायां सम्बन्धादिविशेष्यकराजादिपदार्थप्रकारकान्वयबोधानुपपत्तेः। राज्ञः पुरुषइत्यादौ ङसुपदादिषु सम्बन्धादिपदत्वभ्रमदशायां सम्बन्धांशे राजादिप्रकारकान्वयबोधापत्तेश्च। नच प्रत्ययत्वेनज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाशइति वाच्यम् राज्ञःपुरुषइत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिदशायामपि आनुपूर्वीविशेषप्रकारकज्ञाना-

---

ताया ऐक्यादाह ज्ञानभेदेनेति। भेदाभावादिति विशेष्यताया अभिन्नतयेत्यत्रायमभिन्नत्वे हेतुः। स्वजनकज्ञानीयेति अत्र स्वपदेनोपस्थितिर्ग्राह्या तज्जनकज्ञानीया या प्रत्ययनिरूपितशक्तिलक्षणाऽन्यतररूपवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतास्वसामानाधिकरण्यसम्बन्धेन तद्विशिष्टविशेष्यतेत्यर्थः। इत्थंच पुरुषस्य विभक्तिपदलक्ष्यार्थत्वेऽपि विभक्तिजन्यसमूहालम्बनोपस्थितिविषयत्वेऽपि वा राजापुरुषइत्यादौ नापत्तिः स्वपदेन समूहालम्बनोपस्थितेः परिग्रहे तज्जनकैकत्वं सुपदशक्यमितिज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितैकत्वनिष्ठविशेष्यताविशिष्टविशेष्यतासम्बन्धेनोपस्थितेः पुरुषे विरहात प्रत्ययपदलक्ष्यार्थपुरुषविषयकोपस्थितेः स्वपदेन परिग्रहे तु तज्जनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताविशिष्टविशेष्यता सम्बन्धेनोपस्थितेः स्थलान्तरे पुरुषे सत्वे तत्र भेदान्वयबोधेऽपि 'राजापुरुषइत्यत्र," पुरुषपदाधीनपुरुषोपस्थितिसत्वे स्वपदेन पुरुषपदजन्यपुरुषोपस्थितिपरिग्रहे तज्जनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतायाः पुरुषे विरहेण तद्विशिष्टविशेष्यतासम्बन्धेनोपस्थितेः पुरुषेऽभावान्नापत्तिरितिभावः। उपस्थितेर्हेतुतयेति तत्तन्नामपदप्रयोज्यतत्तन्नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रतीतिशेषः॥ पाणिन्यादिसंकेतविशेषसम्बन्धेन प्रत्ययपदवत्त्वस्य स्वौजसाद्यन्यतमत्वस्य वाऽनुगतस्य प्रत्ययत्वस्य सम्भवादाह राजसम्बन्धइत्यादि। सम्बन्धादिविशेष्यकेति स्वत्वादिविशेष्यकेत्यर्थः। अनुपपत्तेरिति प्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासम्बन्धेनोपस्थितेः स्वत्वे विरहादिति भावः। प्रत्ययत्वेन ज्ञातमिति तृतीयार्थः प्रकारत्वं तथाच प्रत्ययत्वप्रकारकज्ञानविशेष्यमित्यर्थः। एवञ्च सम्बन्धपदे प्रत्ययत्वभ्रमदशायां प्रत्ययत्वेन ज्ञातं यत्सम्बन्धपदं तज्जन्योपस्थितेः सत्वान्नानुपपत्तिर्न वा प्रत्यये सम्बन्धपद-

धीनतदर्थोपस्थितिसत्त्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशासंभवात् ॥ इदम्पुनरत्रतत्वम् राजा पुरुष इत्यादौ पुरुषादिविशेष्यकराजादिप्रकारकभेदान्वयबोधस्याप्रसिद्ध्यैव नापत्तिसम्भवः यत्र षष्ठ्यादिविभक्तेरत्र स्वार्थासकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादिपदार्थप्रकारकभेदान्वयबोधः प्रसिद्धइति चेत्तर्हि तादृशबोधे तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्या एव तादृशबोधोत्पत्ति नियामकतया तदभावादेव न तदापत्तिः । अतएव स्वत्वादिसम्बन्धेन राजादिविशिष्टपुरुषादितात्पर्यक तदादिपदघटितात् ससुन्दरइति वाक्यात् पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या राजा पुरुषः सुन्दर इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्तिरित्यपि निरस्तम् ससुन्दर इत्यादिवाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपदसमभिव्याहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टार्थोपस्थितिघटिततया तदभावादेवापत्त्यभावात्॥ अथैतादृशरीत्याऽऽपत्तिवारणे राज्ञःपुरुषइत्यादौ स्वत्वादिसम्बन्धेन पुरुषादौ राजाद्यन्वयबोधस्वीकारेऽपि क्षतिविरहादुक्तव्युत्पत्तिर्निर्युक्तिका विभक्तीनां सम्बन्धादिवाचकत्वमपि निर्युक्तिकं नीलोघटइत्यादौ विशेषणवाचक-

---

त्वभ्रमदशायामापत्तिस्तस्य प्रत्ययत्वेन ज्ञातत्वाभावादिति । ज्ञाननिवेशासम्भवादिति अत्र प्रत्ययत्वव्याप्यधर्मेण ज्ञातं यत्तज्जन्योपस्थितित्वेन कारणत्वोक्तौ यद्यपि सम्बन्धपदत्वस्य प्रत्ययत्वव्याप्यत्वाभावात्तद्भ्रमदशायान्नापत्तिः ङस्त्वादेः प्रत्ययत्वव्याप्यत्वात् सम्बन्धादिपदे ङस्त्वादिभ्रमदशायाञ्च नानुपपत्तिः धर्मांशे प्रत्ययत्वव्याप्यत्वस्योपलक्षणत्वात् प्रत्ययत्वाद्यज्ञानदशायाञ्च नानुपपत्तिस्तथापि राज्ञइत्यानुपूर्वीविशेषाज्ञानदशायां राजन्ङस्इत्यादिज्ञानदशायामपि शाब्दबोधापत्तिः तद्व्यक्तित्वादिनाङसादिज्ञानदशायांशाब्दबोधापत्तिश्चातोन ज्ञाननिवेशोऽपि निर्वाहइति बोध्यम् ॥ यादृशं फलं क्वचित्प्रसिद्ध्यति तादृशस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलात यादृशं तु सर्वथैवाप्रसिद्धं तादृशस्य नापत्तिः सम्भवत्यापादकाभावादतो नात्रभेदान्वयबोधापत्तिरित्याह इदंपुनरत्रतत्त्वमिति । तत्पदत्वावच्छिन्नविशेष्यकेति अस्य समभिव्याहारज्ञानेन सहान्वयः । एतादृशरीत्येति आनुपूर्वीविशेषरूपाकाङ्क्षायाः प्रयोजकत्वकल्पनयेत्यर्थः । उक्तव्युत्पत्तिरिति निपातातिरिक्तनामार्थयोर्भेदेन साक्षादनन्वयनियमइत्यर्थः । निर्युक्तिकेति राजापुरुषइत्यादौ भेदान्वयबोधवारणस्याकाङ्क्षाज्ञानविशेषरूपकारणविरहादेव सम्भवादितिभावः । सम्बन्धादिवाचकत्वमिति आदिपदात्कर्मत्वकर्तृत्वा

पदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात् नहि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीबलाद्राजापुरुषइत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गःसम्भवति तत्स्थलीयसामग्र्याः षष्ठ्यन्तराजपदत्वाद्यवच्छिन्नधर्मिक पुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्याअभावात् एवञ्च राजपुरुषइत्यादि समासे राजादिपदस्य राजसम्बन्ध्यादिलक्षणास्वीकारोऽपि व्यर्थः तत्र भेदान्वयबोधस्वीकारेऽपि क्षतिविरहात्। नच तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलाद्राजापुरुषइत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यं तत्स्थलीयशाब्दबोधे राजपदाव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपद व्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानासम्भवेन तत्र तादृशबोधसामग्र्याअसिद्धेः। नच प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात्प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमिति वाच्यं भवन्मतेऽपि राजपुरुषइत्यादौ यादृशसामग्रीबलाद्राजपदार्थराजसम्बन्धिपुरुषपदार्थयोरभेदान्वयबोधस्तादृशसामग्रीबलाद्राज्ञः पुरुषइत्यादावपि राजादिपदस्य राजसम्बन्ध्यादौ लक्षणाग्रहसत्त्वे तादृशाभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात् अस्माभिर्भेदान्वयबोधएव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात्। नचोभयमत एव राजसम्बन्धिनि राजपदस्य स्वारसिक लक्षणाग्रहेण राजपुरुषइत्यत्र राजसम्बन्धिपुरुषयोरभेदान्वयबोधो

---

दिपरिग्रहः। उचितत्वादिति नच घटमित्यादिद्वितीयाद्यन्तमात्रप्रयोगस्थले जायमानस्य कर्मत्वं घटीयमिति शाब्दबोधस्यानुपपत्तिः कर्मत्वस्यात्र विशेष्यविधयैव भानादतो विभक्तेः कर्मत्वादौ शक्तेरावश्यकतयानिरर्थकत्वाभिधानमयुक्तमिति वाच्यं विभक्त्यन्तपदद्वयसमभिव्याहारादेव शाब्दबोधोनत्वेकविभक्त्यन्तपदस्थले एकविभक्त्यन्तस्थलेमानसएवबोध इत्यभिप्रायेण प्रत्यये कर्मत्वादिशक्तिभ्रमादेवात्रबोधइत्यभिप्रायेण वा उक्तत्वात्॥ प्रकारतावादिभीराजपुरुषइत्यत्राकाङ्क्षानुपपत्तिराशंक्यते नचप्रकृतीत्यादि। निष्प्रामाणिकमिति तथाच समभिव्याहाररूपैवाकाङ्क्षाप्रयोजिका वाच्या साच राजपुरुषइत्यादाविव राजापुरुषइत्यादावप्यस्तीत्यतोऽत्र भेदान्वयापत्तिरितिभावः। भवन्मतेऽपीति प्रकारतावादिमतेऽपीत्यर्थः। तादृशाभेदान्वयबोधेति राजसम्बन्धीपुरुषइत्यन्वयबोधेत्यर्थः। अस्माभिरिति संसर्गतावादिभिरित्यर्थः। कल्पनीयत्वादिति तथाच न प्रकृतिप्रत्यययोरानुपूर्वीविशेषस्यैवाकाङ्क्षात्वं किन्तु प्रातिपदिकद्वयाव्यवधानघटितानुपूर्वीविशेषस्यापीति भावः। प्रकारतावादी शंकते नचोभयेति।

भवति । इयांस्तु विशेषो यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति । एवञ्च पुरुषविशेष्यकाभेदसंसर्गक राजसम्बन्धिप्रकारकबोधे राजपदाव्यवहितोत्तरवर्त्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमितिवाच्यम्। उक्ताभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायशब्दान्तरघटितानुपूर्वीज्ञानजन्यतथाविधान्वयबोधे व्यभिचार-

---

अस्मन्मतेइति प्रकारतावादिमते । भवन्मतइति संसर्गतावादिमते इत्यर्थः अयमाशयः प्रकारतावादिनां राजपुरुषइत्यत्र यदाऽभेदसंसर्गकराजप्रकारकपुरुषविशेष्यकबोधस्तदा कर्मधारयत्वं यदातु राजसम्बन्धिप्रकारकतादात्म्यसंसर्गक पुरुषविशेष्यकबोधस्तदा षष्ठीतत्पुरुषत्वम् संसर्गतावादिनां राजपुरुषइत्यत्र यदा स्वत्वसंसर्गकराजप्रकारको राजवान् पुरुषइति बोधस्तदा षष्ठीतत्पुरुषसमासत्वं यदा तु राजापुरुषः राजसम्बन्धीपुरुषइति वा तादात्म्यसंसर्गको बोधस्तदा कर्मधारयत्वं 'यत्र स्वघटकपदार्थविशेष्यकत्वेसति स्वघटकपदानांस्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थाश्रयेलक्षणांविनासामानाधिकरण्यं तत्रकर्मधायत्वं, 'यत्रस्वघटकपदानां स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थाश्रयेलक्षणयासामानाधिकरण्य तत्र तत्पुरुषत्वम्, इतिहिप्रकारतावादिमते तयोर्लक्षणं तत्र बहुव्रीहावतिप्रसङ्गवारणायोक्तविशेष्यकत्वन्निवेशितम् । संसर्गतावादिमते तु 'यत्र स्वघटकपदार्थविशेष्यकत्वेसति स्वघटकपदानांशक्त्यालक्षणया वा सामानाधिकरण्यंतत्र कर्मधारयत्वं 'यत्र न तादृशसामानाधिकरण्यं तत्र समास विशेषेतत्पुरुषत्वम्, इति तयोर्लक्षणं तथाच संसर्गतावादिमते राजपदस्य राजसम्बन्धिनि लक्षणास्थले राजपदपुरुषपदयोः सामानाधिकरण्यात्पुरुषस्य विशेष्यत्वाच्च कर्मधारयत्वम् यत्पदद्वयार्थयोरभेदान्वयबोधस्तत्पदद्वये हि समानाधिकरण्यव्यवहारइति ॥ अथ पुरुषविशेष्यकाभेदसंस र्गकराजप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति राजपुरुषइत्याकाङ्क्षाज्ञानत्वेन कारणत्वं न सम्भवति तादृशाकाङ्क्षाज्ञानं विनापि नृपपुरुषइत्याद्याकाङ्क्षाज्ञानात्तादृशशाब्दबोधस्योत्पत्त्या व्यभिचारात् । नवा तत्तदाकाङ्क्षाज्ञानानामखण्डोपाधिरूपेणाप्यन्यतमत्वेनकारणत्वं सम्भवति राजपुरुषइत्याद्याकाङ्क्षाज्ञानस्य हिराजपदजन्या राजोपस्थितिरेव सहकारिणी नतु नृपादिपदजन्यापवञ्च नृपपद जन्योपस्थितिराज्ञः पुरुषइतिवाक्यज्ञानयोः सत्त्वेशाब्दबोध आपद्येत नच राजपदजन्यराजोपस्थितिविशिष्टराजपुरुष इत्याकाङ्क्षाज्ञानघटितान्यतमत्वेन कारणत्वम् एवमन्यत्रापि तत्तदुपस्थितिविशिष्टतत्तदाकाङ्क्षाज्ञानान्यतमत्वेनैव कारणत्वमिति वाच्यं तथासति हि राजपदजन्यराजोपस्थितिद्वितीयक्षणे राजपुरुषइत्याकाङ्क्षाज्ञानं यत्र जातं तत्र तदाकाङ्क्षाज्ञानमपि एककालीनैकात्मवृत्तित्वसम्बन्धेन राजपदजन्यराजोपस्थितिविशिष्टम् अत उक्ताकाङ्क्षाज्ञानतृतीयक्षणेऽपि राजपुरुषइति शाब्दबोधापत्तिः कार्योत्पत्तिप्राक्क्षणे कारणस्य तथाविधाकाङ्क्षाज्ञानस्य सत्त्वादतोऽप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधाच्च राजपुरुषइत्याकाङ्क्षाज्ञानाव्यवहितोत्तरत्वावच्छिन्नम्प्रति राजपुरुषइत्याकाङ्क्षाज्ञानत्वेन कारणत्वं वाच्यमेवमपिविषयविशेषमन्तर्भाव्य उक्ताव्यवहितोत्तरपुरुषविशेष्यकाभेदसंसर्गकराजप्रकारकशाब्दत्वावच्छिन्नम्प्रति न कारणत्व प्रयोजनाभावेन गुरुभूतस्यै तादृशा-

वारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटाववश्यं निवेशनीयतया तत्र विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदान्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुतायाअनाधिक्यात् । एवं तण्डुलं पचतीत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसम्बन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकस्य विषयताकल्पने च गौरवात् तण्डुलं पचतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीबलात्तण्डुलः पचतीत्यादावपि तथाविधान्वयबोधापत्तिस्तु न सम्भवति । तादृशान्वयबोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिकपचतीत्यादिसमभिव्याहारज्ञानस्य हेतुतया तण्डुलः पचतीत्यादौ तादृशसामग्र्या अप्रसिद्धेः । एवं पचति चैत्रइत्यादावपि कृतिसम्बन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोधस्वीकारउचितः । अन्यथोक्तरीत्या गौरवात् तत्र तादृशान्वयबोधस्वीकारे तत्स्थलीयसामग्रीबलात् पच्यते चैत्रः पाकश्चैत्रइत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्यैव वारणसम्भवादिति। मैवम् राज्ञः पुरुषइत्यादौ षष्ठ्यादेः स्वत्वादिवा-

---

च्यत्वस्यावच्छेदकत्वकल्पनानुचितत्वादित्याशयवानाह उक्ताभेदान्वयबोधइत्यादि॥ अनाधिक्यादिति स्वत्वसंसर्गकराजप्रकारकोऽभेदसंसर्गकराजसम्बन्धिप्रकारकश्च यः पुरुषविशेष्यको बोधस्तदुभयत्रोक्ताव्यवहितोत्तरत्वस्य सत्वान्न कार्यताभेदो नवा तत्प्रयुक्तः कारणताभेद इतिभावः । गौरवादिति कर्मत्वस्य संसर्गत्वे तु तत्संसर्गो न भासतेऽनवस्थाभयेन संसर्गसंसर्गभानानुपगमादिति भाव । उक्तरीत्या गौरवादिति आख्यातस्य कृतौ शक्तिकल्पनायां कृतेश्च समवायेन शाब्दबोधे भानकल्पनायां च गौरवादित्यर्थः॥ उक्तरीत्यैवेति तादृशशाब्दबोधम्प्रति तथाविधानुपूर्वीविशेषरूपाया आकाङ्क्षायाः प्रयोजकत्वकल्पनयैवेत्यर्थः। किञ्चात्र प्रवदन्ति संसर्गतावादिनः "नहि प्रजावतीयस्मै त्वं तस्मैदेहि कम्बलम्," इत्यादौ तदादिपदात् प्रजावतीशब्दार्थभ्रातृजायाघटकभ्रातृपरामर्शवारणाय तदादिपदस्य वृत्तिग्रहमुख्यविशेष्यपरामर्शकत्वव्युत्पत्तेरुपेयतया "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः। चैत्रो ग्रामगतस्तत्र मैत्रः किं क्रियतेऽधुना" इत्यादौ राजादिपदस्य राजसम्बन्ध्यादिलाक्षणिकत्वे तत्पदेन राजादिपरामर्शो नस्यात्तस्य वृत्तिग्रहमुख्यविशेष्यत्वाभावादतो विभक्त्यर्थसंसर्गत्वपक्षएव युक्तः तथा चैतत्पक्षे नामार्थयोर्भेदेनान्वयोपगमात राजमातङ्गाइत्यत्र राज्ञः स्वत्वसम्बन्धेनान्वयादेवोपपत्ते र्लक्षणाया अनावश्यकत्वेन राज्ञो वृत्तिग्रहमुख्यविशेष्यतया तदादिपदेन परामर्शो युज्यतएवेति ॥ संसर्गतापक्षं प्रतिक्षिपन् प्रकारतापक्षं परिष्कुरुते मैवमित्यादिना । स्वत्वादिवाचकत्वमिति नन्वितः पूर्वसन्दर्भसमालोचनया सम्बन्ध-

चकत्वमावश्यकम् अन्यथा पुरुषो न राज्ञइत्यादौ पुरुषे राजस्वत्वाद्यभाववोधानुपपत्तेः। नहि तत्र स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावएव प्रतीयते नतु राजस्वत्वाद्यभावइति सम्भवति स्वत्वादिसम्बन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। अतएव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थतां नवीनाः स्वीकुर्वन्ति। स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासम्बन्धेन पुरुषांशेऽन्वयसम्भवेऽपि तादृशसम्बन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेकत्वेन तत्सम्बन्धावच्छिन्नाभावस्य नञाप्रत्यायनासम्भवात्। आश्रयतासम्बन्धाद्यवच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसम्बन्धिनि धनेऽपि आश्रयतासम्बन्धावच्छिन्नप्रतियोगिताक चैत्रवृत्तिस्वामित्वाभावसत्त्वात् नेदं चैत्रस्येति प्रयोगापत्तिः नच नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेऽपि राज्ञः पुरुषइत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितं तस्य प्रकारत्वोपगमे तत्सम्बन्धस्याधिकस्य भानकल्पनेन गौरवात्। नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीवलात् तत्प्रकारकवोधस्य तदसमभिव्याहारस्थलेऽसम्भवादि-

---

त्वेन स्वत्वादीनां वाच्यत्वं प्रतीयतेऽत्रच स्वत्वत्वादिना तत्र किंयुक्तमितिचेत् स्वत्वादिनैव वाच्यत्वं युक्तमन्यथा राज्ञो नेदं स्वमिति बाधनिर्णयकालेऽपि राज्ञः पुरुषइति वाक्याच्छाब्दबोधः प्रसज्ज्येत स्वत्वाभाववत्तानिश्चयस्य सम्बन्धवत्ताबुद्धिम्प्रत्यप्रतिबन्धकत्वात् पूर्वग्रन्थे सम्बन्धत्वेनकीर्त्तनन्तु ग्रन्थकारलेखसम्प्रदायानुसारेणेत्यवधेयम्। प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वादाह अन्यथेत्यादि। नहीति सम्भवतीत्यनेनान्वयः। वृत्त्यनियामकतयेति वृत्तितानियामकाश्चसम्बन्धाः स्वरूपसंयोगकालिकसमवायदिक्कृतविशेषणताइति बोध्यम्॥ संभवेऽपीति एवंसति पुरुषो न राज्ञइत्यादौ निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताक राजनिष्ठस्वामित्वाभावएवविषयोच्यः सतुनसंभवतीत्याह तादृशसम्बन्धस्येति। वृत्त्यनियामकस्यापि तादात्म्यस्यान्योन्याभावप्रतियोगितावच्छेदकत्वादाह संसर्गाभावेति। आश्रयतासम्बन्धेति आश्रयत्वप्रतीतिनियामकस्वरूपसमवायादि सम्बन्धेत्यर्थः। आश्रयत्वमपि सम्बन्धविशेषएव वह्निमानयमितिनिर्णयेऽपि समवायेन संयोगेनवाऽत्रवह्निरितिसंशयदर्शनादित्यपि कश्चित्। संसर्गमर्यादयाभानमुचितमित्यादि अत्रेदं विचारणीयम् नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वोपगमे नञ्समभिव्याहाराभावेऽपि षष्ठ्योपस्थापित-

ति वाच्यम् । एवंसति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्यापलापापत्तेः । राज्ञः पुरुषइत्यादिवाक्यजन्याप्रामाण्यज्ञानानास्कन्दितबोधदशायां पुरुषो न राज्ञ इत्यादिवाक्यादपि शाब्दबोधापत्तेः स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरो-

---

स्य स्वत्वस्य प्रकारविधयैव भानंयुक्तं यद्युपस्थितस्याप्यर्थस्य लाघवेन संसर्गविधया भानमुपेयेत तदोक्तयुक्त्या राजपुरुषइत्यादौ पुरुषपदोत्तरैकवचनार्थैकत्वसंसर्गकोटौ राजादिपदार्थान्निःक्षिप्य स्वसमानाधिकरणराजस्वत्वसम्बन्धेनैकत्वप्रकारकपुरुषविशेष्यकबोधस्यैवाङ्गीकारापत्तिः तथासत्यनुभवव्याकुलीभावः प्रसज्ज्येत अतो यद्यदर्थविषयकबोधे यद्यदर्थोपस्थितिर्नियता तत्तदर्थस्य न तत्र संसर्गविधया भानमित्यवश्यमङ्गीकार्यमतो न षष्ठ्युपस्थापितस्वत्वस्य संसर्गतया भानमुपेतुमुचितमिति । अप्रामाण्यज्ञानेति एतच्च प्रतिबन्धकतावच्छेदकरूपोपपत्त्यर्थमुक्तं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिलौकिकसंनिकर्षाजन्यदोषविशेषाजन्यानाहार्यबुद्धित्वावच्छिन्नम्प्रति हि तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपित तद्धर्मावच्छिन्नविशेष्यताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वेन प्रतिबन्धकत्वं भवति अत्र संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताक पर्वतत्वावच्छिन्नविशेष्यताकबुद्धिम्प्रति समवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयस्याप्रतिबन्धकत्वात् प्रतिबध्यतावच्छेदककोटौ तत्सम्बन्धावच्छिन्नेत्युक्तम् । एवं द्रव्यत्वेन वह्न्यवगाहिद्रव्यवान् पर्वतइति बुद्धिम्प्रति वह्न्यभाववान् पर्वतइति निश्चयस्याप्रतिबन्धकत्वात्तद्धर्मावच्छिन्नेत्युक्तम् लौकिकसन्निकर्षजन्यंपर्वतोवह्निमानिति प्रत्यक्षं प्रतिपर्वतोवह्न्यभाववानितिनिश्चयस्याप्रतिबन्धकत्वालौकिकसंनिकर्षाजन्येत्युक्तम् शंखादौपीतत्वाभावनिश्चयेऽपि पित्तादिदोषदूषितनेत्रस्य पुंसः पीतःशंख इत्यवभासतएवेत्यतो दोषविशेषाजन्येत्युक्तम् नटयादौ शकुन्तलादिभेदनिश्चयेऽपीच्छया इयं शकुन्तला इयनटीत्यादिबुद्धेरुत्पत्त्याऽऽहार्यज्ञानस्य न प्रतिबध्यत्वं नवा प्रतिबन्धकत्वमतउभयदिशि अनाहार्यत्वनिवेशः प्रतिबध्यतायाः संशयनिश्चयसाधारणत्वात् बुद्धित्वस्य प्रतिबध्यतावच्छेदकतया निवेशः ॥ पर्वतोवह्न्यभाववानिति ज्ञाने इदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दिते प्रतिबन्धकत्वविरहात् प्रतिबन्धकतावच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः पर्वतोवह्निमान्नवेति संशयस्य पर्वतोवह्निमानित्यादि ज्ञानम्प्रत्यप्रतिबन्धकत्वान्निश्चयत्वनिवेशः इत्थमेव तद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकत्वं तदभाववत्ताबुद्धौ तद्वत्तानिश्चयस्य तद्व्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वमूह्यमिति । एवञ्च प्रकृते स्वत्वसंसर्गकराजप्रकारकनिश्चयस्य-

धित्वे मानाभावात्। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि राज्ञः पुरुषइत्यादौ स्वत्वादेः प्रकारताभ्युपगमः समुचितः। अन्यथा तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले राजस्वत्वाभाववान् पुरुषःसुन्दर इत्याकारकविशिष्ट-

---

राजस्वत्वाभाववान्पुरुषइति ज्ञानम्प्रति नप्रतिबन्धकत्वमिति बोध्यम् ॥ मानाभावादिति अथ कल्पनाया दृष्टानुसारित्वात् राज्ञःपुरुष इत्यादिवाक्यजन्यबोधानन्तरं पुरुषो न राज्ञ इत्यादिवाक्याच्छाब्दबोधस्यानुत्पादे स्वत्वसंसर्गकस्याप्युक्तवाक्यजन्यबोधस्य प्रतिबन्धकत्वं लाघवज्ञानसहकृतेन तदनुत्पादेनैव कल्पनीयमिति मानाभावोक्तिरयुक्तेति चेन्मैवम् राजस्वत्वाभाववान्पुरुषइति ज्ञानम्प्रति अनुमित्यादिसाधारणराजस्वत्वप्रकारकपुरुषविशेष्यकनिश्चयत्वेन प्रतिबन्धकत्वस्योभयवादिसिद्धतयोक्तज्ञानम्प्रति स्वत्वसंसर्गकनिश्चयत्वेन प्रतिबन्धकत्वान्तरकल्पने गौरवादिति. ॥ वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वपक्षे स्वत्वादेः प्रकारतां व्यवस्थाप्य तस्य प्रतियोगितावच्छेदकत्वपक्षेऽपि तां व्यवस्थापयति वृत्त्यनियामकेत्यादि अयम्भावः यथा दण्डाद्धटस्तथा गगनंन पारिमाण्डल्यादित्यादिवाक्यस्य प्रामाणिकत्वे वृत्त्यनियामकोऽपि सम्बन्धः प्रतियोगितावच्छेदको वाच्यः उक्तवाक्याद्धि दण्डजन्यो यथा घटस्तथा पारिमाण्डल्यजन्यो नाकाशइति बोधो नोपगन्तुं शक्यः पारिमाण्डल्यस्याणुपरिमाणरूपस्याकारणत्वेन तज्जन्यत्वस्याप्रसिद्धतयोक्तवाक्यस्याप्रामाणिकत्वप्रसङ्गात् अतो जन्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकपारिमाण्डल्याभाववद्गगनमित्येव बोधः स्वीकर्तुमुचित इत्थञ्च जन्यत्वस्येव सम्बन्धान्तरस्यापि वृत्त्यनियामकस्य प्रतीत्यनुरोधात् प्रतियोगितावच्छेदकत्वमङ्गीकार्यम् स्वयमपि चैतद्विवेचयिष्यति भट्टाचार्योद्वितीयायाम्॥ तादृशसमभिव्याहारज्ञानेति राज्ञः पुरुषइति समभिव्याहारज्ञानेत्यर्थः राजस्वत्वाभाववानित्यादि अत्र राजस्वत्वाभाववान् पुरुषइति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वरीत्या विशेषणतावच्छेदकप्रकारकज्ञानस्यकारणत्वरीत्याऽपि स्वत्वाभावइति ज्ञानमेवापेक्षित नतुराजस्वत्वाभाववान् पुरुषइति तच्चज्ञानंनशाब्दप्रतिकूलमनोराज्ञः पुरुषइतिवाक्यघटितशाब्दसामग्र्या राजस्वत्वाभाववान् पुरुषइति प्रत्यक्षसामग्र्याश्चैकदाऽवस्थानसम्भवात्तत्र प्रकारतावादिभिरपि तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमेवेत्यतः सुन्दरपदमुपात्तम् तथाच राजस्वत्वाभावविशिष्टपुरुषवैशिष्ट्यावगाहिप्रत्यक्षस्य विशेषणतावच्छेदकीभूतराजस्वत्वाभावप्रकारकपुरुषविशेष्यकज्ञानघटितासामग्री राज्ञः पुरुषइत्याकाङ्क्षाज्ञानघटितशाब्दसामग्रीकालेऽपि सम्भवति संसर्गतामते राजस्वत्वाभाववान् पुरुषइति निश्चयाभावस्य बाधनिश्चयाभावत्वेन राज्ञः पुरुषइति वाक्यजन्यबोधे कारणत्वविरहात स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुषइति निश्चयाभावस्येव का-

वैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनाधिक्येन गौरवात् । अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्या राजस्वत्वाभाववान्पुरुष इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेषणतावच्छेदकादिप्रकारकनिश्चयरूपकारण-विरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसम्भवेन तादृशसामग्र्यास्तत्र

---

रणत्वात् अतस्तत्प्रत्यक्षवारणाय तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिः प्रकारतामते तु राज्ञः पुरुषइत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः राजस्वत्वाभाववान् पुरुषइति बाधनिश्चयाभावघटिततया एकदा सामग्रीद्वयसमावेशो न सम्भवतीति न प्रतिबन्धकताकल्पनाऽवसरइति भावः॥प्रत्यक्षवारणायेति मानसप्रत्यक्षवारणायेत्यर्थः। प्रतिबन्धकत्वकल्पनेति विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वादिति भावः । अथ विभिन्नविषयकप्रत्यक्षम्प्रत्युक्तप्रतिबन्धकता किमर्थमङ्गीकार्येति चेच्छृणु प्रत्यक्षसामग्र्यां शाब्दसामग्र्याश्च सत्यां प्रत्यक्षात्मकं शाब्दात्मकञ्च समूहालम्बनन्नोपगन्तुं शक्यं प्रत्यक्षत्वशाब्दत्वयोः सांकर्यप्रसङ्गात् नापि ज्ञानद्वयमेकदा सम्भवति ज्ञानेच्छादीनां यौगपद्यानभ्युपगमात् अत एकतरसामग्र्याः प्रतिबन्धकत्वमुररीकृत्यैकतरमेव ज्ञानमङ्गीकार्यं तत्र यदि प्रत्यक्षसामग्री शाब्दबोधं प्रतिबध्नीयात्तदा शाब्दमात्रमुच्छिद्येत सर्वत्र शाब्दसामग्रीकाले योग्यताज्ञानादेर्मानसप्रत्यक्षसामग्र्याः सत्त्वादतः शाब्दसामग्र्येव प्रत्यक्षम्प्रतिबध्नातीति सिद्ध्यति । अस्मन्मतेइति प्रकारतावादिमते । बाधाभावेति बाधनिश्चयाभावेत्यर्थः । कारणविरहादेवेति विशिष्टवैशिष्ट्यावगाहिबुद्धौ कारणीभूतस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य विरहादेवेत्यर्थः । विशिष्टबुद्धिसामान्यम्प्रति बाधनिश्चयस्य प्रतिबन्धकतया तदभावस्यकारणत्वमतो राजस्वत्वाभाववान् पुरुषइति बाधनिश्चयरूपप्रतिबन्धकाभावस्य राज्ञः पुरुषइति वाक्यज्ञानघटितशाब्दसामग्र्यां निवेशनीयतया उक्तवाक्यज्ञानघटितशाब्दसामग्र्या उपदर्शितविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामग्र्याश्च युगपदवस्थानाभावान्न प्रतिबन्धकत्वकल्पनाप्रसरइति भावः । ननु राज्ञः पुरुष इत्याकाङ्क्षाज्ञानघटितशाब्दसामग्रीत्वावच्छिन्नप्रतिबन्धकतानिरूपिताया घटपटादिविषयकतत्तत्प्रत्यक्षत्वावच्छिन्नाया अनन्तप्रतिबध्यतायाः कल्पनापेक्षया लाघवाद्राजत्वावच्छिन्नविषयतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपयद्भिन्नविषयकत्वंतद्विशिष्टप्रत्यक्षत्वत्वावच्छिन्ना एकैव-प्रतिबध्यता कल्पनीया तथाच राजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यतावन्नेति प्रतीतिसिद्धभेदप्रतियोगितानवच्छेदकविषयताकत्वस्य घटपटादिनिष्ठविषयताशालिप्रत्यक्षइव राजस्वत्वाभाववान् पुरुषः सुन्दरइतिप्रत्यक्षेपि सत्त्वात्तस्याप्युक्तप्रतिबध्यतावच्छेदकाक्रान्ततया न प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनमिति न संसर्गतामतेऽपि प्रतिबन्धकत्वाधिक्यमित्याशंकां निराक-

प्रतिबन्धकत्वस्याकल्पनात् । अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकजया तादृशेच्छायामसत्यां चोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छावलादुपदर्शित विशिष्टवैशिष्ट्यबोधोपपत्तये

---

रोति अन्यादृशप्रत्यक्षेत्यादिना राज्ञः पुरुष इत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः सत्त्वेऽपि घटप्रत्यक्षं जायतामितीच्छादशायां घटप्रत्यक्षसामग्रीसत्त्वे इच्छाघटित सामग्र्या बलवत्त्वात घटप्रत्यक्षमेव जायते नतु शाब्दबोधस्तदुपपत्यर्थं राजत्वावच्छिन्नविषयतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपभिन्नविषयकत्वविशिष्टप्रत्यक्षम्प्रति घटप्रत्यक्षेच्छाविरहविशिष्टाया राज्ञः पुरुषइत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वस्योक्तौ घटप्रत्यक्षेच्छादशायां पटप्रत्यक्षेच्छाविरहेऽपि पटप्रत्यक्षसामग्र्यां राज्ञः पुरुषइत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याञ्च सत्यां पटप्रत्यक्षापत्तिः स्यात् घटप्रत्यक्षेच्छावैशिष्ट्यस्यैवोक्तशाब्दसामग्र्यां सत्त्वेन तस्यां प्रतिबन्धकत्वासम्भवात्। इत्थमेव राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षसामग्र्याः घटप्रत्यक्षं जायतामितीच्छायाः राज्ञः पुरुषइतिवाक्यज्ञानघटितशाब्दसामग्र्याञ्च सत्त्वे राजस्वत्वाभावविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षापत्तिः स्याद् घटप्रत्यक्षेच्छावैशिष्ट्यस्यैवैतच्छाब्दसामग्र्यां सत्त्वेनैतस्यां प्रतिबन्धकत्वायोगात् नचोपदर्शितभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपविभिन्नविषयकत्वविशिष्टप्रत्यक्षम्प्रति राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्या अपि प्रतिबन्धकत्वम्वाच्यम् तथाचैतत्प्रत्यक्षेच्छाविरहकाले शाब्दसामग्र्याःप्रतिबन्धकत्वात् नैतत्प्रत्यक्षापत्तिरिति वाच्यम् तथासत्युक्तविशिष्टवैशिष्ट्यप्रत्यक्षेच्छायां राज्ञः पुरुषइति वाक्यघटितशाब्दसामग्र्यां घटप्रत्यक्षसामग्र्याञ्च सत्यां घटप्रत्यक्षेच्छाविरहेऽपि घटप्रत्यक्षापत्तिः उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षेच्छावैशिष्ट्यस्यैव तच्छाब्दसामग्र्यां सत्त्वेन प्रतिबन्धकत्वायोगादतो घटप्रत्यक्षम्प्रति घटप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुषइति वाक्यज्ञानघटितशाब्दसामग्रीत्वेन एवमुक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षम्प्रति तत्प्रत्यक्षेच्छाविरहविशिष्टोक्तशाब्दसामग्रीत्वेनाननुगतएवविभिन्नविषयकप्रत्यक्षशाब्दसामग्र्योः प्रतिबध्यप्रतिबन्धकभावइति ॥ अथात्र यद्यदिच्छाव्यक्तिसत्त्वे राज्ञःपुरुषइति समभिव्याहारज्ञानघटितशाब्दसामग्रीकाले राजत्वावच्छिन्नविषयतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयताकप्रत्यक्षमुत्पद्यते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटविशिष्टराज्ञःपुरुषइति शाब्दसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यम् तथाच पूर्वोक्तदोषविरहात् प्रतिबध्यताभेदोनाङ्गीकरणीय इति चेन्न राज्ञःपुरुषइति शाब्दसामग्र्यां घटप्रत्यक्षसामग्र्यां पटप्रत्यक्षसामग्र्यां घटप्रत्यक्षेच्छायाञ्च सत्यां घटप्रत्यक्षमिव पटप्रत्यक्षमपि स्यात् घटप्रत्यक्षोपपत्त्यर्थं तदिच्छाव्यक्तेरुत्तेजकतायां आवश्यकतया घटप्रत्यक्षेच्छावैशिष्ट्यस्यैव राज्ञः पुरुषइति शाब्दसामग्र्यां

अन्यादृशविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात् । नच स्वत्वादेः प्रकारतामतेऽपि स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टपुरुषादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकत्वाधिक्येन गौरवम् । तत्संसर्गतामते तादृशसामग्र्याः स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्षवारणसम्भवादिति वाच्यम् मन्मते तादृशप्रत्यक्षंप्रति तथाविधसामग्र्याः प्रतिबन्धकत्वाधिक्येऽपि निरूपितत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकत्वाकल्पनेन तदंशे साम्यात् । तथाच पूर्वोक्तराजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादि विशिष्टवैशिष्ट्यप्रत्यक्षंप्रति राज्ञः पुरुष इत्यादिसामग्र्याः

---

सत्त्वेन प्रतिबन्धकत्वविरहात् प्रतिबध्यताभेदेऽभ्युपगम्यमाने तु पटप्रत्यक्षं प्रति पटप्रत्यक्षेच्छाविरहविशिष्टायाएव राज्ञः पुरुष इत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वमतः पटप्रत्यक्षेच्छैवोत्तेजिकेत्यतो न दोषः उत्तेजकत्वन्तु प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वमिति ॥ प्रकारतापक्षेऽप्युक्ताकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वाधिक्यमाशंकते नचेति वाच्यमित्यनेनान्वयः । प्रकारतामतेऽपीति अयमाशयः स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुष इति निश्चयस्य राजस्वत्ववान् पुरुषइति ज्ञानम्प्रत्यप्रतिबन्धकत्वेन एतन्निश्चयस्याभावो न राजस्वत्ववान् पुरुषइतिशाब्दसामग्रीघटकस्तथाचैतन्निश्चयघटितविशिष्टवैशिष्ट्यप्रत्यक्षसामग्र्याराजस्वत्ववान् पुरुष इति शाब्दसामग्र्याश्चैकदावस्थानसम्भवात् प्रकारतावादिनामपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावविशिष्टपुरुषवैशिष्ट्यप्रत्यक्षे राज्ञः पुरुषइति वाक्यज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनागौरवं समानमेवेति ॥ तथाविधसामग्र्याइति राज्ञः पुरुषइति वाक्यघटितसामग्र्याः ॥ तादृशसामग्र्याइति स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दसामग्र्याः । तत्सत्त्वइति उक्तशाब्दसामग्रीसत्त्वे । कारणविरहादेवेति स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावात्मकं यद्विशेषणतावच्छेदकं तत्प्रकारकनिश्चयविरहादेवेत्यर्थः । वारणसम्भवादिति तथाच न संसर्गतावादिनां प्रतिबन्धकत्वकल्पनाऽवसरइति भावः ॥ निरूपितत्वादिसम्बन्धेति अयमाशयः । निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वमिति निश्चयस्य स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकबोधम्प्रति प्रतिबन्धकत्वविरहेण तन्निश्चयाभावस्यतत्स्वत्वसंसर्गकबोधेऽनपेक्षितत्वेन राज्ञः पुरुष इति वाक्यज्ञानघटितसामग्र्याः निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववत्पुरुषविषयकप्रत्यक्षसामग्र्याश्चैकदा स्थितिसम्भवात्तत्रोक्तप्रत्यक्षंप्रति शाब्दसामग्र्याः संसर्गतावादिभिः प्रतिबन्धकत्वं कल्पनीयम् प्रकारतावादिभिस्तु राजस्वत्ववानिति ज्ञानम्प्रति निरूपितत्वसम्बन्धाव-

प्रतिबन्धकत्वकल्पनं संसर्गतावादिनाम्मतेऽधिकमिति । नच स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकम्प्रति तादृशसामग्रीप्रतिबन्धकतायां विभक्तिजन्यस्वत्वाद्युपस्थिति-निवेशाधिक्येन राजस्वत्वाभाववान् पुरुष इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम् । अस्मन्मते तादृशोपस्थितितथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधम्प्रत्यहेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकतायां तेषामनिवेशादिति वाच्यम् । भवन्मतेऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वा-भाववानपुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्य-शाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवे-शनस्याधिक्येन लाघवानवकाशात् । मन्मते राजस्वत्वाभाववान् पुरुष इत्यादिबाधा-भावनिवेशेनैव तादृशनिश्चयकाले प्रत्यक्षोपपत्तेस्तदभावानिवेशात् ॥ यत्तु राज्ञः पुरुष-

---

च्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वविषयकनिश्चयस्य प्रतिबन्धकतयैतन्निश्चया भावघटितैव राजस्वत्ववान् पुरुष इतिशाब्दसामग्री वाच्या तथासत्युक्तप्रत्यक्ष-सामग्रया उक्तशाब्दसामग्रयाश्च युगपत्स्थित्यभावान्नप्रतिबन्धकत्वकल्पनावकाश इति ॥ संसर्गतावादी पुनः प्रत्यवतिष्ठते नचस्वत्वादेरित्यादिना नचेत्यस्य वा-च्यमिति परेणान्वयः। तादृशसामग्रीप्रतिबन्धकतायामिति राज्ञः पुरुष इति वा-क्यज्ञानघटित शाब्दसामग्रीनिष्ठप्रतिबन्धकतायामित्यर्थः । इत्यादिबाधाद्यभावेति अत्र प्रथमेनादिपदेन निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्व-त्वमिति बाधनिश्चयस्य परिग्रहः द्वितीयेनादिपदेन राजस्वत्वाभावव्याप्यस्वत्व सम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुषइत्यादि निश्चयाभावस्य परिग्रहः । अस्मन्मतइति संसर्गतावादिमते । आक्षेपं प्रकारतावादी निराकुरुते भवन्मतेऽपीत्यादिना । स्वत्वसंम्बन्धावच्छिन्नप्रतियोगिताकेत्यादि तथाचैतन्निश्चयाभाव-स्यापि स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दसामग्रीकोटौ प्रवेशनीयतया घटपटादिप्रत्यक्षम्प्रति राज्ञः पुरुष इति वाक्यघटितशाब्दसामग्रीत्वावच्छिन्नप्र-तिबन्धकता एतन्निश्चयाभावेऽपि कल्पनीयेत्यतो गौरवमित्यर्थः । प्रकारतावादि-मते राजस्वत्वाभाववान् पुरुषइति निश्चयाभावनिवेशेनैवोक्तराजाभावव्याप्य-राजस्वत्वाभाववान् पुरुषइति निश्चयाभावस्यापि संग्रहात्तन्निश्चयकाले शाब्दापत्तिवारणसम्भवेन प्रत्यक्षस्यैवोत्पादान्न तस्योक्तशाब्दसामग्री-कोटौ प्रवेशोऽतो न गौरवमित्याह मन्मतेइति । तदभावानिवेशादिति अथ तन्निश्चयाभावानिवेशोऽपि "नचस्वत्वादेः प्रकारतामते घटप्रत्यक्षा-दिकम्प्रति," इत्यादिनाऽनुपदम्प्रदर्शितस्य राजस्वत्वाभाववान्पुरुषः निरूपित-त्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वमिति बाधनिश्चयाभावद्वयस्य

एवं राजस्वत्वाभावव्याप्यस्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुषः निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यवत्स्वत्वमिति बाधव्याप्यवत्तानिश्चयाभावद्वयस्य एवं विभक्तिजन्यस्वत्वाद्युपस्थितेरपि प्रवेशनीयतया न संसर्गतावाद्युद्भावितगौरवपरिहारः प्रकारतावादिनामतो नोक्तग्रन्थः सन्दर्भशुद्ध इति चेदत्राहुरस्मद्गुरुचरणाः प्रकारतापक्षे राजस्वत्वाभाववान् पुरुषः १ राजस्वत्वव्यापकाभाववान्पुरुषः २ राजस्वत्ववदवृत्तिमान् पुरुषः ३ स्वत्वाभाववान् पुरुषः ४ स्वत्वव्यापकाभाववान् पुरुषः ५ स्वत्ववदवृत्तिमान् पुरुषः ६ निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वम् ७ राजव्यापकाभाववत्स्वत्वम् ८ राजवदवृत्तिमत्स्वत्वञ्च ९ इति नवविधबाधः तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्येव तद्व्यापकाभाववत्तानिश्चयस्य तद्वदवृत्तिधर्मवत्तानिश्चयस्य च बाधनिश्चयविधयैवप्रतिबन्धकत्वात् संसर्गतामते च स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुषः १ राजव्यापकाभाववान् पुरुषः २ राजवदवृत्तिमान् पुरुषः ३ इति त्रिविधो बाधः । इत्थञ्च प्रकारतामते शाब्दसामग्रीकोटौ नवविधानां बाधनिश्चयानामभावाः नव ९ प्रवेशनीयाः एवमुक्तनवविधबाधव्याप्यसंसर्गतावादिमतसिद्धैकैकबाधविषयकाणाम् राजस्वत्वाभावव्याप्यराजाभाववान् पुरुषः राजस्वत्वव्यापकाभावव्याप्यराजाभाववान् पुरुषः राजस्वत्ववदवृत्तिव्याप्यराजाभाववान् पुरुषः इत्यादिनिश्चयानां सप्तविंशतिविधानामभावाः सप्तविंशतिसंख्यकाः २७ प्रवेशनीयाः । एवं संसर्गतावादिमतसिद्धेषु त्रिषु बाधेषु मध्ये द्वयोर्द्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण एकबाधविशिष्टापरबाधेप्रकारतावादिमतसिद्धबाधनवकान्तर्गतैकैकबाधव्याप्यत्वमवगाहमानानां राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजव्यापकाभाववान् पुरुषः १ राजस्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजाभाववान् पुरुषः २ राजस्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजवदवृत्तिमान् पुरुषः ३ राजस्वत्वाभावव्याप्यराजवदवृत्तिविशिष्टराजव्यापकाभाववान् पुरुषः ४ राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजवदवृत्तिमान् पुरुषः ५ राजस्वत्वाभावव्याप्यराजवदवृत्तिविशिष्टराजाभाववान्पुरुषः ६ इतिरीत्याचतुः पञ्चाशद्विधनिश्चयानामभावाःचतुःपञ्चाशत्संख्यकाः ५४ शाब्दसामग्रीकोटौ प्रवेशनीयाः एवं संसर्गतामतोक्तानां त्रयाणां परस्परविशेष्य विशेषणभावे विनिगमनाविरहेणैकैकबाधविशिष्टापरबाधविशिष्टापरबाधे प्रकारतावादिमतसिद्धबाधनवकान्तर्गतैकैकबाधव्याप्यत्वमवगाहमानानां राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजव्यापकाभावविशिष्टराजस्वत्ववदवृत्तिमान् पुरुषः राजस्वत्वाभावव्याप्यराजस्वत्ववदवृत्तिविशिष्टराजव्यापकाभावविशिष्टराजाभाववान् पुरुषः इत्यादिनिश्चयानामभावाः चतुः पञ्चाशत्संख्यकाः उक्तवाक्यघटितसामग्री कोटौ निवेश्याः सर्वेषामेवसंकलने च प्रकारतावादिमते १४४ चतुश्चत्वारिंशदधिकशतसंख्यकानामभावानाम् शाब्दसामग्रीकोटौ प्रवेशोऽत्र पर्यवस्यति ॥ संसर्गतावादिनांतुस्वमतसिद्धबाधत्रयान्तर्गतकैकबाधव्याप्यत्वंप्रकारतामतसिद्धबाधनवकान्तर्गतैकैकबाधेऽवगाहमानानां राजाभावव्याप्यराजस्वत्वाभाववान् पुरुषः

इत्यादौ राजस्वत्ववान् पुरुष इत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वं राजस्वत्ववान्पुरुष इत्याकारकद्विविधानुमितेरेव तदतिरिक्ताविषयकत्वेन तादृशानुमितिम्प्रति प्रत्येकं तादृशवाक्यघटितसामग्र्याः प्रतिबन्धकत्वद्वयम् अस्मन्मते च तादृशानुमित्योस्तथाविधवाक्यजन्याद्राजकीयः पुरुष इत्येतादृशबोधादतिरिक्तविषयकतया तत्रतादृशसामग्र्याः प्रतिबन्धकत्वकल्पनं नास्ति तथाविधानुमितितथाविधशाब्दसामग्र्योश्चसत्योरनुमितेरेवोत्पत्तेः अपितु राजकीयःपुरुष इत्याकारकस्वत्वसंसर्गकैकविधानुमितिम्प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवमिति तदप्यकिञ्चित्करम् भवद्भिर्यत्र यादृशानुमितिः स्वीक्रियतेऽस्माभिरपि तत्र तादृशानुमितेः स्वीकरणीयतयाऽनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वसाम्यात् उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियतेऽस्माभिरपि स्वीक्रियते कुतः प्रतिबन्ध-

---

इत्यादिनिश्चयानां सप्तविंशतीनामभावाः उक्तशब्दसामग्र्यां प्रवेश्याः एवं प्रकारतावादिमतसिद्धेषु नवसु बाधेषु द्वयोस्त्रयाणां चतुर्णां पञ्चानां षण्णां सप्तानामष्टानां नवानां परस्परविशेष्यविशेषणभावेविनिगमनाविरहेण संसर्गतावाद्यभिमतबाधत्रयान्तर्गतैकैकबाधव्याप्यत्वंप्रकारतावादिमतसिद्धैकैकबाधविशिष्टापरबाधेऽवगाहमानानां राजाभावव्याप्यराजस्वत्वाभावविशिष्टराजस्वत्वव्यापकाभाववान् पुरुषः एवं राजाभावव्याप्यराजस्वत्वाभावविशिष्टराजस्वत्वव्यापकाभावविशिष्टराजस्वत्ववदवृत्तिमान पुरुष इत्यादिनिश्चयानामभावाः लक्षाधिकसंख्यकाः राज्ञःपुरुषइति वाक्यघटितशाब्दसामग्रीकोटौ प्रवेशनीयाइति महागौरवमिति ॥ प्रौढिप्रकटनाय पुनः संसर्गतामतं खण्डयितुमुपक्रमते यत्त्विति । तदतिरिक्ताविषयेति राजस्वत्ववान् पुरुषइति शाब्दबोधनिरूपितविषयतावदतिरिक्ताविषयेत्यर्थः । प्रतिबध्यताभेदेन प्रतिबन्धकताभेदादाह प्रतिबन्धकताद्वयमिति समानविषयकानुमितिम्प्रति हि शाब्दसामग्र्याःविभिन्नविषयकशाब्दम्प्रति चानुमितिसामग्र्या प्रतिबन्धकत्वं तत्र समानविषयकत्वंतदीयविषयतावदतिरिक्ताविषयकत्वमितिबोध्यम् ॥अस्माभिरपिस्वीक्रियतइति ननु संसर्गतावादिनां राजकीयंस्वत्वं राजस्वत्ववान् पुरुषइत्यनुमितिद्वयस्वीकारः प्रतिबन्धकविरहात् सामग्रीसत्त्वाच्च युज्यतेतराम् प्रकारतावादिनान्तु एतदनुमितिद्वयस्वीकारो न युज्यते समानविषयकशाब्दसामग्र्याः प्रतिबन्धिकायाएव सत्त्वादतः प्रकृतग्रन्थोऽसङ्गतएवेति चेन्न समानविषयकानुमितित्वं हि न समानविषयकशाब्दसामग्र्याः प्रतिबध्यतावच्छेदकमिच्छाया उत्तेजकत्वानुरोधेनैकरूपेण प्रतिबध्यप्रतिबन्धकभावासम्भवादतः पर्वतोवह्निमानित्यनुमितिम्प्रति पर्वते वह्न्यनुमितिर्जायतामितीच्छाविरहविशिष्ट पर्वतोवह्निमानिति वाक्यज्ञानघटित शाब्दसामग्रीत्वेन प्रतिबन्धकत्वमेवं तत्रतत्रापि विशिष्यैवं प्रतिबध्यप्रतिबन्धकभावः फलबलेन कल्प-

कताद्वयकल्पनमिति भवतापि तादृशशाब्दम्प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धकताया वाच्यतया साम्याच्च । एवं राजपुरुषइत्यादिसमासवाक्यात्स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाधिक्येन गौरवात् तत्र राजसम्बन्धिप्रकारकाभेदान्वयबोधस्वीकारएवोचितः नच भवन्मतेऽपि तादृशाभेदान्वयबोधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवमिति वाच्यम् राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसम्बन्धेन राजसम्बन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मतेऽपि कर्मधारयत्वेनाभिमतात्तथाविधसमासवाक्यात्तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकताया उभयमतसिद्धत्वात् ॥यत्तु दधिपश्येत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोधवद्राजपुरुषइत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसम्बन्धप्रकारकभेदान्वयबोधनिर्वाहे राजसम्बन्धिनि निरूढलक्षणां स्वीकृत्याभेदान्वयबोधोपगमो निरर्थकः नच षष्ठीतत्पुरुषादिस्थलेऽपि लुप्तविभक्तिस्मरणएव चेदन्वयबोधस्तदा ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तिस्तत्र मातङ्गादौराजादीनामन्वयबोधोपपत्तये राजा-

---

नीयः तथाच राज्ञःपुरुषइत्यादिशाब्दसामग्रीकाले राजस्वत्ववान् पुरुषः राजकीयं स्वत्वमित्युभयविधानुमितेःप्रामाणिकत्वे ताम्प्रत्युक्तशाब्दसामग्र्याः प्रतिबन्धकत्वं भवद्भिरिवास्माभिरपिनकल्पनीयम्मानाभावादतोनानुपपत्तिरिति।समाधानान्तरमप्याह भवतापीत्यादि यथा प्रकारतावादिनामुक्तस्थले उक्तानुमितिद्वयम्प्रत्युक्तशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनार्हं तथा संसर्गतावादिनां स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दबोधम्प्रति उक्तानुमितिद्वयसामग्रीद्वयस्य प्रविबन्धकत्वं कल्पनार्हमित्युभयोः साम्यमेवेत्याशयः । उभयमतसिद्धत्वादिति तथाचस्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यक शाब्दबोधसामग्र्याः प्रतिबन्धकत्वम्पुनः संसर्गतावादिनामधिकमतः प्रकारतापक्षे एवलाघवमिति भावः । ननूक्तरीत्यालाघवसत्त्वेऽपि प्रकारतापक्षे "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः," । "चैत्रोग्रामगतस्तत्रमैत्रः किंक्रियतेऽधुना, इत्यादिपद्यानामनुपपत्तौ लाघवमकिञ्चित्करमेवेति चेन्न तेषाम्पद्यानाम्प्रामाणिकत्वे तदादिपदस्य समासस्थले लक्ष्यार्थघटकविभक्त्यर्थविशेषणीभवदर्थपरामर्शकत्वव्युत्पत्त्यन्तरस्वीकारेण हि राजपदलक्ष्यार्थराजसम्बन्धिविशेषणीभवद्राजपरामर्शकत्वन्नानुपपन्नमेवं परत्रापि बोध्यम् मीमांसकरपिखण्डदेवादिभिः प्रकारतापक्षएव भाट्टरहस्यादौ समर्थितः संसर्गतावादिनां जगदीशतर्कालङ्कारन्यायकौस्तुभकारादीनामप्यभिप्रायो गूढार्थतत्त्वालोके प्रकटीकृतो गुरुचरणैरितिततोऽवधेयम् ॥

दिपदोत्तरषष्ठ्यादिविभक्त्यनुसन्धानस्यावश्यकत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याभेदान्वयबोधसम्भवादिति वाच्यम्। यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामप्रयोगः अपितु समासाघटकपदसापेक्षतया राजपदस्यासामर्थ्यातिदेशात्समासासाधुत्वेन। तत्सापेक्षत्वञ्च तदर्थान्वितस्वार्थपरत्वम्, स्वार्थश्च स्वीयवृत्तिग्रहविशेष्यः। अतएव शरैः शातितपत्रः चैत्रस्य दासभार्येत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता। तदर्थैकदेशशातनदासत्वादावेव शरकरणकत्व चैत्रनिरूपितत्वादीनामन्वयात्। तदर्थान्वितेत्यत्राभेदान्वयो वा निवेशनीय इति। तदसत् स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञानादेस्तथाविधबोधजनकतायाः क्लृप्तत्वात्तत्र निरूढलक्षणास्वीकारे गौरवाभावात्। यत्र राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयमतसिद्धतया तादृशसमभिव्याहारज्ञानस्य राजसम्बन्ध्यभिन्नपुरुषबोधे कारणतायाः क्लृप्तत्वात् तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पनेमानाभावात्। नच स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वबोधस्योभयवादिसिद्धत्वेऽपि निरूढलक्षणामते सम्बन्धितात्पर्यस्यानादित्वकल्पनागौरवम् अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम्। राजपुरुषइत्यादिवाक्यजन्यशाब्दबोधात्पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पनापेक्षया तात्पर्यस्यानादित्वकल्पनायां गौरवविरहादिति। नचैवं दधिपश्यतीत्यादावपि दध्यादिपदस्य दधिकर्मकादौ लक्षणांस्वीकृत्य धात्वर्थेन समं तस्याभेदान्वयबोधोपपादन सम्भवात्तत्रापि लुप्तविभक्तिस्मरणकल्पनमनुचितमिति वाच्यम् दध्यादिपदस्य दधिकर्मकादौ लक्षणाग्रहदशायामपि तस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां

---

यत्त्विति तदसदित्यनेनसम्बन्धः। अतिदेशादिति सापेक्षमसमर्थवदित्यतिदेशादित्यर्थः। अतएवेति तदर्थान्वितस्वीयवृत्तिग्रहमुख्यविशेष्यपरत्वस्य तत्सापेक्षत्वात्मकत्वादेवेत्यर्थः। अभेदान्वयोवेति तथाचाभेदेन तदर्थान्वितस्वार्थं कत्वमेव तत्सापेक्षत्व मेवञ्चवृत्तिग्रहमुख्यविशेष्यत्वरूपंस्वार्थत्वन्नविवक्षणीयं-प्रयोजनाभावात्किन्तुस्वीयवृत्त्युपस्थाप्यत्वमेवेतिभावः। तादृशसमभिव्याहारज्ञानादेरिति राजपुरुषइतिसमभिव्याहारज्ञानादेरित्यर्थः। कल्पनायांगौरवविरहादिति लुप्तविभक्तिस्मरणस्य कारणत्वे तस्य राजपुरुषइत्यादिवाक्यजन्यबोधात्पूर्वं सर्वत्र स्थितिरावश्यकी एवम्भिन्नविषयकप्रत्यक्षप्रतिबन्धकताऽपि तद्घटितसामग्रीत्वावच्छिन्ना तन्निष्ठावाच्येत्यतोगौरवम् तात्पर्यस्यानादित्वकल्पनेऽपि अनादित्वज्ञानस्य कारणत्वविरहान्न तस्य शाब्दबोधात्पूर्वमपेक्षेत्यतो न गौरवमिति बोध्यम्॥ दध्यादिपदस्य दधिकर्मके लक्षणायां तस्य प्रथमान्तत्वादिभ्रमसत्वे दधिकर्मकदर्शनबोधो नेष्यते तत्र लक्षणास्वीकारे तु प्रथमान्तत्वादिभ्रमदशायामपि दधिकर्मकदर्शनबोधापत्तिरतो न लक्षणेत्याह तस्यद्वितीयेतरेति

दधिकर्मकः पश्यति दधिकर्मकेण पश्यतीत्यादाविवोक्तस्थलेऽपिदधिकर्मकदर्शनान्वयबोधानुदयात् भवन्मते दधिपश्यतीत्यादिस्थलीयदधिपदोत्तरपश्यतिपदत्वरूपाकाङ्क्षाज्ञानादिघटितसामग्रीसत्त्वाद्दधिकर्मकदर्शनान्वयस्यापत्तेः द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकतादृशधात्वादिसमभिव्याहारज्ञानस्य तादृशान्वयबोधे हेतुताया आवश्यकत्वात् दधिपश्यतीत्यादौ लुप्तद्वितीयानुसन्धानस्यावश्यकत्वात् राजसम्बन्धिपुरुषाद्यन्वयबोधे च राजपदाव्यवहितोत्तरपुरुषादिपदत्वप्रकारकज्ञानस्य हेतुतायाः स्वारसिकलक्षणाग्रहस्थलानुरोधेनावश्यकल्पनीयतया राजपुरुषइत्यादौ राजादिपदस्य तृतीयाद्यन्तत्वभ्रमदशायां राजसम्बन्धिपुरुषाद्यन्वयबोधापत्त्यसम्भवात् तृतीयादिविभक्त्याव्यवधानात् । दधिपश्यतीत्यादौ दधिपदाव्यवहितोत्तरत्वप्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात । पश्यतिदधि पश्यतिचैत्रोदधीत्यादावपि दधिकर्मकदर्शनान्वयबोधात् तादृशज्ञानहेतुताया अशक्यकल्पनीयत्वाच्चेति ॥ तण्डुलं पचतीत्यादौ तण्डुलादिपदस्यैवतण्डुलादिकर्मके लक्षणा विभक्तिस्तु साधुत्वार्था एवं राज्ञः पुरुष इत्यादावपि राजादिपदस्य

---

। इत्यादाविवेति उक्तस्थलादौ यथा दधिकर्मकदर्शनन्नप्रतीयते किन्तु दर्शनाश्रयो दधिकर्मकः एवं दधिकर्मककरणकदर्शनाश्रयः इतिप्रतीयते तथोक्तभ्रमदशायांप्रकृतेऽपि दधिकर्मकदर्शनन्नप्रतीयतइति भावः । भवन्मतेइति दधिकर्मके लक्षणोपगन्तृमते इत्यर्थः अस्य च अन्वयस्यापत्तेरित्यनेन सम्बन्धः । अन्वयस्यापत्तेरिति अन्वयबोधस्यापत्तेरित्यर्थः दधिपश्यतीत्यादौ द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायामितिशेषः अत्रैतद्दोषवारणाय द्वितीयेतरविभक्त्यन्तत्वज्ञानस्य प्रतिबन्धकत्वकल्पने गौरवमिति बोध्यम् । हेतुतायाआवश्यकत्वादिति अयम् अनुसन्धानस्यावश्यकत्वादित्यत्रावश्यकत्वे हेतुः ॥ नन्वेवं राजपुरुषइत्यादौ राजादिपदस्य राजादिसम्बन्धिनि लक्षणाग्रहे राजादिपदस्य तृतीयान्तत्वादिग्रहेऽपि राजसम्बन्धीपुरुष इत्याद्यन्वयबोधो भवतां कुतो न प्रसज्ज्यते इत्यतआह राजसम्बन्धिपुरुषाद्यन्वयबोधेचेति तथा च राजपदादौयदातृतीयाद्यन्तत्वग्रहस्तदा पुरुषपदादौ राजपदाव्यवहितोत्तरत्वज्ञानस्यैवाभावान्नापत्तिरित्येतदाह तृतीयाद्यन्तत्वेति ननु मयाऽपि द्वितीयान्तदधिपदाव्यवहितोत्तरवर्त्तिदृश्धातुसमभिव्याहारज्ञानस्यैव दधिकर्मकदर्शनान्वयबोधजनकत्वमुपेयम तथाच न विभक्त्यन्तरत्वप्रतिसंधानदशायामापत्तिरतआह दधिपश्यतीत्यादाविति ।अक्लृप्तत्वादिति किन्तु दधिपदपश्यतिपदयोः समभिव्याहाररूपाया एवाकाङ्क्षाया हेतुत्वस्य क्लृप्तत्वादिति भावः । नन्वेतद्दोषवारणायैव दधिपश्यतीत्यानुपूर्वीज्ञानस्य हेतुत्वंवाच्यमतआह पश्यतिदधीति । तण्डुलंपचतीत्यादाविति इतआरभ्य इतितुचिन्तनोयमित्यतः प्राक्शंकाग्रन्थः । ननु तण्डुलपदस्यैव तण्डुलकर्मके लक्षणोपगमे तण्डु-

सम्बन्ध्यादौ लक्षणा विभक्तिः साधुत्वार्था तत्तद्विभक्त्यन्तसमभिव्याहारस्य तत्तल्लाक्षणिकार्थबोधनियामकत्वान्नातिप्रसङ्गः विभक्तेरेवप्रकृत्यर्थविशेषितस्वार्थे लक्षणेति तु न सम्भवति विभक्तेः कुत्रापि शक्तेरक्लृप्ततया तत्र शक्यसम्बन्धरूपलक्षणाया असम्भवात् तण्डुलःप्रमेयइत्यादौ विभक्त्यर्थामिश्रितस्यैव प्रकृत्यर्थस्य भानात्। प्रकृतिशक्तेः स्वार्थे क्लृप्ततया तत्र लक्षणासम्भवादिति तु चिन्तनीयम्। राजादिपदस्य राजसम्बन्ध्यादौ शक्तत्वभ्रमदशायामिव तदर्थलक्षणाग्रहदशायामपि राजसम्बन्धिनः पुरुष इत्यादाविव राजसम्बन्धिसम्बन्धीपुरुषइत्याद्यन्वयबोधस्य सर्वजनानुभवसिद्धत्वात्॥ पचतिचैत्रइत्यादावपि कृतिसम्बन्धेनपाकादेश्चैत्राद्यंशे विशेषणत्वोपगमे चैत्रोनपचतीत्यादावन्वयबोधानुपपत्तिर्द्रष्टव्या कृतिसम्बन्धस्यापि वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्या तद्बोधनासम्भवात्। अथैवमपि चैत्रो जानातीत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासम्बन्धेनान्वयबोधोपगमे क्षतिविरहः आश्रयतासम्बन्धस्याभावप्रतिगितावच्छेदकतया नजा-

---

लपचतीत्यादि वाक्यानामपि साधुत्वापत्तिरतआह तत्तद्विभक्त्यन्तेति। विभक्तेः कुत्रापीति नन्वियमुक्तिरयुक्ता तत्तत्पदयोजनायोजनाभ्याभावापोद्वापरूपाभ्यां सहकृतोहि व्यवहारादिर्यथा घटादिपदस्य शक्तिग्राहकस्तथा प्रत्ययस्याप्यस्त्येव घटः घटावित्यारभ्य सप्तमीविभक्त्यन्तपर्यन्तं तत्तद्विभक्तियोजनायोजनाभ्याम्बिलक्षणार्थावगतेः प्रत्ययस्याप्येकत्वद्वित्वादौ कर्तृत्वकर्मत्वादौ च शक्तेरावश्यकत्वात् एवमेव तण्डुलः प्रमेय इत्यादावित्यनुपदोक्तिरपिनयुक्ता तत्रैकत्वशक्तिमत्याः सुविभक्तेस्तण्डुले जहत्स्वार्थलक्षणासम्भवादिति चेन्न राजपुरुषइत्यादौ समासस्थले राजादिपदोत्तरविभक्तेरज्ञानेऽपि शाब्दबोधस्यानुभवसिद्धत्वात्प्रकृत्यर्थे शक्तेरावश्यकत्वादन्यथा गङ्गादिपदस्य प्रवाहादिर्मुख्यस्तीरादिस्तुगौणोऽर्थइति व्यवहारो नोपपद्येत तथा च तण्डुलं पचतीत्यादौ तण्डुलपदस्यैवतण्डुलकर्मकेलक्षणयाऽभिमतबोधनिर्वाहान्नकर्मत्वादौ द्वितीयादेः शक्तिः कल्पनीया एवंतण्डुलः प्रमेयइत्यादौसंख्यादेरभानस्थले प्रत्ययतस्तण्डुलादेरुपस्थितिविरहेऽपि तण्डुलादिबोधस्यानुभवसिद्धत्वात्प्रकृत्यर्थेशक्तिरावश्यकीत्यभिप्रायः। तत्रलक्षणासम्भवादिति तत्रेत्यस्य विभक्त्यर्थत्वेनाभिमतकर्मत्वादावित्यर्थः॥ चिन्ताहेतुमाह राजादिपदस्येति। इत्यादाविवेति राज्ञः पुरुषइत्यत्रेतिशेषः। सर्वजनानुभवसिद्धत्वादिति तथाचविभक्तिशक्तिम्विना उक्तबोधो नोपपद्येत अतो विभक्तिशक्तिरङ्गीकरणीया इत्थञ्च राज्ञःपुरुषइत्यादौ यदा राजपदं न लाक्षणिकं तदा राजसम्बन्धीपुरुषइतिबोधः यदातु राजसम्बन्धिनि लाक्षणिकं तदा राजसम्बन्धिसम्बन्धीपुरुषइतिबोध इतिनानुपपत्तिः। एवं चैत्रः पचतीत्यादावपि कृतिसम्बन्धेन,

नातिचैत्र इत्यादावाश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यैव भानसम्भवात् तथा च तत्राख्यातस्याश्रयत्वार्थकत्वन्निर्युक्तिकम नच धात्वर्थज्ञानादेराश्रयतासम्बन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात्प्रकारकत्वोपगमे ज्ञानं चैत्र इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम् तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात् । भवतोऽप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहार ज्ञानस्य हेतुताया आवश्यकत्वात् । यत्तु पचतिचैत्र इत्यादौ पाककृतिमांश्चैत्रइत्याकारकाख्यातार्थप्रकारकशाब्दबोधोत्पत्त्या तत्राख्यातजन्यकृत्युपस्थितेर्हेतुत्वकल्पनमावश्यकम् तथाच तत्तदर्थविशेषान्निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुत्वकल्पने शक्यलक्ष्यसहस्रार्थभेदेनाख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषाननिवेश्य धात्वर्थप्रकारकान्वयबोधम्प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्यैवहेतुत्वमुपेयते तथाच तादृशकारणबाधेन चैत्रादेर्धात्वर्थज्ञानविशेष्यतया भानं न सम्भवति। यदिच धातुत्वप्रत्ययत्वादीनामनुगतानां दुर्निर्वचतया नैतादृशानुगतकार्यकारणभावकल्पनं सम्भवतीति मन्यते तदापि यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र जानातीत्यादिवाक्यात् पाककृत्यादिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरतिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुतायास्तत्रकल्पनीयतया तादृशकारणबाधाच्चैत्रोजानातीत्यादौ चैत्रादेर्ज्ञानविशेष्यतयाभानानुपपत्तिर्दुर्वारैवेति तदप्यसत् प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशोपस्थितिवैशिष्ट्यस्य तादृशोप-

---

इत्यादिना संसर्गतावादिभिर्यदुक्तं तस्य समाधानमाह पचतिचैत्रइत्यादावपीति-चैत्रो जानातीत्यादावाख्यातार्थो न कृतिः सत्यपि ज्ञाने ज्ञानानुकूलकृतेरभावेपतत्प्रयोगस्य प्रामाणिकत्वात्। किन्त्वाश्रयत्वं तथाच ज्ञानाश्रयश्चैत्र इति बोधस्तत्रशंकते अथैवमपीति वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेऽपीत्यर्थः। इतआरभ्य इति-चेत्सत्यमेतत्पर्यन्तोऽयम्पूर्वपक्षग्रन्थः । आवश्यकत्वादिति अन्यथा ज्ञानमाश्रयत्वं चैत्र इत्यादावपि तथाविधबोधः प्रसज्ज्येतेतिभावः । पूर्वपक्षी स्वाभिमतेऽर्थेदोषन्निवारयितुमाह यत्त्विति तदसदित्यनेनसम्बन्धः । आख्यातार्थप्रकारकेति आख्यातार्थस्य संसर्गत्वं हि चैत्रो नपचतीत्यादौ वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वपक्षे दुरुपपदमितिभावः॥पचतीत्यादौशक्यार्थेकृतौरथोगच्छतीत्यादौलक्ष्यार्थे व्यापारे एवं नश्यतीत्यादौ लक्ष्यार्थे प्रतियोगित्वादौ धात्वर्थप्रकारकबोधस्यासंख्यत्वादाह शक्यलक्ष्यसहस्रेति । प्रत्ययान्तरार्थविशेष्यकेति ज्ञाधात्वर्थप्रकारकबोधे ज्ञाधातूत्तरतिप्पदजन्योपस्थितित्वेन कारणत्वे जानीत इत्यादिवाक्यजन्यबोधस्थले तिप्पदजन्योपस्थितेरभावाद्व्यभिचारस्तद्वारणाय विशेष्यतासम्बन्धेन तिप्पदज्ञानजन्योपस्थित्यव्यवहितोत्तरज्ञाधात्वर्थप्रकारकबोधम्प्रति विशेष्यतासम्बन्धेन ज्ञाधातूत्तरतिप्पदज्ञानजन्योपस्थितित्वेन कारणत्वमेवं सर्वत्र विशिष्यैव कार्यकारणभावो वक्तव्यः एवञ्च चैत्रो जानातीत्यादा वाश्रयत्वसंसर्गेण ज्ञानप्रकारक-

स्थितिजन्यतावच्छेदककोटौ अवश्यंनिवेशनीयतया तदनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानादिविशेष्यतयाभाने तादृशकारणबाधस्याकिञ्चित्करत्वात् । तादृशानुपूर्वीघटकज्ञादिधातुजन्यज्ञानाद्युपस्थितिचैत्रादिरूपविशेष्योपस्थितियोग्यताज्ञानादिघटितसामग्र्याऽऽश्रयतासंसर्गकशाब्दबोधजननेबाधकाभावात् । नचैतन्मते आश्रयतासम्बन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशयोग्यताज्ञानहेतुत्वान्तरकल्पनाधिक्यम् आश्रयतासम्बन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात् सर्वनाम्नः संकेतितशब्दान्तराद्वा तादृशसम्बन्धेन ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमतएवप्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्येन तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात् ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधेहेतुतायाः कुत्राप्यक्लृप्तत्वादितिवाच्यम् । भवन्मतेऽपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधे तथाविधयोग्यताज्ञानहेतुतायाआधिक्यात् । आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानकारणतावच्छेदकापेक्षया लघुशरीरतया आश्रयतायाः संसर्गतामतस्यैव लघुत्वात् । नच यत्राश्रयत्वे ज्ञाधातुसमभिव्याहृताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयत्वप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयमतसिद्धमेवेति वाच्यम् । आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयत्वप्रकारकबोधस्यानभ्युपगन्तव्यत्वादितिचेत्सत्यम् एतदभिप्रायेणैव जानातीत्यादावाख्यातस्य निरर्थकतां मणिकारउरीचकार । तत्राश्रयत्वे निरूढलक्षणामभ्युपगच्छतां दीधितिकाराणाम्पुनरेषआशयः यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः

---

चैत्रविशेष्यकबोधोपगमे तस्यतिप्पदज्ञानजन्योपस्थित्यव्यवहितोत्तरत्वाभावेनोक्तकार्यतावच्छेदकधर्मानाक्रान्ततया न तिप्पदज्ञानजन्योपस्थितेरपेक्षेति भावः । नचैतन्मतइति नचेत्यस्य वाच्यमिति परेणान्वयः । आश्रयतासम्बन्धेनज्ञानादीति सगच्छतीत्यादिवाक्यादाश्रयत्वसम्बन्धेन ज्ञानविशिष्टचैत्रपरकतत्पदघटिताज्जायमाने बोधे आश्रयत्वसम्बन्धेन ज्ञानविशिष्टचैत्रविषयकयोग्यताज्ञानस्य कारणत्वेऽपि तादृशस्थले गच्छत्यादिवाक्यार्थस्यापि भानात्तदंशेऽपि योग्यताज्ञानस्यापेक्षणात्तत्स्थलीयशाब्दसामग्र्या भिन्नतया चैत्रो जानातीत्यादावाश्रयत्वसंसर्गकज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य हेतुत्वं संसर्गतापक्षेऽधिकमित्यर्थः । तथाविधयोग्यतेति आश्रयत्वप्रकारकयोग्यतेत्यर्थः । तदीयसंसर्गेत्यादि आश्रयत्वस्ययः संसर्गः स्वरूपंतन्निष्ठा याविषयता तद्घटितं यदाश्रयत्वप्रकारकं ज्ञानं शाब्दबोधात्मकं तत्कारणतावच्छेदकं योग्यताज्ञानत्वमधिकपदार्थावगाहिज्ञाननिष्ठतया गुरुभूतमितिभावः ॥ लघुशरीरतयेति इदमुपलक्षणं शाब्दबोधस्याश्रयत्वप्रकारकत्वे सर्वत्र पदजन्याश्रयत्वोपस्थितिरपेक्षणीया तस्य तत्संसर्गत्वे तु संस-

स्वारसिकलक्षणाग्रहोवा तत्र चैत्राद्यंशेधात्वर्थैकदेशस्यज्ञानादेरन्वयानुपपत्त्या स्वरूपसम्बन्धेन ज्ञानाश्रयत्वप्रकारकचैत्रादिविशेष्यकबोधएव तत्र मणिकृतास्वीकरणीयः तथाच तत्र ज्ञानाश्रयत्वप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाश्रयत्वसंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानकल्पनमधिकमेव मणिकृन्मते। नच दीधितिकृन्मते तादृशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेऽपि जानातीत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षम्प्रति प्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थितेर्निवेशनस्याधिक्याद्गौरवमिति वाच्यम् भवन्मतेऽपि ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दर इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे जानातिचैत्र इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रतिबन्धकत्वाधिक्येन गौरवात्। मन्मते च तादृशसामग्र्याः विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चयाभावघटिततया तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदवस्थानासम्भवेन तादृशप्रतिबन्धकत्वकल्पनाविरहादित्यधिकं दर्शितदिशाऽवसेयम्॥ अथैवंरीत्या भूतले न घटइत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदुत्तरविभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र घटप्रतियोगिकाभावो भूतलवृत्तिरित्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधोपगमएव समुचितः तथासति तथाविधसमभिव्याहारज्ञानघटितसामग्र्या घटप्रतियोगिकत्वाभाववानभावः प्रमेय इत्यादिविशिष्टवैशिष्ट्यबोधम्प्रति प्रतिबन्धकत्वाकल्पनेन ला-

---

गस्यानुपस्थितस्यापि भानान्न साऽपेक्षणीयेत्यपि लाघवं बोध्यम्। धात्वर्थैकदेशस्येति ज्ञानाश्रयत्वरूपधात्वर्थघटकस्येत्यर्थः। अन्वयानुपपत्त्येति एकत्रविशेषणतयोपस्थितस्यान्यत्रविशेषणतयाऽन्वयायोगादितिभावः॥ आनुपूर्वीज्ञानघटितेति इदञ्च सामग्र्या विशेषणम्। मन्मतेचतादृशसामग्र्याइति जानातिचैत्र इत्याकाङ्क्षाज्ञानघटितसामग्र्याइत्यर्थः॥ ननु प्रकारतापक्षेऽपि आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववान् चैत्रः सुन्दर इतिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षम्प्रति चैत्रोजानातीत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं संसर्गतापक्षे चैतदाकाङ्क्षाज्ञानघटितशाब्दसामग्र्या आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववान् चैत्र इतिबाधनिश्चयाभावघटिताया उक्तप्रत्यक्षसामग्र्याश्चैकदा स्थित्यभावान्न प्रतिबन्धकत्वकल्पनावकाशोऽतो न गौरवमतआह अधिकमिति निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववदाश्रयत्ववान् चैत्रइति प्रत्यक्षम्प्रति चैत्रोजानातीत्याकाङ्क्षाज्ञानघटित शाब्दसामग्र्याः प्रतिबन्धकत्वमाश्रयत्वस्य संसर्गतावादिनामधिकमिति पूर्वोक्तरीतिरेवानुसन्धेयेति भावः। अथैवंरीत्येति प्रतिबन्धकत्वाकल्पनलाघवेनेत्यर्थः। लाघवमेव विशदयति तथासतीति। प्रतिबन्धकत्वाकल्पनेनेति उक्तप्रत्यक्षसामग्र्या भूतले न-

घवादित्युक्तनियमे निपातातिरिक्तत्वविशेषणवैयर्थ्यमितिचेन्न भूतले न घट इत्यादौ घटाद्यभावे भूतलाद्यन्वितसप्तम्यर्थाधेयत्वस्यैव तात्पर्यवशात् घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्यान्वयबोधोऽप्यनुभवसिद्धः अन्यथा तादृशवाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य भूतले घटइत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेः नञ्पदम्विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते इत्यनुभवापलापप्रसङ्गाच्च । एवञ्च नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम् । एवं न पचति चैत्रः चैत्रस्यनधनमित्यादौ पाककृतिचैत्रस्वत्वाद्य भावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये घटोनपटइत्यादौ नञर्थघटादिभेदस्यान्वय बोधोपपत्तयेच तदावश्यकम् ।नचोक्तस्थलेषुनञोऽभाववल्लाक्षणिकतयाऽभाववतासममनुयोगिनोऽभेदान्वयबोधएव तत्रोपेयते इतिवाच्यम् तथासति सर्वत्राभाववतएवनञर्थतया मुख्यार्थपरनञोदुर्लभत्वापत्तेः । अभावस्य भेदान्वयबोधोपगमेऽपि कार्यकारणभावकल्पनाधिक्यविरहेणाभाववति लक्षणानौचित्यात् अभाववतोऽभेदान्वयबोधोपगमे भूतलेघट इतिवाक्यजन्यबोधे भूतले नघट इतिवाक्यजन्यबोधस्या-

---

घटइति वाक्यज्ञानघटितशाब्दसामग्रयाश्च युगपदवस्थानासम्भवादितिभावः।उक्तनियमइति निपातातिरिक्तप्रातिपदिकार्थयोर्भेदेन साक्षादनन्वयनियमः । अन्यथेति उक्तवाक्याद्भूतलवृत्तित्वाभाववान् घटइति बोधानुपगमे॥ नन्वसमानप्रकारकाणामपि ह्रदावृत्तिर्वह्निः वह्निव्यापकाभाववान्ह्रदः ह्रदनिष्ठाभावप्रतियोगी वह्निरित्यादिनिश्चयानां ह्रदोवह्निमानितिज्ञानम्प्रति प्रतिबन्धकत्वादुक्तवाक्याज्जायमानस्य घटाभावो भूतलवृत्तिरिति निश्चयस्यापि प्रतिबन्धकत्वसम्भवात् भूतलवृत्तित्वाभाववान् घटइतिबोधानुपगमेऽपि क्षतिविरह इत्यतआह नञ्पदम्विनेति ननु जातौजातिरितिवाक्याज्जातिनिरूपितसमवायसंम्बन्धावच्छिन्नवृत्तित्ववती जातिरिति निरूप्यनिरूपकभावापन्नविषयताशालि भ्रमात्मक बोधस्योत्पत्त्या जातौजातिर्नास्तीत्यादौ नञ्पदम्विना यत्रधर्मिणीत्यनुपदोक्तनियमानुसारात् जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावएव बोधनीयः सच प्रतियोग्यप्रसिद्ध्याऽसम्भवी अतः समवायसम्बन्धावच्छिन्नप्रतियोगिताकजात्यभावो जातिनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्ववानित्येवात्रबोधस्तथाच नायं नियमस्सार्वत्रिकइत्यतआह एवंनपचतीति । स्वत्वाद्यभावेति अत्राभावपदस्य द्वन्द्वान्ते श्रूयमाणस्य पाककृत्यापि सह सम्बन्धः। नञर्थस्येति नञन्तार्थस्येत्यर्थः। एवमग्रेऽपिबोध्यम् तदावश्यकमिति नामार्थयोरिति नियमे तिपातातिरिक्तत्वविशेषणमावश्यकमित्यर्थः॥ नञोऽभाववदिति तथाच नामार्थयोरितिनियमे नि-

विरोधितापत्तेश्च, लाघवात् स्वरूपसम्बन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वान्नत्वभेदसंसर्गकग्राह्याभावाश्रयप्रकारकनिश्चयस्येति॥ नीलोघटइत्यादौ विशेषणविभक्तेरभेदार्थकत्वमतेऽपि यद्यप्युक्तरीत्या लाघवंसम्भवति तथापि तत्रापिननोविद्वेषइतिदिक् ॥ प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेननानाविधाः। विभक्तिश्चसुप्तिङ्भेदेनद्विविधा। सुविभक्तयः प्रथमाद्वितीयादयःसप्त तत्रप्रथमार्थः प्रकृत्यर्थविशे-

---

पातातिरिक्तत्वविशेषणन्नोपादेयमितिभावः। अविरोधितापत्तेश्चेति तद्धर्मिकतत्प्रकारकबुद्धौ तद्धर्मिकतदभावप्रकारकनिश्चयस्यैवविरोधित्वं नतु तदभाववत्प्रकारकनिश्चयस्यापीत्यतो भूतलेनघटइतिवाक्यजन्यबोधस्य भूतलवृत्तित्वाभाववत् प्रकारकत्वे तस्य भूतलेघट इतिवाक्यजन्यभूतलवृत्तित्ववानघटइतिबोधम्प्रति प्रतिबन्धकत्वानुपपत्तेरितिभावः। इदमापाततउक्तम् घटादावभाववतस्तादात्म्येनप्रकारत्वेऽभावस्यापि स्वरूपसम्बन्धेन घटादौधर्मिपारतन्त्र्येणभानात् अतएव इदंरजतमितिशाब्दबोधे धर्मिपारतन्त्र्येण रजतत्वस्यापिप्रकारत्वं न्यायकौस्तुभेउक्तम् युज्यतेतराञ्चैतत्पारतन्त्र्येणभानं कथमन्यथा पर्वतोवह्न्यभाववानित्यादिवाक्यजन्यबोधकाले वह्निमान्पर्वतइत्यादिबुद्धेरनुत्पादोघटेत वह्न्यभाववत्प्रकारकनिश्चयस्य वह्निप्रकारकज्ञानाप्रतिबन्धकत्वात् पारतन्त्र्येणभानाङ्गीकारेचाभेदेनवह्न्यभाववतः प्रकारतास्थले स्वरूपेणवन्ह्यभावस्यापि प्रकारत्वान्नानुपपत्तिरिति ॥ अथपूर्वोक्तरीत्या नीलतादात्म्याभाववान्घटःप्रमेयइतिप्रत्यक्षम्प्रतिनीलोघटइत्याकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वमधिकमभेदस्य संसर्गतापक्षेकल्पनीयमतोऽभेदस्यापि प्रकारत्वमेवयुक्तं तथासत्युक्तप्रत्यक्षसामग्र्युक्तशाब्दसामग्र्योर्युगपदवस्थानासम्भवान्नैतत्प्रतिबन्धकत्वकल्पनावसरइत्याशंक्याह नीलोघटइत्यादाविति ॥ ननोविद्वेषइतिदिगिति अत्रननःसम्मतिरिरितित्यनभिधाय ननोविद्वेषइतियदुक्तंतस्यायमभिप्रायः पदार्थव्यवस्थानलाघवमनुसृत्यैवभवति किंतु प्रतीतिमनुसृत्य प्रतीतिमेवतुनीलोघट इत्यादिवाक्याज्ज्ञायमानांतादृशीं न श्रद्दधामोययाऽभेदस्यप्रकारतासिद्ध्येदिति॥ तद्धितादीति आदिपदात् शपश्यनादयोबोध्याः। तत्रेति तेषुमध्ये । संख्यैवेति अत्रैवकारस्य प्रथमार्थएव प्रकृत्यर्थेविशेषणविधयाऽन्वयिन्येव संख्यैवेति त्रितयस्थलेसंबन्धः तेनस्वाश्रयकर्तृकत्वसम्बन्धेन क्रियायां संख्यान्वयोवारितः एकपदोपात्तत्वेन प्रकृत्यर्थएवान्वयस्ययुक्तत्वात् विशेषणविधयाऽन्वयिन्येवेत्युक्त्याच संख्यायांप्रकृत्यर्थस्य विशेषणत्वभ्रमोवारितः घटमित्यादौ द्वितीयादिस्थले संख्यायाःप्रकृत्यर्थे विशेषणतयैवभानादन्यथाकर्मत्वादौ प्रकृत्यर्थस्य विशेषणतयैवभानस्यव्यवस्थापितत्वात् संख्यायामपितस्य विशेषणतयाभाने उद्देश्यविधेयभावभेदेनवाक्यभेदापत्तेः इत्थञ्च प्रथमास्थलेऽपि संख्याया विशेषणतयैवभानमुचितमिति । संख्यैवेत्युक्त्या लिङ्गपरिमाणयोः प्रथमार्थत्वनिरासः तथाहि ब्राह्मणवति गृहादौ अत्र ब्राह्मणी-

षणविधयाऽन्वयिनीसंख्यैव। अतएवयत्रविशेष्यवाचकसमानविभक्तिकपदंनिपातपदं वानास्ति तत्रप्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैवभासते

नास्तीत्यादिव्यवहारात् लिङ्गयोन्यादिमत्त्वरूपलिङ्गस्यब्राह्मणादिपदजन्यबोधेभानेऽपि तस्य न प्रथमार्थत्वम् ब्राह्मणंब्राह्मणीमित्यादावपि तद्भानादतः प्रतिपदिकस्यैव स्त्रीत्वपुंस्त्वादिविशिष्टेऽर्थेनिरूढलक्षणाङ्गीकार्या तटादावचेतनेतूक्तलिङ्गाभावान्नतटादिशब्दजन्यबोधेलिङ्गंभासते अतोनास्य प्रथमार्थत्वम् येषामपि मते तटादौलिङ्गस्यभानं तेषामपिमते तस्यप्रथमार्थत्वं न युक्तं तटीमित्यादावपितन्मते लिङ्गभानस्याङ्गीकरणीयत्वादिति। एवं परिमाण मत्रद्विविधंविवक्षितं गुरुत्वंपरिमितिश्च तत्र द्रोणोव्रीहिरित्यादौ गुरुत्वरूपंपरिमाणंप्रथमार्थः तत्रप्रकृत्यर्थस्य द्रोणपदार्थस्याभेदेनान्वयः गुरुत्वस्यच समवायेन व्रीहावन्वयः तथाचद्रोणाभिन्नगुरुत्ववान् व्रीहिरित्यन्वयबोधः एवं वितस्तिःशंखइत्यादौ द्वादशाङ्गुलपरिमाणवाचिनोवितस्तिशब्दात् जायमानायाः प्रथमायाः परिमाणमर्थः तत्र वितस्तिशब्दार्थस्याभेदेनान्वयः परिमाणस्यचसमवायेनशंखेऽन्वयः तथाच वितस्त्यभिन्नपरिमाणवान्शंखइत्यन्वयबोधः। एतदुपपत्त्यर्थं प्रथमायाः परिमाणार्थकत्वन्नाङ्गीकार्यम् द्रोणशब्दार्थस्य गुरुत्वविशेषविशिष्टस्याभेदेन व्रीहौ एवंवितस्तिशब्दार्थस्यपरिमाणविशेषविशिष्टस्याभेदेन शंखेऽन्वयेनैवोपपत्तौ परिमाणस्यस्वातन्त्र्येणभानाभावात् प्रथमायास्तादृशार्थकत्वे प्रमाणाभावात् । इत्थञ्च प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेप्रथमेति सूत्रे सतिसप्तम्येव नतु वाचकत्वार्थासप्तमी तथा चैतत् सूत्रं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेविवक्षिते प्रथमास्यादित्यर्थकं मात्रपदोपादानात् कर्मत्वादौविवक्षिते न प्रथमेति लभ्यते । एतावता सूत्रेणप्रथमार्थानिरूपणात् अनन्यलभ्यतया संख्यैवप्रथमार्थ इतिसिद्ध्यति । नन्वेवं संख्यापि प्रकृत्यर्थएव कुतोनोपेयते संख्याविशिष्टेऽर्थे प्रकृतेर्निरूढलक्षणासंभवादितिचेदेतदुत्तरस्यानुपदमेव ग्रन्थकृतावक्ष्यमाणत्वादिति । अतएवेति प्रकृत्यर्थेविशेषणविधयाऽन्वयंयोग्यायाः संख्यायाः प्रथमार्थत्वादेवेत्यर्थः। यत्रेत्यादि चैत्रइत्यादौसमानविभक्तिकपदाद्यसत्त्वस्थले प्रथमान्तार्थस्य चैत्रादेर्यद्विशेष्यं तद्भासकसामग्र्यभावादसौ प्रथमान्तार्थश्चैत्रादिर्विशेष्यतयैवभासते इत्यर्थः। एतेन चैत्रइत्यादौ एकत्वप्रकारकचैत्रादिमुख्यविशेष्यकबोधस्यजायमानत्वे सतिसंभवेऽन्यत्रापि प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वमितिसूचितम् । अत्र सतिसंभवइत्युक्तत्वात् पचतीत्यतः पाककृतिमात्रविषयकस्य चैत्रेणसुप्यते इत्यादौ चैत्रकर्तृकशयनमात्रविषयकस्य बोधस्य नैयायिकैरङ्गीकृतत्वात् क्वचित्प्रथमान्तार्थस्य मुख्यविशेष्यत्वविरहेऽपि नक्षतिः। एतेनैवच प्रथमान्तार्थस्यमुख्यविशेष्यत्वोपगमे पश्यमृगोधावतीत्यत्र धावनानुकूलकृतिमतोमृगस्य दर्शनक्रियायां कर्मत्वेनान्वितस्य मुख्यविशेष्यत्वानुपपत्तिः मृगइत्यत्र प्रथमानुपपत्तिश्च कर्मणोऽनुक्तत्वेन कर्मबोधकमृगपदात् द्वितीयायाएवयुक्तत्वेन धावन्तंमृगंपश्येत्यस्यैवप्रयोगस्यहि साधुत्वंस्यात् क्रियामुख्यविशेष्यकबोधाङ्गीकारेतु मृगकर्तृकधावनस्यैव मृगोधावतीतिखण्डवाक्यार्थतया तस्यैवदर्शनक्रियाकर्मतया तद्बोधकधावुधातोर्द्वितीयायाः प्रातिपदिकाद्विधीय-

मानाया असंभवइति नकश्चिद्दोषइति वैयाकरणोक्तमपि न नःक्षतिकरम् प्रकृतस्थले वैयाकरणरीत्यैवबोधस्यस्वीकारात् यदिहि सार्वत्रिकोऽयंप्रथमान्तार्थमुख्यविशेष्यताभाननियमःस्यात्स्यादयंदोषो नत्वेवमस्ति । यदिचाश्रूयमाणक्रियापदस्थलेऽप्यस्त्यादिपदमध्याहृत्य क्रियामुख्यविशेष्यकएवबोधोभवद्भिरङ्गीकरणीयस्तदाऽस्माभिरपि चैत्रेणसुप्यते इत्यादौ त्वं जानीहीत्यादिवाक्याध्याहारःपश्य-मृगोधावतीत्यत्रत्वंपदस्यैतिपदस्यचाध्याहारः कर्तुंशक्यः तथासति इतिपदेनकर्मणउक्तत्वान्नद्वितीयाप्रसक्तिः त्वंपदार्थस्यैवमुख्यविशेष्यत्वाच्च न बोधस्यप्रथमान्तार्थमुख्यविशेष्यकत्वानुपपत्तिः। अथवा इतिपदाध्याहारोनावश्यकः यत्रैकस्यैवपदस्यार्थःकर्मत्वेन विवक्षितःतत्रैवहि द्वितीया यथा तण्डुलंपचतीत्यादौ नचैवं शुक्लंतण्डुलंपचतीतिप्रयोगानुपपत्तिः तत्र कर्मत्वेतण्डुलस्यैवान्वयः तण्डुलेशुक्लस्यान्वय इत्यतो विशेष्येविशेषणं तत्रापिचविशेषणान्तरमितिरीत्यैवशाब्दबोधात् । शुक्लस्तण्डुलःपचतीत्यादौतु शुक्लाभिन्नतण्डुलस्य कर्मत्वविवक्षणाद्विशिष्टवैशिष्ट्यावगाह्येवबोधोऽतोवाक्यार्थस्य कर्मतया न द्वितीया अतएव 'श्रुत्वाममैतन्माहात्म्यं-तथाचोत्पत्तयः शुभाः'। 'जानामिसीताजनकप्रसूता जानामिरामोमधुसूदनश्च, इत्यादयः प्रयोगाः उपपद्यन्ते वाक्यार्थस्यैवकर्मत्वात् शुक्लाभिन्नतण्डुले शुक्लपदस्य तण्डुलपदस्यवा वृत्तिविरहेण वृत्त्या कर्मबोधकात् प्रातिपदिकाद्विधीयमानाया द्वितीयाया अप्रसक्तेरिति । किञ्च-सर्वत्रधात्वर्थमुख्यविशेष्यकबोधोपगमे पचन् पचतीतिप्रयोगप्रसङ्गः विद्यमानपाककर्तृकर्तृको विद्यमानपाक इत्यन्वयबोधस्योत्पत्तौ बाधकाभावात् प्रथमान्तार्थमुख्यविशेष्यकबोधोपगमेतूक्तवाक्याद्वर्त्तमानकालिकपाकानुकूलकृतिमान् वर्तमानकालिकपाककर्तेत्यन्वयबोधः स्यात् स च घटोघट इत्यत्र प्रदर्शित युक्त्यैव वार्येत एवं धात्वर्थस्य मुख्यविशेष्यत्वोपगमे पाचको न पचतीत्यादौ नञर्थभेदे पाचकस्य प्रतियोगितया तिङर्थकर्तुश्चानुयोगितयाऽन्वयेन पाचकान्यकर्तृकोविद्यमानपाक इत्यन्वयबोधएवोपेयः सच न सम्भवति पाकस्य पाचककर्तृकत्वनियमात् प्रथमान्तार्थस्यविशेष्यत्वेतु नानुपपत्तिः वर्तमानकालिकपाकानुकूलकृत्यभाववान् पाचक इत्यन्वयबोधोत्पत्तौवाधकाभावादिति स्पष्टीकृतञ्चैतद्विभक्त्यर्थनिर्णयेगिरिधरोपाध्यायैः ॥ अपिच 'शशीदिवसधूसरो-विगतयौवनाकामिनी सरोविगतवारिजंमुखमनक्षरंस्वाकृतेः। प्रभुर्धनपरायणः सततदुर्गतःसज्जनोनृपाङ्गणगतःखलोमनसिसप्तशल्यानिमे,॥ इत्यत्र क्रियापदाभावेऽपि शाब्दबोधस्यानुभविकत्वात् सर्वत्रक्रियामुख्यविशेष्यकएवबोध इत्याग्रहमात्रमूएवञ्च सतिसंभवेप्रथमान्तार्थमुख्यविशेष्यकएवबोध इत्येवयुक्तम् तदुक्तं पदवाक्य रत्नाकरे ननु केनविनिगमकेनेदंप रिच्छिद्यते यत् प्रथमान्तार्थएवप्रधानमितिचेदुच्यते। प्रयातिपुरुषस्तस्य पादयोरभिवादय। इत्यादौप्रथमान्तार्थः प्राधान्यान्मृश्यते-तदा॥ यदि तिङ्प्रथमान्तयोः प्रथमान्तार्थस्यप्राधान्यंनस्यात्तदा प्रयातिपुरुष इत्यत्र पुरुषस्तच्छब्देन नपरामृश्येत गुणीभूतार्थस्यतच्छब्देनपरामर्शासंभवादिति, नच प्रथमान्तार्थमुख्यविशेष्यताकबोधोपगमे भावप्रधानमाख्यातमितिनिरुक्तस्मृ-

संख्यावाचकानांच एकवचनद्विवचनबहुवचनानामेकत्वत्वद्वित्वत्वबहुत्वत्वावच्छिन्नेषु शक्तिः। शक्तताच सुत्वौत्वजस्त्वादिना नतु स्वादित्रिवादिसाधारणैकवचनत्वादिना। एकवचनत्वादेर्दुर्वचत्वात्। नचैकत्वादिवाचकत्वंतत् !वाचकतायाशक्त-

---

तिर्विरुध्येत भावशब्दस्यक्रियार्थत्वेनक्रियाया एवानयास्मृत्या प्राधान्यावगमादितिवाच्यम् भावशब्दस्यात्रभावनावाचकत्वेन आख्यातार्थेषु कृतिकालसंख्यासु भावनात्मिकायाः कृतेरेवप्राधान्यमित्यर्थकत्वात् भावशब्दस्यात्र भावनार्थकत्वादेव मीमांसकैरेतत्स्मृतिमूलको भावनामुख्यविशेष्यकएव बोधोऽङ्गीकृतः सोऽपिनयुक्तः नपचतीत्यादौशाब्दबोधानुपपत्तेः नचात्रापि तिङर्थभावनायांपाकाभावस्यान्वयात् पाकाभाववतीभावनेति बोधउपपादयितुंशक्यः भावनासामान्यशून्ये सुप्तपुरुषे नायंपचतीतिप्रयोगानुपपत्तेरिति। किञ्च सत्त्वप्रधानानि नामानीत्यपिस्मृतिरस्ति तत्रसत्त्वशब्दस्य लिङ्गसंख्याद्यन्वययोग्योऽर्थः एवञ्चात्र वैयाकरणमीमांसकयोर्मते एतत्स्मृतेः प्रामाण्यं न निर्वहति नैयायिकानाम्मतेतूभयोरेवस्मृत्योःप्रामाण्यं निर्वहतीतिसंक्षेपः अधिकन्तु पदवाक्यरत्नाकरादावालोकनीयम्॥ एकत्वत्वेत्यादि एकत्वत्वद्वित्वत्वादिजातिरेवशक्यतावच्छेदिका गुणादिवाचकपदोत्तरसुपोऽपेक्षाबुद्धिविशेष्यत्वे लाक्षणिकत्वान्नानुपपत्तिः। येतु व्यापारत्वकर्मत्वादिवत् एकत्वत्वद्वित्वत्वादिकमप्यखण्डोपाधिरेव अपेक्षाबुद्धेरनुपस्थितिदशायामपिगुणादौ संख्याप्रतिपत्तेरानुभविकत्वात् तादृशोपाधिविशिष्टञ्चैत्वादिकं गुणातिरिक्तमेव तस्यगुणादिवृत्तित्वेबाधकाभावात्तदेवसर्वत्रैकवचनाद्यर्थ इत्याहुः तेषाम्मते तत्तदखण्डोपाधिरूपमेव एकत्वत्वद्वित्वत्वादिकं शक्यतावच्छेदकमितिबोध्यम्॥ शक्तताचसुत्वौत्वेत्यादि आदेशानांनानात्वेनतन्निष्ठानां तत्तदसाधारणधर्माणां शक्ततावच्छेदकत्वे गौरवमतः सुत्वादिकमेव शक्ततावच्छेदकम् सर्वत्रवहि आदेशिनः स्मृत्या शक्तिग्रहःसम्भवति आदेशेवा सुत्वादिभ्रमाच्छक्तिभ्रम इतिनानुपपत्तिरिति॥ दुर्वचत्वादिति संकेतविशेषसम्बन्धेन एकवचनपदवत्त्वस्य एकवचनत्वरूपतासम्भवेऽपि शक्ततावच्छेदकत्वयोग्यैकवचनत्वस्य दुर्वचत्वादित्यर्थः॥ आत्माश्रयादिति एकत्वादिवाचकत्वंहि ईश्वरेच्छीयैकत्वादिविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यत्वम् शक्तता वाचकता चेत्यनर्थान्तरम् इत्थञ्चैकवचनत्वस्य शक्ततावच्छेदकत्वे आत्माश्रयः स्यादितिभावः। ननु यथाकारणत्वं कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मरूपतया दण्डत्वादिस्वरूपमेव पर्यवस्यति दण्डत्वादिकमेवच कारणतायाअवच्छेदकंभवतीति स्वस्मिन्नेव कारणतात्वेनावच्छेद्यता स्वरूपतस्तद्व्यक्तित्वेनवाऽवच्छेदकताचभवति रूपभेदेऽन्योन्याश्रयदोषाभावात् तथाप्रकृतेऽपि वाचकतात्वेनावच्छेद्यत्वं स्वरूपतस्तद्व्यक्तित्वेनावच्छेदकत्वं कुतोनोपेयते इतिवाच्यम् यतोदण्डत्वादीनामखण्डतयाऽवच्छेदकनिरपेक्षत्वात् स्वरूपतस्तद्व्यक्तित्वेनवाऽवच्छेदकत्वंसम्भवति वाचकतायाश्चा-

तावच्छेदकत्वे आत्माश्रयात् बोधकतारूपत्वे शक्तिभ्रमेण द्विवचनादीनामप्येकत्वबोधकतया अतिप्रसक्तत्वात् नचैकवचनत्वादिकंजातिविशेषः । सुप्त्वादिनासांकर्यात् ।

खण्डत्वाभावात् अवच्छेदकसापेक्षतया स्वरूपतोऽवच्छेदकत्वन्नसम्भवति । तद्व्यक्तित्वेनाप्यवच्छेदकत्वंनसंभवति निरुक्तविशेष्यतारूपायाः शक्तताया अनेकत्वादित्यवधेयम् । बोधकतारूपत्वइति वाचकतायाः इतिशेषः । बोधकत्वञ्चबोधजनकत्वरूपं तत्रनशक्तिप्रवेशइतिनात्माश्रयइतिभावः ॥ सांकर्यादिति सांकर्यञ्च परस्परात्यन्ताभावसमानाधिकरणत्वेसति एकाधिकारणवृत्तित्वम् अस्तिच सुप्त्वाभावाधिकरणे तिवादौ एकवचनत्वस्य एकवचनत्वाभावाधिकरणे द्विवचनादौसुपि सुप्त्वस्यचवृत्तित्वम् एकवचनेचोभयोः समावेश इतिभावः सांकर्यस्यजातिबाधकतायाञ्च स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभावइति नियमोमानम् संकरजात्युपगमेह्येतन्नियमोव्याहन्येत । अथात्र जात्योःपरस्परात्यन्ताभावसामानाधिकरण्येसति एकाधिकरणवृत्तित्वं जातिबाधकत्वेनाभिमतम् जात्युपाध्योर्वा नतावदाद्यः जात्योर्निरुक्तैकाधिकरणवृत्तित्वस्यैवाप्रसिद्धेः नद्वितीयः तथासति पृथिवीगुणान्यतरत्वादिकमादाय द्रव्यत्वादेरपिसांकर्यप्रसङ्गात् परस्परत्वस्यदुर्वचत्वाचेति चेन्न जातिविशिष्टत्वमेवह्रि सांकर्यंविवक्षितम् वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व स्ववृत्तित्वैतत्त्रितयसम्बन्धेन वृत्तित्वञ्च स्वसमानाधितरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन तत्रजात्युपादानात् पृथिवीगुणान्यतरत्वद्रव्यत्वयोर्मध्ये द्रव्यत्वस्यैव जातिपदग्राह्यतया तत्सामानाधिकरण्यस्य तदधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वस्यच पृथिवीगुणान्यतरत्वेसत्वात् पृथिवीगुणान्यतरत्वाधिकरणगुणवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वेसत्वेन तत्सम्बन्धेन द्रव्यत्ववृत्तित्वस्यक्तान्यतरत्वेसत्वाच जातिविशिष्टत्वमुक्तान्यतरत्वे एव नतु द्रव्यत्वेऽपीतिनदोषः नचैवंभूतत्वमूर्त्तत्वयोर्जातित्वापत्तिः एतल्लक्षणघटकजातिपदेन भूतत्वमूर्त्तत्वयोरेकतरस्यापि ग्रहणासम्भवादितिवाच्यम् मूर्त्तत्वेक्रियासमवायिकारणतावच्छेदकतया जातित्वस्योपगतत्वेन मूर्त्तत्वस्यजातिपदग्राह्यतया तद्वैशिष्ट्यस्यभूतत्वेसत्वात् तत्र सांकर्यं मूर्त्तत्वेतु सांकर्यमेवानिष्टमतउक्तलक्षणागमनेऽपिनदोषः स्वसमानाधिकरणत्वं भेदप्रतियोगितावच्छेदकत्वञ्च समवायविशेषणताविशेषान्यतरसम्बन्धावच्छिन्नंग्राह्यम् समवायसम्बन्धमात्रावच्छिन्नत्वोक्तौ तु प्रत्यक्षत्वादिनासंकीर्णतया भ्रमत्वंनजातिरिति सिद्धान्तो व्याहन्येत भ्रमत्वस्य तदभाववति तत्प्रकारताकत्वरूपतया समवायसम्बन्धेनवृत्तित्वविरहात् विशेषणताविशेषसम्बन्धमात्रावच्छिन्नत्वस्योक्तौ भूतत्वादौ सांकर्यासिद्ध्यापत्तेः भूतत्वस्य वहिरिन्द्रियग्राह्यविशेषगुणरूपतया स्वरूपेणवृत्तित्वविरहादिति। नन्वेवं सुप्त्वस्यजातित्वेसिद्धे एव तेनैकवचनत्वे सांकर्यमुद्भावयितुमुचितम् सुप्त्वस्यैवच पाणिनीयसंकेतविशेषसम्बन्धेनसुप्पदवत्त्वरूपतया जातित्वाभावान्न तेन सांकर्यमितिचेत् एतत्पर्यालोच्यै-

नचशक्तिसम्बन्धेन एकवचनादिपदवत्त्वंतत् तादृशाज्ञानदशायाञ्च सुत्वादिना शक्ति भ्रमादेव शाब्दबोधः । एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदायशक्तेरेवाप्रसिद्धिरितितुनाशंकनीयम् । एकंवक्तीत्यादिव्युत्पत्त्या एकवचनादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देऽपि तादृशव्यवहारापत्तेः एकवचनादिशब्दस्य स्वादौ-रूढिस्वीकारस्यावश्यकत्वादितिवाच्यम् ग्रन्थकारीयसंकेतेनैवोपपत्तौ एकवचनादिपदे शक्तेरप्रामाणिकत्वात । तान्येकवचनद्विवचनेत्यादिपाणिनिसूत्रस्य तदीयसंकेत-ग्रहपरतयाऽप्युपपत्तेः नहि यूस्त्र्याख्यौनदीत्यनुशासनात् स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्यशक्तिः सिद्ध्यति किंतु तदीयसंकेतएव । अतएव नद्यादिसंज्ञा आधुनिकसंकेतशालित्वात् पारिभाषिक्येव नत्वौपाधिकी । अथैवमपि पाणिनिसंकेत सम्बन्धेन तादृशपदवत्त्वमेव एकत्वादिशक्ततावच्छेदकमस्त्वितिचेन्न तादृशसंकेतस्य केनरूपेण सम्बन्धता संकेतत्वेनेतिचेत्तर्हि कस्यचित्पुंस एकवचनपदात् स्वौजसादिर्बोद्धव्य इत्याकारकसंकेतस्यापि संभवादतिप्रसक्तिर्दुर्वारेव पाणिनिसंकेत-तत्वेनतथेतिचेत्तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसंकेतस्यसंभवात् तदीय-

---

च सुप्त्वादीत्यत्रादिपदमुपात्तम् आदिपदेनच अत्वमत्वादिपरिग्रहः तथाच अत्वाभावाधिकरणे एकवचनत्वस्य एकवचनत्वाभावाधिकरणे घटादिपदघटकाकारे अत्वस्यचसत्वात् अमादिघटकाकारे एकवचनत्वस्य अत्वस्यचसत्वान्नैकवचनत्वं-जातिरेवंमत्वादिनाऽपिसांकर्यमवधेयम् ॥ नचेति वाच्यमितिपरेणान्वयः । शक्तिसम्बन्धेनेति स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतासम्बन्धेनेत्यर्थः। एकवचनादिपदवत्त्वंतदिति तथाचैकवचनपदवत्त्वेन स्वाद्यवगाहि एकवचनपदवत् एकत्वेशक्तमित्यादि शक्तिज्ञानमेकत्वादिबोधोपयोगीतिभावः । तादृशाज्ञानदशायामिति घटइत्यादौ एकवचनपदवत् एकत्वेशक्तमित्यादि शक्तिज्ञानाभावेऽपि सुपदमेकत्वेशक्तमिति सुपदधर्मिकशक्तत्वावगाहिभ्रमादेवशाब्दबोधइतिभावः। तादृशव्यवहारापत्तेरिति एकवचनत्वव्यवहारापत्तेरित्यर्थः । अतएवेति पाणिनीयसंकेतादेवेत्यर्थः। नत्वौपाधिकीति अनुगतोपाध्यवच्छिन्नसंकेतवतीसंज्ञा औपाधिकीसंज्ञेत्युच्यते यथा भूतदूतादिसंज्ञा साहि आत्मावृत्तिविशेषगुणवत्त्व वार्त्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैवप्रवर्त्तते तदुक्तंशब्दशक्तौ 'यद्वाऽऽधुनिकसंकेत-शालित्वात्पारिभाषिकम् । जात्यानैमित्तिकंशक्तमौपाधिकमुपाधिना, ॥ इति । पाणिनिसंकेतेति संकेत इच्छा साचात्र एकवचनपदजन्यबोधविषयःस्वमादिर्भवत्वित्याकारिका सापिस्वी या या एकवचनपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यता तत्सम्बन्धेन स्वमादौवर्त्तते अथचेच्छीयैतादृशविशेष्यत्वमेवात्रसंकेत इति बोध्यम् । तादृशपदवत्त्वमिति एकवचनपदवत्त्वमित्यर्थः । संकेतत्वेनेति पाणिनीयत्वाविशेषितेन संकेतत्वेनेत्यर्थः । तादृशसंकेतस्येति एकवचनपदात स्वमादि-

संकेतसम्बन्धेन तत्पदत्वस्य डित्थादिपदात् स्वौजसादिर्वोद्धव्य इत्याकारकपुरुष-संकेतसम्बन्धेन डित्थादिपदत्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकता-प्रसङ्गः तथाचागत्याऽऽनुपूर्वीविशेषएवशक्ततावच्छेदक इति । यत्तु संख्यापि प्रकृते-रर्थः एकवचनादिकञ्चैकत्वाद्यर्थे तात्पर्यग्राहकमेव। नचैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षाविरहात् घटादावेकत्वाद्यन्वयानुपपत्तिरन्यथा हर्यादिपदा-दुपस्थितयोरश्वसूर्ययोराधाराधेयभावेनान्वयापत्तिः घटादिपदस्य एकत्वादिविशि-ष्टघटादौच नशक्तिसम्भवः। घटरूपंपश्यैत्यादौ संख्यानवच्छिन्नघटादेरेवान्वयबोधा-दितिवाच्यम् । आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपिघटैकत्वयोः परस्पर-मन्वयसंभवात् । अतएव खण्डशक्त्यैवकाराद्युपस्थाप्ययोरन्ययोगव्यच्छेदाद्योः पर-स्परमन्वयबोधः। नचैवंकर्मत्वादिकमपि प्रकृत्यर्थएवास्तु किंतत्रद्वितीयादिशक्त्येति-वाच्यम् । नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पन्नतया कर्मत्वादेर्नामार्थ-त्वे तेन समं धात्वर्थान्वयासम्भवात् । नच संख्यायाः प्रातिपदिकार्थत्वे सतितात्पर्य-ज्ञाने विनैवशक्तिभ्रमंलक्षणाग्रहंवा द्विवचनाद्यन्तपदादेकत्वादिबोधसम्भवात् एक-त्वादितात्पर्येण एकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिकप्रयोगापत्ति-

---

वोद्धव्यइति संकेतस्येत्यर्थः । तत्पदत्वस्येति एकवचनपदत्वस्येत्यर्थः अस्यश-क्ततावच्छेदकताप्रसङ्ग इत्यनेनसम्बन्धः । नन्वस्तु व्याकरणप्रणेतृसंकेतसम्बन्धेन एकवचनपदत्वस्य शक्ततावच्छेदकत्वंतथाचनपाणिनीयत्वादि प्रवेशप्रयुक्तोवि-निगमनाविरहइत्यतआह स्वौजसादिरिति अत्रादिपदस्यप्रत्येकंसम्बन्धः अन्यथा औप्रभृतिष्वपि डित्थादिपदत्वस्यसत्त्वे एकवचनपदशक्ततायास्तत्रासत्त्वादतिप्रस-क्ततया डित्थादिपदत्वेऽवच्छेदकत्वासंभवाद्विनिगमनाविरहोद्भावनमसङ्गतंस्या-दित्यवधेयम् ॥ यत्त्विति अस्यतदसदित्यनेनसम्बन्धः । नचैवमिति वाच्यमिति-परेणान्वयः । एकप्रकृत्युपस्थाप्ययोरिति एकप्रत्ययोपस्थाप्ययोरपि कालकृत्योः परस्परमन्वयबोधस्येष्टत्वात् प्रकृत्युपस्थाप्ययोरित्युक्तम् । आकाङ्क्षाविरहादिति घटपदसुपदयोः समभिव्याहाररूपाकाङ्क्षातु न सम्भवति ययोरर्थयोरन्व-यबोधस्तत्तद्बोधकपदयोरेव समभिव्याहारस्याकाङ्क्षात्वादितिभावः । अन्वयसंभवादिति तथाचैकत्वेघटेचखण्डशक्तिरेवाङ्गीकरणीयेतिभावः । धात्वर्थान्वयासम्भवादिति नचैवंसंख्यायाः प्रकृत्यर्थत्वे संख्याप्रकृत्यर्थयो-रपि भेदेनान्वयोनस्यादुक्तव्युत्पत्तेरितिवाच्यम् उक्तव्युत्पत्तिशरीरे नामार्थयोरित्य-स्यस्थाने नामद्वयार्थयोरित्यस्यवक्तव्यत्वादिति । स्वारसिकप्रयोगापत्तिरिति शक्ति-भ्रमानधीनत्वेसति प्रयोजनप्रतिसंधानाजन्यत्वमेवस्वारसिकत्वम् यस्तुशक्तिभ्रम-

रितिवाच्यम् । अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वात् एकवचनाद्यन्तपदस्यैवं एकत्वादावनादितात्पर्योपमेनातिप्रसङ्गविरहात् । द्वयेकयोर्द्विवचनैकवचने इत्याद्यनुशासनंच तादृशतात्पर्यग्राहकमेवेतिवैयाकरणमतम् तदसत् अनन्तानां प्रकृत्याद्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षयाऽल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वात् । नचप्रातिपदिकत्वमेवशक्ततावच्छेदकं नतुघटपदत्वादिकमिति न शक्त्यानन्त्यमितिवाच्यम् प्रातिपदिकत्वस्यदुर्निर्वचत्वात् । तदज्ञानेऽपि एकत्वादिज्ञानस्यानुभविकत्वात् । पदत्वेन वर्णत्वेन वाशक्तत्वे विभक्तेरपि तद्वाचकतासिद्धेः । एकत्वादिशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरनावश्यकत्वाच्च । फलानुरो-

---

मूलकोगङ्गायांघोष इत्यादिप्रयोगः सनस्वारसिकः योऽपिशैत्यपावनत्वादिप्रतिपत्तिरूपप्रयोजनप्रतिसंधानजन्यो गङ्गायांघोषइत्यादिप्रयोगः सोऽप्याधुनिकलक्षणामूलको नतु स्वारसिकः एकत्वतात्पर्येणघटावितिप्रयोगोपि शक्तिभ्रमानधीनतया प्रयोजनानुसंधानाजन्यतयाच स्वारसिकएवस्यादितिभावः । अतिप्रसङ्गविरहादिति उक्तस्वारसिकप्रयोगापत्तिविरहादित्यर्थः ॥ ननु धातुभिन्नत्वेसति प्रत्ययभिन्नत्वेसति प्रत्ययान्ततदादिभिन्नार्थवत्त्वमेव प्रातिपदिकत्वं वाच्यं तथाच नदुर्वचत्वमत-आह तदज्ञानेऽपीति एतादृशप्रातिपदिकत्वाज्ञानेऽपीत्यर्थः । ननुपदत्वंशक्तिमत्त्वं तचशक्तिरेव शक्तापिशक्तिरूपैवेति न शक्ततावच्छेदकं पदत्वंसंभवति अवच्छेद्यावच्छेदकयोरैक्यादतो लाघवाच्चाह वर्णत्वेनेति ननुवर्णत्वं प्रत्येकवर्णेऽप्यस्ति शक्तताच न प्रत्येकवर्णे अन्यथैकवर्णज्ञानादपिशाब्दबोधः प्रसज्ज्येत तथाच वर्णत्वस्यातिप्रसक्ततया कथं शक्ततावच्छेदकत्वमितिचेन्न अतिप्रसक्तस्यापिहिधर्मस्य विषयतावच्छेदकत्वम्भवति शक्तताचेश्वरेच्छीयतत्तदर्थविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यतारूपाऽतोनानुपपत्तिः। नचैवं प्रत्येकवर्णज्ञानाच्छक्तिज्ञानापत्तिरितिवाच्यं तत्तद्वर्णान्तरज्ञानस्य सहकारित्वोपगमेन तद्विरहे शक्तिज्ञानासंभवादितिबोध्यम् । तद्वाचकतासिद्धेरिति युक्तेस्तौल्यादितिभावः ॥ वस्तुतोवर्णत्वेनरूपेणसंख्यावाचकत्वंनसम्भवतीत्याह एकत्वादीति । उपस्थितेरनावश्यकत्वाच्चेति वर्णत्वोपस्थितिविरहेऽपि आनुपूर्वीविशेषज्ञानादेवशाब्दबोधस्यानुभविकत्वादितिभावः अत्र उपस्थितेरभावादित्येववक्तुमुचितम् अनावश्यकत्वादितितुसम्पातायातम् । अथवाऽयमभिप्रायःयद्यानुपूर्वीप्रकारकज्ञानंविना वर्णत्वप्रकारकज्ञानस्थले संख्यान्वयबोधोदृष्टचरःस्यात् वर्णत्वप्रकारकज्ञानमन्तरेणानुपूर्वीप्रकारकज्ञानस्थलेच सनदृष्टचरःस्यात्तदा वर्णत्वप्रकारकज्ञानस्यकारणत्वेसिद्धेऽन्यत्रापिव्यभिचारवारणाय-तत्कल्प्येत नचैतदस्ति प्रत्युत वर्णत्वप्रकारकज्ञानसत्त्वेऽप्यानुपूर्वीप्रकारकज्ञानम्विना नोदयते क्वचिदपिशाब्दबोधः अतोनवर्णत्वंशक्ततावच्छेदकम् अन्यथा घटादिपदस्थलेऽपित्वर्णत्वमेवशक्ततावच्छेदकंस्यात् तथाच सर्वः सर्वार्थवाचकःस्यान्नस्याच्च गौणमुख्यव्यवस्थाऽतोवर्णत्वस्यशक्ततावच्छेदकत्वाभावान्न नवर्णत्वोपस्थितेरावश्यकतेति ॥ ननुकत्वादेरिववर्णत्वजाते-

धेन तत्कल्पनेच कल्पनागौरवात् । एवमानुपूर्वीभिन्नधर्मस्य वाचकतावच्छेदकत्वे घट-पदंसुपदश्चनसंख्यावाचकमिति विपरीतनिश्चयकालेऽपि तादृशधर्मावच्छिन्नस्यवा-चकताग्रहसंभवात् घटइत्यादौ संख्याया बोधापत्तिः। अथविभक्तीनां संख्यार्थकता-मते प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृ-त्यर्थेऽन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबो-धंप्रति कारणत्वमधिकंकल्पनीयम् एकपदोपस्थापितयोः घटैकत्वाद्योरन्वयबोधो-पगमेच न समभिव्याहारज्ञानस्य तत्रहेतुता कल्प्यते इतिलाघवात् प्रकृत्याद्यानुपू-र्वीणां संख्यावाचकतावच्छेदकत्वमुपेयते इतिचेन्न । आकाङ्क्षाविचारे समभि-व्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात् ॥ अथैवमपि विभक्तेः संख्यार्थ-

---

रपि योग्यतया कत्वादिग्राहकसामग्र्यैव सर्वत्रग्रहणसम्भवात् वर्णत्वोपस्थित्यभावे-क्वचिदपिशाब्दबोधानुदयात् फलानुरोधेनतत्कल्पनेचेत्युक्तिरयुक्तेतिचेन्न योग्य-स्यसन्निकृष्टस्यापिपदार्थस्य सर्वत्रप्रत्यक्षंनभवति अन्यथा सन्निकृष्टे घटे कदाचित्इयं पृथिवीतिप्रत्यक्षंकदाचिचायंघटइतिकिंकृतो विशेषःस्यात् कथम्वा स्थाणुर्वापुरुषो-वेतिप्रत्यक्षात्मक संशयउपपद्येत अतोयथानुभवमिच्छाविशेषाणां संस्कारादिवि-शेषाणाञ्च प्रतिबन्धकत्वकल्पनेनैव सर्वाव्यवस्थाउपपादनीयाः इत्थञ्च वर्णत्वप्रत्यक्ष नियतं न कत्वादिप्रत्यक्षमतोवर्णत्वादेरप्रत्यक्षेऽपि कत्वादिप्रत्यक्षसम्भवान्न सर्वत्र-वर्णत्वोपस्थितेरावश्यकतेतिभावः । सामाधानान्तरमप्याह एवमानुपूर्वीभिन्नधर्म-स्येति वर्णत्वस्येत्यर्थः ॥ तादृशधर्मावच्छिन्नस्येति वर्णत्वावच्छिन्नस्येत्यर्थः तद्ध-र्मावच्छिन्नविशेष्यताकसंख्यावाचकत्वाभावग्रहस्य तदन्यधर्मावच्छिन्नविशेष्यताक-संख्यावाचकत्वग्रहप्रतिबन्धकत्वासंभवात् निरुक्तनिश्चयकाले वर्णः संख्यावाचकं-मितिग्रहोत्पत्तौबाधकाभाव इतिभावः ॥ संख्यायाः प्रकृत्यर्थतावादीपुनः प्रत्यव-तिष्ठते अथेति॥ एकवाक्यताविरहेति एकवाक्यत्वञ्च सम्भूयैकार्थप्रतीतीच्छयोच्च-रितत्वं निरूप्यनिरूपकभावापन्नतत्तत्पदार्थनिष्ठविषयताकबोधजनकत्वम्वा तन्निवर्त-नीयाकाङ्क्षोत्थापकत्व तदुत्थाप्याकाङ्क्षानिवर्तकत्वान्यतरत्वम्वाबोध्यम् ॥ समभि-व्याहारज्ञानस्येति अत्र तत्पदोत्तरतत्पदत्वं नसमभिव्याहारः तज्ज्ञानस्य ग्राह्याभा-वानवगाहितयोक्तकवाक्यताविरहनिश्चयकालेऽसंभवात् किंत्विदपदमनेनपदेनस-हान्वयबोधंजनयत्वितीच्छारूपम एतदिच्छाविषयत्वम्वा एतदिच्छयोच्चरितत्वम्वे-त्यवधेयम् ॥ हेतुताकल्प्यतेइति विभक्तेःशक्तिविरहपक्षेतु उक्तैकवाक्यताविरहनि-श्चयकालेऽपि शाब्दबोधस्येष्टत्वात् विभक्तेःशक्तिविरहे पदत्वाभावात्पद-घटितस्य समभिव्याहारस्य प्रकृतिविभक्त्योरभावान्नहेतुता कल्प्यतेइतिभावः । समभिव्याहाराकाङ्क्षाज्ञानस्येपि घटः कर्मत्वमानयनंकृतिरित्यादौ घटकर्मताकान-यनानुकूलकृतेः शाब्दबोधवारणाय आनुपूर्वीविशेषरूपाया आकाङ्क्षाया ज्ञानस्य

कत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य विभक्तिधर्मिकस्य च संख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुताकल्पनीया विभक्तेर्द्योतकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकमेवतात्पर्यज्ञानं तादृशान्वयधीहेतुरितिलाघवमितिचेन्न विभक्तेः संख्यावाचकताविरहेऽपि प्रकृतिविभक्त्योरानुपूर्वीज्ञानस्य तादृशान्वयबोधहेतुताया निर्विभक्तिकादिपदज्ञानादन्वयबोधवारणायावश्यकल्पनीयतया संख्यावाचकप्रकृतेरिव तद् वाचकविभक्तेरपि संख्यान्वयबोधकत्वप्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसंभवेन विभक्तिधर्मिकतज्ज्ञानहेतुताया विनिगमनाविरहेणावश्यकत्वात्॥ अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र लक्षणैवोचिता शक्यलक्ष्ययोः परस्परमन्व-

---

कारणत्वमावश्यकमेवेत्यतउक्तं समभिव्याहारेति ननु । अयमेतिपुत्रोराज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञःपुरुष इति नैकंवाक्यमितिग्रहेऽपि योग्यताज्ञानादिकारणकलापसत्त्वे राजस्वत्ववत्पुरुषावगाहिशाब्दबोधवारणाय समभिव्याहारज्ञानस्यापि शाब्दबोधे कारणत्वमावश्यकमेवेति चेदत्रेदमवधेयम् सैन्धवमानयेत्यादौ सैन्धवपदमानयपदेनसहान्वयबोधं जनयत्वित्यादिरूपस्यसमभिव्याहारस्यज्ञानेसत्यपि सैन्धवपदमश्वंबोधयत्वित्यादितात्पर्यज्ञानाभावे शाब्दबोधानुदयात् तात्पर्यज्ञानस्यापिकारणत्वमवश्यम्वाच्यं तथाच इदंवाक्यमेतदर्थान्वितैदर्थंबोधयत्वितीच्छारूपमेतदिच्छाविषयत्वम् एतदिच्छयोच्चरितत्वमेववा तात्पर्यस्वरूपंवाच्यंनत्विदंपदमेतदर्थं बोधयत्वित्यादिरूपं तथासति नानार्थकानेकपदघटितवाक्यस्थलेऽनेकेषांतात्पर्यज्ञानानां कारणत्वापत्तेः एवं चायमेतिपुत्र इत्याद्यनुपदोक्तस्थले एकवाक्यत्वाभावनिश्चये इदंवाक्यं राजसम्बन्धवत्पुरुषविषयकबोधंजनयत्वित्यादिरूपस्य तात्पर्यस्य ग्रहाभावाच्छाब्दबोधापत्त्यसम्भवान्न समभिव्याहारज्ञानस्यकारणत्वंकल्पनीयम् क्लृप्तकारणताकेन तात्पर्यज्ञानेनैवनिर्वाहात् एकवाक्यताविरहनिश्चकालेहि तात्पर्यज्ञानमेव नोदेयादिति । अथैवमपीति उक्तसमभिव्याहाररूपाकाङ्क्षाज्ञानस्याकारणत्वेतत्प्रयुक्तगौरवविरहेऽपीत्यर्थः । द्योतकत्वपक्षेऽपि विनिगमनाविरहात् प्रकृतिधर्मिक संख्यान्वयबोधकत्वतात्पर्यग्रहस्येव विभक्तिधर्मिकसंख्यान्वयबोधकत्वतात्पर्यग्रहे बाधकाभावः लक्षणवहि शक्यसम्बन्धरूपतयाऽशक्तपदे न संभवति तात्पर्यंतुनशक्तिघटितमतोऽशक्तेऽपिशब्दे तात्पर्यग्रहःसंभवतीत्याशयेनाह विभक्तेः संख्यावाचकताविरहेऽपीति । अथेति अस्यमैवमित्यनेनसम्बन्धः । नन्वेकपदे युगपद्वृत्तिद्वयस्यानङ्गीकारात् प्रकृतिशक्त्युपस्थापित प्रकृतिलक्षणोपस्थापितयोरर्थयोर्नान्वयबोध.अन्यथा घटपटौस्तइतिप्रयोगस्थले घटौस्तइत्यपिप्रयोगोयुक्तः स्यात् शक्त्याघटस्य लक्षणया पटस्यभानसंभवादित्यतआह शक्यलक्ष्ययोरित्यादि युगपद्वृत्तिद्वयानङ्गीकारस्तु संख्यातिरिक्तविषयकबोधस्थलपवेति फलानुरोधेन कल्प्यते इतिभावः। नन्वस्तु प्रथमाविभक्ते-

योपगमे क्षतिविरहात् । प्रथमाविभक्तेः कुत्रापिशक्तेरक्लृप्ततया तस्याः शक्यसम्बन्धरूपा लक्षणा नसम्भवति द्वितीयादेः कर्मत्वादौशक्तत्वेऽपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा संख्यायां लक्षणेत्यत्रविनिगमकं दुर्लभम् । नचैकत्वाद्यन्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुता कल्पनायां लाघवात् कतिपयशक्तिकल्पने गौरवमकिञ्चित्करम् । सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेनैककारणताकल्पनन्तु न सम्यक् निर्विभक्तिककुम्भादिपदतः संख्योपस्थितौ तदगृहीतवृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ संख्यान्वयबोधप्रसङ्गात् घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतुतां कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहकारेण फलजनकतायाअवश्याभ्युपेयत्वादितिवाच्यम् घटादिपदस्यैकत्वादौ लक्षणाग्रहसत्त्वे घटः प्रमेय इत्यादिवाक्यादेकत्वंप्रमेयमित्याद्यन्वयबोधस्य सर्वसम्मततया तदनुरोधेन एकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसम्मतत्वात् । मैवम् यादृशयादृश-

---

रेवलक्षणा तथाच नयुगपद्वृत्तिद्वयानङ्गीकारनियमभङ्गोऽपीत्यतआह प्रथमाविभक्तेरिति । अक्लृप्ततयेति इदञ्चविशेषणविभक्तेरभेदार्थकत्वाभावमभिप्रेत्योक्तम् तस्याअभेदार्थकत्वे प्रथमाविभक्तेरपि शक्ततया लक्षणासंभवादिति बोध्यम् । तत्समभिव्याहृतेति द्वितीयादिसमभिव्याहृतेत्यर्थः । नचेति वाच्यमितिपरेणान्वयः॥ तदुपस्थितित्वेनेति एकत्वाद्युपस्थितित्वेनेत्यर्थः । कतिपयशक्तिकल्पनइति प्रथमाविभक्तीनामेकत्वादिषुशक्तिकल्पन इत्यर्थः । गौरवमकिञ्चित्करमिति एकत्वादिषुत्रिषुप्रथमायाः शक्तिकल्पनेऽप्यनन्तघटादिपदज्ञानजन्य तत्तदुपस्थितित्वेनकारणतायामेव गौरवमितिभावः । तदुपस्थितित्वेनेति एकत्वाद्युपस्थितित्वेनेत्यर्थः । एकत्वादिप्रकारकान्वयबोधंप्रतीति शेषः । तदगृहीतवृत्तिकेति तत्पदेनैकत्वादिः परामृश्यते । बोधप्रसङ्गादिति एतदग्रे तद्वारणायेतिपूरणीयम् । घटपदादिज्ञानेति घटादिपदप्रयोज्या या घटत्वाद्यवच्छिन्नविशेष्यता तन्निरूपितैकत्वादिनिष्ठप्रकारताशालिशाब्दबोधंप्रति घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनकारणतामित्यर्थः। विभक्तिघटादिपदेत्यादि विभक्तिरहितघटादिपदात् संख्यान्वयबोधवारणायेतिशेषः। तादृशोपस्थित्योरिति घटाद्युपस्थित्येकत्वाद्युपस्थित्योरित्यर्थः। अवश्याभ्युपेयत्वादिति तथाच बहुतरघटादिपदज्ञानजन्यैकत्वाद्युपस्थितित्वेन कारणत्वापेक्षयाऽल्पतरस्वादिपदज्ञानजन्यतदुपस्थितित्वेनैवहेतुता लघीयसीतिभावः। प्रकृतेःसंख्यावाचकत्वं निराकरोति मैवमित्यादिना । वृत्तिद्वयज्ञानजन्योपस्थितिद्वयस्यकारणत्वापेक्षया

पदानां लक्षणया एकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तादृशानन्तपदज्ञान-जन्यैकत्वाद्युपस्थितीनां तच्छाब्दहेतुत्वकल्पनं प्रकृतेः संख्यावाचकतावादिनामधिक-मिति तत्कल्पनापेक्षया चाल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पनएवलाघ-वम् ॥ एतेन संख्याविशेषावच्छिन्नघटादिलक्षणया प्रकृतेरर्थः नतु संख्या विभक्त्यर्थः शाब्दबोधे विभक्तिजन्यसंख्योपस्थितिहेतुताकल्पनाधिक्येन गौरवात् । घटादिपद-स्यैकत्वादिविशिष्टघटादौ लक्षणाग्रहदशायां सर्वमत एव तज्जन्यविशिष्ट विषयकोप-स्थित्या विशिष्टविषयकशाब्दधीजननात् तथाविधोपस्थितिहेतुतायाः सर्वानुमत-त्वात् । पदान्तरासमभिव्याहृतात् घट इत्यादि पदादेकत्वादिविशिष्ट घटादिशाब्द-बोधस्त्वलीक एव । तद्विषयकस्मरणस्य तत्रोपगमात् तथाचोक्तं सर्वैर्हि वाक्यंक्रियायां परिसमाप्यते इत्यपिनिरस्तम् । यादृशपदानां लक्षणया एकत्वादिविशिष्ट स्वार्थबोध-हेतुत्वं नोभयवादिसिद्धं तादृशानन्तपदजन्यविशिष्टोपस्थितीनां शाब्दधीहेतुता कल्पनमपेक्ष्य विभक्तिजन्यसंख्योपस्थितीनामल्पानां तत्कल्पने लाघवात् ॥ इदंपु-नरिहावधेयम् विभक्तेः संख्यावोधकत्वे समानविषयकानुमित्यादिकम्प्रति शाब्दसा-मग्रीप्रतिवन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थिति र्याच विभक्तिजन्या संख्योपस्थितिः प्रवेश्या तयोश्च मिथो विशेष्यविशेषणभावेविनिगमनाविरहात् प्रतिब-न्धकतावाहुल्यम् । प्रकृतेर्विशिष्टलाक्षणिकत्वेतु तदुभयस्थलीयविशिष्टविषयकोपस्थि-तिरेकैव सामग्र्यामन्तर्भवतीतिलाघवम् । नच विशिष्टविषयकोपस्थितेरपि एकत्वा-दि प्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादि-

---

लाघवात् एकत्वादिविशिष्टघटादौ घटादिपदस्यलक्षणाङ्गीकारेणैवविशिष्टबोधः सम्प-द्यतेयुगपद्वृत्तिद्वयानङ्गीकारश्चोपपद्यते इतिवदतांमतंनिरस्यति एतेनेत्यादि निर-स्तमित्यनेनान्वयः । ननुघटइत्यत्र घटपदस्यैकत्वविशिष्टघटलाक्षणिकत्वे घटइतिपद-ज्ञानजन्यवुद्धेः शाब्दत्वानुपपत्तिः शाब्दमतेः पदद्वयार्थसंसर्गावगाहित्वनियमा-दतोघटपदाद्धटोपस्थितेरेकवचनादेकत्वोपस्थितेश्च स्वीकारआवश्यकोऽतआह पदान्तरासमभिव्याहृतादिति । स्मरणस्यतत्रोपयोगादिति नचतत्रशाब्दयामीत्यनुभ-वानुपपत्तिरितिवाच्यम् पदान्तरसमभिव्याहाररूपकारणाजन्यत्वेन शाब्दत्वाभा-वात् शब्दसमन्तरजायमानत्वरूपदोषवशाच्छाब्दत्वानुभवस्य भ्रमत्वादिति ॥ एते-नेत्यनेनविवक्षितंदोषं प्रकटयति यादृशपदानामिति । कारणसमुदायरूपायांसाम-ग्र्यां समुदायत्वमेकविशिष्टापरत्वमेवेति मतमालम्ब्याह इदंपुनरिति अनुपदमभिधीयमानगौरवेणप्रदर्शितलाघवं नविभक्तेः संख्यावाचकत्वसाध-नायालमतोन तस्याः संख्यार्थकत्वमितिभावः ॥ अनुमित्यादिकंप्रतीति आदि-

विषयताशालित्वेन वा प्रवेश इतिविनिगमनाविरहात्साम्यमितिवाच्यम् । भवन्मते योग्यताज्ञानघटोपस्थित्यैकत्वोपस्थितीनां तिसृणांविशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कं मन्मतेतत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं दर्शितोभयरूपेणवैशिष्ट्यं निवेश्य तदुभयम्। प्रत्येकंतादृशरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यंनिवेश्य च द्वयमिति तच्चतुष्टयमात्रमिति रीत्याऽस्माकमल्पतरतत्कल्पने महालाघवम् । तादृशरीत्यैव च प्रणमतीत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः प्रादयो द्योतका एव नतु प्रकर्षादि वाचका इति सर्वानुमतः पन्थाः परिष्कर्तुंशक्यते अन्यथाऽनन्तधातुजन्यप्रकर्षादि

---

नाविभिन्नविषयकप्रत्यक्षंपरिगृह्यते । तिसृणामिति आकाङ्क्षाज्ञानतात्पर्यज्ञानादिघटितानांतूक्तोपस्थितीनां विशेष्यविशेषणभावेविनिगमनाविरहप्रयुक्तः प्रतिबध्यप्रतिबन्धकभावोऽतितरांवर्धते इतिभावः ॥ घटादिविषयतानिरूपितैकत्वादिविषयताशाल्युपस्थितिविशिष्टयोग्यताज्ञानत्वेन एवं योग्यताज्ञानविशिष्टनिरुक्तविषयताशाल्युपस्थितित्वेनच एवमेकत्वविषयतानिरूपितघटादिविषयताशाल्युपस्थितिविशिष्टयोग्यताज्ञानत्वेन एवंयोग्यताज्ञानविशिष्टतादृशविषयताशाल्युपस्थितित्वेन प्रतिबन्धकत्वस्य वक्तव्यत्वेऽपि संकलनया तच्चतुष्टयमेवपर्यवस्यतीत्याह मन्मतेतत्रेति । तदुभयमिति प्रतिबन्धकत्वद्वयम् । संकलयति तच्चतुष्टयमात्रमिति प्रतिबन्धकत्वचतुष्टयमात्रम् । महालाघवमिति इदन्तुनमनोरमम् तथाहि शक्तिग्राहकमानैः शक्ततावच्छेदकशक्यतावच्छेदकयोरेव लाघवगौरवेअपेक्ष्येते नत्वन्यत्र अन्यस्य तदानीमनुपस्थितत्वात् शक्ततावच्छेदकशक्यतावच्छेदकेहि शक्तिशरीरघटके घटपदाद्घटोबोद्धव्यइत्याद्याकारिकया शक्त्या तयोर्विषयीकरणात् जातायांतुपदार्थे व्यवस्थायां पश्चाज्जायमानाऽपि गौरवबुद्धिः फलमुखगौरवविषयकत्वादकिञ्चित्करी भवति सिद्धस्यान्यथाभावकरणे तर्कशतस्याप्यसामर्थ्यात् अतएव साधकमानेन शब्दस्यानित्यत्वेसिद्धे पश्चाज्जायमाना तद्ध्वंसप्रागभावादिकल्पनागौरवमतिरकिञ्चित्करी । तथाच घटआनीयतां घटमानय घटावानयेत्याद्यपोद्वापाभ्यां द्व्येकयोर्द्विवचने वहुषुबहुवचनम् कर्मणिद्वितीयेत्यादिस्मृतिभिः कोषैर्वा लाघवज्ञानसहकृतैः घटादिप्रातिपदिकानां घटादौ स्वाद्येकवचनादीनामेकत्वादौ द्वितीयादेः कर्मत्वादौ च शक्तिषु परिच्छिन्नासु पश्चादुपनिपतितं प्रतिबध्यप्रतिबन्धकभावगौरवं फलमुखत्वादकिञ्चित्करम् । एतद्व्यवस्थातिक्रमेतु प्रकृत्यपेक्षया विभक्तीनामल्पीयस्त्वात्तास्वेवशक्तिः सिद्ध्येन्न प्रकृतौ एवं धातुस्थलेऽपिधात्वपेक्षयाऽल्पीयसांतिवादीनामेवधात्वर्थविशिष्टकृत्यादौशक्तिर्लाघवात्सिद्ध्येन्नतुधातौ तस्मादुक्तव्यवस्थैवसाधीयसीति विवेचितञ्चैतद्गूढार्थतत्त्वालोकेगुरुचरणैः । तादृशरीत्येति योग्यताज्ञानप्रकर्षोपस्थितिनमनोपस्थितीनां तिसृणांविशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कं प्रकर्षविशिष्टनमने धातोर्लक्षणापक्षेचोक्तरीत्या चतुष्टयमात्रमिति लाघवेनेत्यर्थः ॥ आकाशपदस्य लक्षणयाऽ-

विशिष्टतत्तत्स्वार्थोपस्थितीनां शाब्दधीजनकतामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात्। स्वादीनामिव प्रादीनामपि वाचकता निराबाधासिद्ध्येतेति ॥ संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसम्बन्धेनैवविशेषणत्वं नतु समवायादिना तथासत्येकव्यक्तिबोधपरादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः। तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिना आकाशाद्यन्वययोग्यत्वात्। नचपर्याप्तेः संसर्गत्वेऽपि तद्दोषतादवस्थ्यम् घटाकाशादौ द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात् प्रत्येकस्योभयानतिरिक्तत्वादितिवाच्यम्। उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात्! आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावसत्त्वेनातिप्रसङ्गविरहात्। वैशिष्ट्यञ्च वैज्ञानिकं नतु वास्तवम्। तेन यत्र योग्यताभ्रमजन्योऽत्राकाशावित्यादिवाक्यजन्यद्वित्वादिप्रकारकाकाशबोधस्तत्र विशिष्टसंसर्गाप्रसिद्धावपि नक्षतिः। द्वित्वादिपर्याप्तावन्यत्रप्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रान्तेस्तत्रोपगमात्। प्रकारांशे भ्रमत्वस्य सर्वानुभवसिद्धत्वेऽपि सम्बन्धतावच्छेदकांशे भ्रमत्वस्यान्यत्रोपपादितत्वात्। नच प्रकृत्यर्थ-

---

र्थान्तरबोधकत्वे द्विवचनाद्यन्तप्रयोगस्येष्टत्वादाह एकव्यक्तिबोधनपरादिति। असत्त्वेनेति द्वित्वादिपर्याप्तेर्घटादावपिसत्त्वादितिभावः॥द्वित्वादिप्रतियोगिकपर्याप्ता वाकाशत्वव्याप्यत्वाभावात् आकाशत्वव्याप्यपर्याप्तेरेवाप्रसिद्ध्या तत्सम्बन्धेन-द्वित्वादिप्रकारकस्य आकाशावित्यादिवाक्यजन्यबोधस्य भ्रमत्वंननिर्वहतीत्यतआह वैशिष्ट्यञ्चेति पर्याप्त्यंशेउद्देश्यतावच्छेदकव्याप्यत्ववैशिष्ट्यञ्च। वैज्ञानिकमिति ज्ञानेभासमानमित्यर्थः उद्देश्यतावच्छेदकव्याप्यत्वनिष्ठावच्छेदकतानिरूपिता पर्याप्तिनिष्ठसंसर्गतेतितु पर्यवसितोऽर्थः। विशिष्टसंसर्गाप्रसिद्धावपीति आकाशत्व व्याप्यत्वविशिष्टपर्याप्तेरप्रसिद्धावपीत्यर्थः। अन्यत्रप्रसिद्धस्येति शब्दादौप्रसिद्धस्य ॥ ननुसंसर्गांशे भासमानस्याप्रकारत्वात् तदभाववति तत्प्रकारताकज्ञानत्व रूपभ्रमत्वं संसर्गतावच्छेदकांशे न सम्भवतीत्यतआह सम्बन्धतावच्छेदकांश इति। उपपादितत्वादिति संसर्गकोटौ प्रकारविशेष्यभावाभावेऽपि विशेषणता-विशिष्टविशेष्यताकज्ञानत्वरूपस्य भ्रमत्वस्योपादितत्वादित्यर्थः। वैशिष्ट्यञ्च स्वनिरूपितत्व स्वविशिष्टनिरूपकतानिरूपिताधिकरणत्वाभाववद्वृत्तित्वोभय-सम्बन्धेन वैशिष्ट्यञ्च स्वानवच्छेदकसम्बन्धानवच्छिन्नत्व स्वानवच्छेदकधर्मानवच्छिन्नत्वोभयसम्बन्धेन विशेषणतात्वञ्च प्रकारतात्वव्यापकोधर्मः एवञ्च संसर्गकोटौ प्रकारविशेष्यभावाभावेऽपि विशेष्यविशेषणभावस्वीकारात प्रकृते पर्याप्तिनिष्ठ विशेष्यतायामाकाशत्वव्याप्यत्वनिष्ठविशेषणतानिरूपितत्वस्य उक्तोभयसम्बन्धे

तावच्छेदकएव व्यापकतासम्बन्धेन द्वित्वान्वयधीः किन्नोपेयते इतिवाच्यम् । घटावित्यादौ घटत्वादीनांस्वरूपतएवोपस्थिततया तत्रोक्तान्वयबोधस्यासंभवात् । स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वरूपपरम्पराया एव प्रकृत्यर्थे द्वित्वादेः सम्बन्धतास्वीकारेच व्यापकतारूपसम्बन्धतावच्छेदकांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिः सम्बन्धतोपेक्षाया निर्बीजत्वात् । अथात्र व्याप्तिर्व्यापकसामानाधिकरण्यरूपैववाच्या नतु तद्वदन्यावृत्तित्वरूपा केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः । एवञ्चोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्त्यपेक्षया लघोः स्वव्यापकतादृशधर्मवत्त्वस्यैव सम्बन्धत्वमुचितमिति चेत्तर्हि आकाशोनद्वावित्यादिवाक्यजन्यशाब्दबोधदशायामपि आकाशावित्यादिवाक्यात् द्वित्वबोधापत्तिः। तथाहि आकाशोनद्वावित्यादितो द्वित्वावच्छिन्नभेदः प्रतीयते सच न स्वव्या-

नैतद्विशेषणताविशिष्टा या आकाशत्वव्याप्यत्वनिष्ठा निरूपकता तन्निरूपिताधिकरणत्वाभाववत्पर्याप्तिवृत्तित्वस्यच सत्त्वान्नानुपपत्तिरिति । किंनोपेयते इति एवं सत्याकाशत्वे व्यापकतासम्बन्धेन द्वित्वाभावात् प्रकारांशएवाकाशावित्यादिवाक्यजन्यप्रतीतेर्भ्रमत्वं संभवति स्थलान्तरे संसर्गतावच्छेदकांशेभ्रमत्वमभ्युपगम्यताम्मावा प्रकृतेतु न तदावश्यकतेत्याशयः । असंभवादिति अन्वयितावच्छेदकरूपेणान्वय्युपस्थितिरूपकारणविरहादितिभावः । ननु यत्रानेकवृत्तिधर्मस्यान्वयितावच्छेदकत्वं तत्रास्तु लाघवात् केवलपर्याप्तिसम्बन्धेन प्रकृत्यर्थे एवद्वित्वादेर्भानम् यत्रत्वेकमात्रवृत्तिधर्मस्यान्वयितावच्छेकत्वं तत्र च व्यापकत्वसंसर्गेण प्रकृत्यर्थतावच्छेदके एवद्वित्वादेर्भानं तथाच घटावितिवाक्यजन्यबोधे घटे एव द्वित्वंभासेत अतोनानुपपत्तिः नवाऽऽकाशावित्यादिवाक्यजन्यबोधे प्रामाण्यापत्तिरिति चेन्न पदार्थद्वयसंसर्गाद्याकाङ्क्षानियम्य आकाङ्क्षाचोभयत्र समानैवेति कथमेकत्र पर्याप्तिरपरत्र व्यापकत्वंभासेत किञ्चैवमेकघटसत्त्वस्थलेऽप्यत्रघटाविति प्रयोगस्य प्रामाण्यापत्तिः घटपटादिगतद्वित्वस्य पर्याप्तिसम्बन्धेन घटे सत्त्वादिति ॥ अथात्रेति अत्रसप्तम्या घटकत्वमर्थः तथाचोद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिघटिका व्याप्तिरित्यर्थः । व्यापकसामानाधिकरण्येति पर्याप्तिसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवदुद्देश्यतावच्छेदकसामानाधिकरण्यरूपेत्यर्थः। तद्वदन्येत्यादि उद्देश्यतावच्छेदकवदन्यावृत्तित्वमित्यर्थः। यत्रेति प्रमेयावित्यादौ । अप्रसिद्धेरिति प्रमेयत्वादिमदन्यत्वाप्रसिद्धेः। स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वस्य सम्बन्धत्वपक्षे स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवदुद्देश्यतावच्छेदकवत्त्वस्यैव संसर्गत्वं लभ्यते उद्देश्यतावच्छेदकव्याप्यपर्याप्तेः संसर्गत्वपक्षेचोक्तप्रतियोगितानवच्छेदकधर्मवदुद्देश्यतावच्छेदकसमानाधिकरणपर्याप्तेः संसर्गत्वमतोऽस्मिन् पक्षे सामानाधिकरण्यांशस्याधिकस्य प्रवेशाद्गौरवमित्याशयवानाह एवञ्चोद्देश्यताव-

पकाकाशत्ववत्त्वादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकः ताद्दशसम्बन्धेन द्वित्ववतोऽप्रसिद्धेः अपितु पर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताक एव तत्कालेच पर्याप्तिसम्बन्धेन द्वित्वविशिष्टबुद्धिरेव प्रतिबध्यते नतूक्तपरम्परासम्बन्धेन तद्विशिष्टबुद्धिरपीति॥ अथाकाशोनद्वावित्यादौ केवलपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदोनञा बोधयितुं न शक्यते आकाशेऽप्युक्तयुक्त्या द्वित्वपर्याप्तेः सत्त्वेन तत्र तेनसम्बन्धेन तद्भेदस्य वक्तुमशक्यत्वात् आकाशत्वव्याप्यपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वादिमद्भेदश्चाप्रसिद्धएवेतिचेन्न द्वित्वादिपर्याप्तेरुभयादिवृत्तिधर्मेणैवावच्छेदात् तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्वद्भेदस्य तेनसम्बन्धेन द्वित्वादिमद्भेदस्य च तद्वतिवृत्तौ बाधकाभावात् । नचैवं घटपटौन द्वाविति प्रयोग आपद्येत घटपटयोरपि प्रत्येकंद्वित्वावच्छिन्नभेदसत्त्वादितिवाच्यम् द्विवचनाद्युपस्थापितद्वित्वावच्छेदेनैव द्वित्वावच्छिन्नभेदस्य बोधेन ताद्दशप्रयोगाभावोपपत्तेः। नञा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदश्च उद्देश्यतावच्छेदकावच्छेदेनैव बोध्यते इति व्युत्पत्तेः द्वित्वसामानाधिकरण्येन तद्बाधस्याकिञ्चित्करत्वात् । नच घटत्वादेरतिप्रसक्ततया द्वित्वादिपर्याप्तेरनवच्छेदकत्वात्तदवच्छेदेन द्वित्ववद्भेदस्य भवतामप्यनुमतत्वात् प्रकृत्यर्थगतैकत्वाविवक्षायां घटोनद्वावित्यादिप्रयोगापत्तिरितिवाच्यम् ताद्द-

---

च्छेदकेति। सम्बन्धावच्छिन्नप्रतियोगितेत्यादि अत्रोक्तसम्बन्धावच्छिन्नत्वं प्रतियोगितावच्छेदकतायामन्वेति एवमग्रेऽपिबोध्यम् । प्रतियोगितावच्छेदकताकएवेति द्वित्वावच्छिन्नभेदःप्रतीयते इति पूर्वेणान्वयः । उक्तपरम्परासम्बन्धेनेति स्वव्यापकाकाशत्ववत्त्वसम्बन्धेन। तद्विशिष्टबुद्धिरपीति प्रतिबध्यते इति पूर्वेणान्वयः। तथाचोद्देश्यतावच्छेदकव्याप्य पर्याप्तेरेवसंसर्गत्वंसिद्ध्यति। उक्तयुक्त्येति घटाकाशावितिप्रतीत्येत्यर्थः। तेनसम्बन्धेनेत्यादि पर्याप्तिसम्बन्धेन योद्वित्ववान् तद्भेदस्येत्यर्थः। तद्वद्भेदस्येति द्वित्वपर्याप्तिमद्भेदस्येत्यर्थः । तेनसम्बन्धेनेति पर्याप्तिसम्बन्धेन । एवमिति एकमात्रवृत्तिधर्मावच्छेदेनद्वित्वादेरभावे इत्यर्थः। प्रत्येकमिति घटत्वावच्छेदेनपटत्वावच्छेदेनचेत्यर्थः। द्वित्वावच्छिन्नभेदस्यबोधेनेति तथाचात्रद्वित्वावच्छेदेन द्वित्वस्यैवसत्त्वं न द्वित्वाभावस्येत्यतोनोक्तप्रयोगस्य प्रामाण्यमिति भावः। व्यासज्यवृत्तीति तत्त्वञ्च एकत्वान्यसंख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वमिति।इतिव्युत्पत्तेरिति एतद्व्युत्पत्त्यनङ्गीकारेघटाकाशौनद्वाविति प्रयोगापत्तिरितिबोध्यम् ।तदबाधस्येति द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्त्वस्येत्यर्थः। अकिञ्चित्करत्वादिति घटपटौनद्वाविति प्रतीतेः प्रामाण्यासाधकत्वात्

शप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्तेरिव द्वित्वादिमद्भेदस्याप्यनुयोगितावच्छेदकताया अप्रामाणिकत्वात् प्रतियोगितानवच्छेदकताया भेदावच्छेदकतानियतत्वासिद्धेः। अस्तुवाऽतिप्रसक्तोऽपिघटत्वादिः द्वित्वपर्याप्तेरवच्छेदकः घटावित्यादिप्रतीतिवलात्। वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्तेरनवच्छेदकत्वेऽपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तदवच्छिन्नावच्छेदकत्वमव्याहतमेव ॥ अथपर्याप्त्याख्य विलक्षणसम्बन्ध एवाप्रामाणिकस्तत्कथं तत्सम्बन्धता। आकाशोनद्वाविति प्रतीतिस्तु समवायसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकताकद्वित्वावच्छिन्नभेदविषयिकैवास्ताम्। आकाशादौद्वित्वसमवायसत्त्वेऽपि द्वित्वादेरेवोभयादिवृत्तिधर्मानुयोगितावच्छेदकत्वोपगमात् तदनवच्छेदकाकाशत्वाद्यवच्छेदेन समवायसम्बन्धेन तद्वतोभेदस्य वृत्तौवाधकाभावादितिचेन्न। आकाशावित्यादिवाक्यजन्यशाब्दवोधस्याप्रमात्वानुपपत्त्यैव तादृशसम्बन्धसिद्धेः तादृशबुद्धेः समवायविषयकत्वे प्रमात्वनिराकरणस्य कर्तुमशक्यत्वात्। उद्देश्यतावच्छेदकव्याप्तिविशिष्ट समवायस्य संसर्गतोपगमे घटावित्यादिवाक्यस्याप्यप्रमाणत्वापत्तिः समवायस्यैक्येन घटादिनिष्ठस्यद्वित्वादिसमवायस्य पटादावपिसत्त्वेन घटत्वाद्यव्याप्यत्वात्। नचोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायत्वेनैव सम्बन्धतास्तु द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेऽपि द्वित्वादेस्तद्व्याप्यतया न घटावित्यादेरप्रमाणतेतिवाच्यम् एवंसति तथाविधद्वित्वादेरेव लाघवेन द्वित्वादिसम्बन्धतौचित्यात्। अथास्त्वेवमेव तथापि पर्याप्तिसम्बन्धस्यविलयादितिचेन्न द्वित्वादि स्वरूपस्यैवद्वित्वादिपर्याप्तितयाऽभिमतसिद्धेः। उक्तश्च दीधितिकृता पर्याप्तिश्चायमेकोघट इमौद्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषइति। सम-

---

एकत्वाविवक्षायामपीति एकत्वविवक्षायान्तु एकत्वस्य द्वित्वानुयोगितावच्छेदकत्वाभावादेवनापत्तिः। प्रतियोगितानवच्छेदकताया इत्यादि अन्यथा घटभेदप्रतियोगितानवच्छेदकीभूतद्रव्यत्वादेर्घटभेदानुयोगितावच्छेदकत्वापत्तिरिति भावः। अस्तुवेति तथाच नघटत्वावच्छेदेन द्वित्ववद्भेदस्य सत्त्वमतोनघटोनद्वावित्यस्यापत्तिः। तत्सम्बन्धतेति द्वित्वादिप्रतियोगिकसम्बन्धतेत्यर्थः। समवायसम्बन्धावच्छिन्नेति एतस्य प्रतियोगितावच्छेदकतया सम्बन्धः तथाच समवायसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदविषयिकेत्यर्थः। आकाशत्वावच्छेदेनेति वृत्तावित्यनेनसम्बन्धः तद्वतइति द्वित्वादिमतः। नचोद्देश्यतावच्छेदकेति तथाचाकाशत्वव्याप्यद्वित्वस्यैवाप्रसिद्ध्या आकाशावित्यस्य न प्रामाण्यप्रसङ्गः। द्वित्वादेस्तद्व्याप्यतयेति समवायसम्बन्धेनेति शेषः। उक्तञ्चेति अवच्छेदकत्वनिरुक्तिदीधिताविति शेषः। स्वरूपसम्बन्धविशेषइति तथाचद्वित्वस्वरूपमेव

वायस्य नानात्वमतेच द्वित्वादि समवायएव तत्पर्याप्तिर्नतु स्वरूपमतिरिक्तपदार्थोवेत्यन्यदेतत् ॥ यच्च आकाशंनद्वे इत्यादिप्रतीतिवत् आकाशंनद्वित्ववदितिप्रतीतेः प्रमात्वस्य वारणाय समवायेनद्वित्वादिमद्भेद आकाशत्वावच्छेदेन नस्वीकर्तव्यः । तथाच पर्याप्तेरविलक्षणत्वे आकाशोनद्वेइत्यादिप्रतीतेरप्यप्रमात्वापत्तिरिति तन्न आकाशंनद्वित्ववदितिप्रतीतौ द्वित्वसमवायावच्छिन्नभेदएवविषयः मतुपासम्बन्धयुल्लेखात् नतु द्वित्वाद्यवच्छिन्नभेदः । एवञ्चाकाशत्वाद्यवच्छेदेन द्वित्वाद्यवच्छिन्नभेदएव स्वीकर्तव्यः नतुतत्सम्बन्धावच्छिन्नभेद इत्याकाशंनद्वेइति प्रतीतेरप्रमात्वस्याकाशंनद्वित्ववदितिप्रतीतेर्वा प्रमात्वस्य नप्रसङ्ग इति ॥ अथोद्देश्यताच्छेदकव्याप्यपर्याप्तेर्द्वित्वसम्बन्धत्वे धवखदिरौ छिनत्तीत्यादौ उद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्य द्वित्वादिद्वयमेव प्रत्येतव्यम् नतुधवखदिरादि पर्याप्तद्वित्वादिकं तथाचैकैकधवखदिरादितात्पर्येण तथाप्रयोगानुपपत्तिरिति द्वित्वान्वयितावच्छेदकमपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभयादिनिष्ठं साहित्यं द्वन्द्वसमासार्थोवाच्यः तथाच मीमांस-

---

द्वित्वस्यसम्बन्धोनतुतदतिरिक्त इतिभावः । समवायस्यनानात्वमतेचेति एतन्मते उद्देश्यतावच्छेदकव्याप्यसमवायस्य संसर्गत्वोपगमेनैव आकाशावित्यस्य प्रामाण्यवारणं तादृशसमवायेनद्वित्वस्याकाशेऽभावादिति । समवायेनद्वित्वादिमद्भेदइति समवायसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदइत्यर्थः । तथा च पर्याप्त्यनङ्गीकारे आकाशं नद्वे इतिप्रतीतौ समवायसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदएवाकाशत्वावच्छेदेन भासेत तादृशश्च भेदो नाकाशत्वावच्छेदेनवर्त्तते इत्यवश्यमङ्गीकार्यमन्यथोक्तभेदावगाहिन्या आकाशंनद्वित्ववदित्यस्या अपिप्रतीतेः प्रमात्वंस्यादत आकाशंनद्वइति प्रतीतौ पर्याप्तिसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताक भेद एव विषयोवाच्यःसचपर्याप्तिस्वीकारम्विनानोपपद्यते इतिभावः ।तन्नेत्यादि अयमाशयः मतुवर्थःसम्बन्धी सम्बन्धश्चात्र समवायः

तथाचाकाशं न द्वित्ववदिति वाक्याज्जायमानायां द्वित्वसमवायिभिन्नमाकाशमिति प्रतीतौ समवायो धर्मविधयैवावच्छेदकतयावभासते इत्थञ्च द्वित्वसमवायरूप धर्मावच्छिन्नप्रतियोगिताकभेदस्याकाशेऽनभ्युपगमेनैन न तादृशभेदावगाहिन्या आकाशंनद्वित्ववदिति प्रतीत्याः प्रमात्वापत्तिः नवाऽऽकाशंनद्वे इति प्रतीतौ प्रमात्वानुपपत्तिः तस्यांसमवायसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्यावगाहनात् तस्यच प्रतीत्यनुरोधेनाकाशे स्वीकर्तुंशक्यत्वादिति नोक्तरीत्या पर्याप्तिः सिद्ध्यतीति । नतुतत्सम्बन्धावच्छिन्नभेदइति द्वित्वसमवायात्मकधर्मावच्छिन्नप्रतियोगिताकभेद आकाशत्वावच्छेदेन नस्वीकर्त्तव्य इत्यर्थः । मीमांसकमतप्रवेशइति मीमांसकाहि धवखदिरावित्यादावितरेतरद्वन्द्वस्थले उत्तरपदे धवखदिरादिसाहित्याश्रये लक्षणाऽतो द्विवचनादेः

क्रमतप्रवेश इतिचेन्न। यत्रैकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमः। यत्रधर्मद्वयादेस्तथात्वं तत्रकेवला पर्याप्तिः समवायएव वा संसर्गइत्यभ्युपगमात् विनैव साहित्यस्यान्वयितावच्छेकतामेकैकतात्पर्येण धवखदिरावित्यादिप्रयोगोपपत्तेः। नचैवमेकैकधवखदिरादितात्पर्येण धवौ खदिरावित्यादि प्रयोगापत्तिः तादृशवाक्यद्वयविषयकसमूहालम्बनजन्यसमूहालम्बनशाब्दबोधस्य नानाधर्मावच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतयाऽवगाहनसंभवादिति वाच्यम् यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकद्वित्वादिप्रकारता तत्रैवशुद्धपर्याप्तेः समवायस्य वा संसर्गतया भानात् धवौ खदिरावित्यादिनानावाक्यजन्यसमूहालम्बनशाब्दबोधे विशेष्यताभेदेनप्रकारताभेदेनच उ-

---

प्रकृत्यर्थतावच्छेदकवत्येव पर्याप्तिसम्बन्धेन स्वार्थद्वित्वाद्यनुभावकत्वेऽपि धवखदिरावित्यतो न धवद्वयस्य खदिरद्वयस्य च प्रतीतिरित्याहुः। यत्रधर्मद्वयादेस्तथात्वमिति तथात्वम् द्वित्वाद्युद्देश्यतावच्छेदकत्वम्। नन्वेवमपि विभुत्वस्याकाशेऽन्वयतात्पर्येणप्रयुक्ते विभ्वाकाशावित्यादिवाक्ये प्रामाण्यापत्तिः विभुत्वाकाशत्वयोर्द्वयोरेव द्वित्वोद्देश्यतावच्छेदकतया केवलपर्याप्त्या समवायेन वा द्वित्वस्य भानात्तस्यचाकाशे सत्त्वात् घटाकाशावित्यादिप्रत्ययादितिचेन्न धर्मद्वयादेरित्यस्य विरुद्धधर्मद्वयादेरित्यर्थकत्वात् एवञ्चाकाशत्वविभुत्वादेर्विरुद्धत्वाभावान्न केवला पर्याप्तिः समवायो वा संसर्गः किन्तूद्देश्यतावच्छेदकव्याप्यपर्याप्तिरेवेतिनापत्तिरिति। अथैवमपि कालाकाशा इत्यादेः प्रामाण्यापत्तिः कालत्वाकाशत्वयोर्विरु[illegible]द्धत्वात् तत्रकेवलपर्याप्त्या समवायेनवा त्रित्वस्यभानात् तस्यचाकाशादौ[illegible] दितिचेन्न यत्र विरुद्धधर्मद्वयस्योद्देश्यतावच्छेदकत्वं तत्र द्विवचनमेव द्वित्व[illegible] बोधे एवच साकाङ्क्षं यत्रच विरुद्धधर्मत्रयादिकमुद्देश्यतावच्छेदकं तत्रच [illegible] वचनमेव बहुत्वान्वयबोधे एवच साकाङ्क्षमित्युपगमात् इत्थञ्च काला[illegible] इत्यादावाकाङ्क्षाविरहादेव नापत्तिरित्यवधेयम्। तादृशवाक्यद्वयेत्यादि धवौ [illegible]दिराविति वाक्यद्वयविषयकंयत्समूहालम्बनज्ञानं शाब्दबोधकरणीभूतपदज्ञा[illegible]त्मकं तज्जन्येत्यर्थः। नानाधर्मावच्छिन्नेति अथैवमपि धवखदिरावित्यादौ [illegible] धवत्वावच्छिन्नविशेष्यताऽपरा खदिरत्वावच्छिन्नाविशेष्यता तत्र नानाधर्मा[illegible]च्छिन्नत्वं न कस्यामपि विषयतायामस्तीति प्रकृतग्रन्थोऽसङ्गतइतिचेन्न [illegible] विशिष्टप्रकारतैवहि नानाधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतापदेन विव[illegible] वैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितत्व स्वभिन्नधर्मावच्छिन्नविशे[illegible]तानिरूपितत्वोभयसम्बन्धेन तथाचधवखदिरावित्यादौ धवत्ववैशिष्ट्यस्य [illegible]दिरत्ववैशिष्ट्यस्यचोक्तोभयसम्बन्धेन द्वित्वनिष्ठप्रकारतायां सत्त्वान्नानुपपत्ति[illegible] स्पष्टीकृतञ्चैतदस्मन्मातामहानुजैस्तार्किकशिरोऽलङ्कारैः विश्वनाथशर्मभि[illegible]नाथीयविवृतौ॥ प्रकारताभेदेनचेति एकद्वित्वप्रकारत्वाभावादुक्तनियमाना[illegible]

देश्यतावच्छेदकधवत्वादिव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमेन एकैकधवखदि-रादितात्पर्येण तथाप्रयोगासम्भवात् धवखदिरावित्यादि समासोत्तरद्विवचनेन धव-त्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानमेव ज-न्यते तादृशवाक्यजन्यबोधस्य समूहालम्बनानात्मकतया विशेष्यताभेदेन प्रकारताभेदा भावात्। यथाहि समूहालम्बनानात्मके खङ्गीचैत्रः कुण्डलीत्याकारकनानाविशेष-णकैकविशेष्यकज्ञाने नानाप्रकारतानिरूपिता एकाविशेष्यता तथा तथाविधे धवख-दिरावित्याद्याकारके नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदेऽप्यभिन्नैव द्वित्वा दिप्रकारता। अन्यथासमूहालम्बनतस्तद्वैलक्षण्यानुपपत्तेः समासघटकधवखदिरा-दिपदानामेकवाक्यतानुपपत्तेश्च। तत्प्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव तदेकवाक्यतापदार्थत्वात्। नचैतादृशैकवाक्यताविरहेऽपि क्षतिविरहः तथासति समासस्यैवानुपपत्तेः। अयमेतिपुत्रोराज्ञः पुरुषोऽप-सार्यतामित्यादौ राजपुरुषपदादीनां समासवारणाय समर्थपदानामेवसमासानुशा-सनात् सामर्थ्यस्यच निरुक्तैकवाक्यतारूपत्वात्। जलपृथिव्योः स्नेहगन्धावित्या-दितोऽपि न जलेस्नेहः पृथिव्यांगन्धइत्याकारकसमूहालम्बनबोधः किंतु तद्वि-लक्षणो द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्वपृथिवीत्वाद्यवच्छिन्नविशेष्यतात्मक

---

तयेतिशेषः। एकत्रद्वयमितिज्ञाननिरूपितविशेष्यतायाः प्रकारताभेदेऽपि ऐक्य-स्येव द्वयोरेकमितिज्ञाननिरूपितप्रकारताया विशेष्यताभेदेऽप्यैक्यमित्याह यथाहीति। अन्यथेति द्वित्वादिप्रकारतायाभिन्नत्वोपगमे। प्रकारताद्वयनिरूपित-मुख्यविशेष्यताद्वयशालिज्ञानस्य समूहालम्बनत्वात् धवखदिरावित्यादौ विशेष्यता भेदेनप्रकारताभेदोपगमे समूहालम्बनत्वंस्यादितिभावः। धवखदिरावित्यादौ धवपदप्र-योज्यविषयत्व खदिरपदप्रयोज्यविषयत्वयोः स्वनिरूपितनिरूपिततया साक्षान्निरूपित त्वाभावादेकवाक्यत्वंनस्यादतआह परम्परयेति। निरुक्तैकवाक्यतारूपत्वादिति तथा चात्र राजपदप्रयोज्यविषयत्व पुरुषपदप्रयोज्यविषयत्वयोः साक्षात्परम्परयावा निरू-प्यनिरूपकभावविरहान्नैकवाक्यत्वम् अयमेति राज्ञः पुत्रइत्येकंहिवाक्यं पुरुषोऽ-पसार्यतामित्यपरम्॥ ननु जलपृथिव्योः स्नेहगन्धावित्यादौ जलेस्नेहः पृथिव्यांगन्ध इत्याकारकसमूहालम्बनएवबोधोङ्गीकार्योऽन्यस्यासंभवात् तथाच जलपदप्रयोज्यविषयत्व पृथिवीपदप्रयोज्यविषयत्वयोः गन्धपदप्रयोज्यविषयत्व स्नेहपदप्रयोज्यविषय-त्वयोश्च नपरंपरयाऽपि निरूप्यनिरूपकभावोऽतः सामर्थ्यविरहात् कथं जलपृथि-व्योरित्यत्र स्नेहगन्धावित्यत्रच समासइत्याशंकायामाह जलपृथिव्योरित्यादि द्वित्व[illegible]पृथिवीनिरूपिताधेयत्वप्रकारक द्वित्वविशिष्टस्नेहगन्धविशेष्य कबो-धोद[illegible]द्वित्वंधर्मितावच्छेदकंभवत्यतस्तथैवाह धर्मितावच्छेदकद्वित्वेति तथाचोक्त

प्रकारताद्वयनिरूपितं यद्धर्मितावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकं स्नेहत्व गन्धत्वाद्यवच्छिन्नविशेष्यताद्वयं तद्वानिति अतोनकुत्राप्येकवाक्यताभङ्गः। चैत्रो मैत्रश्चगच्छत इत्यादावाख्यातार्थद्वित्वादिप्रकारेण भासमाने चैत्रमैत्रोभयादौ गमनाश्रयत्वाद्यन्वयेन निरुक्तैकवाक्यता सम्भवेऽपि समासविधेर्विभाषाऽधिकारीयत्वादसमासः तत्र विशेष्यताभेदभिन्नद्वित्वनिष्ठप्रकारताद्वयप्रतियोगी समूहालम्बनात्मक बोध इतितुन सम्यक्। तथासत्युक्तयुक्त्या एकैकचैत्रमैत्रादितात्पर्येण तथाप्रयोगानुपपत्तेः॥ आख्यातोपस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्न एवान्वेतीति व्युत्पत्तिः। तेनोक्तप्रयोगदर्शनात् क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वानियमेऽपि घटद्वयादितात्पर्येण घटस्तिष्ठत इत्यादयो न प्रयोगाः॥ एकवचनान्तक्रियापदे च तादृशविशेष्यवाचकपदप्रयोगएव साधुः अतोघटास्तिष्ठतीत्यादयो न प्रयोगाः॥ अथैकघटादिव्यक्तेरेतद्दशवृत्तितायामत्र-

---

वाक्यान्न जलेस्नेहः पृथिव्यांगन्धइत्याकारकोबोध इतिभावः। तद्वानिति अत्र इतीत्यतः पूर्वबोधःपरामृश्य ते तथाच तद्वानबोध इत्यर्थो ननु तद्वानित्याकारकोबोध उक्तवाक्यजबोधे विशेष्यत्वप्रकारत्वयोरनवगाहनात् किन्तु जलपृथिव्युभयवर्तिनौ स्नेहगन्धावित्येवबोधाकारः तथाचात्रद्वित्वनिष्ठविषयताद्वारा निरूपितत्वं तत्तत्पदप्रयोज्यविषयतायामस्तीति नैकवाक्यत्वानुपपत्तिः॥ ननु चैत्रो मैत्रश्च गच्छतइत्यादावप्युक्तरीत्या चैत्रमैत्रपदयोः सामर्थ्यसत्त्वात् द्वन्द्वसमासेनैवभवितव्यंतथाच चैत्रमैत्रौ गच्छतइत्येवप्रयोगोभवितुं युक्तोऽतआह चैत्रोमैत्रश्चेति। विभाषाधिकारीयत्वादिति तथाच चैत्रमैत्रौगच्छत इत्यपि प्रयोगोभवत्येव। प्रकारताद्वयप्रतियोगीति प्रतियोगित्वमत्रनिरूपकत्वम्। उक्तयुक्त्येति यत्रैकमात्रवृत्तिधर्मस्य द्वित्वानुयोगितावच्छेदकत्वं तत्र तद्धर्मव्याप्य पर्याप्तेरेवभानमितिपूर्वोक्तयुक्त्येत्यर्थः। उभयादिरूपेत्यादि उभयादिरूपं यदनुयोगितावच्छेदकं तदवच्छिन्ने इत्यर्थः। अत्र असमानवचनकविशेष्यवाचकपदस्थल इतिपूरणीयम् तेन घटौस्तइत्यादावेकस्यैवघटत्वस्यानुयोगितावच्छेदकत्वेऽपि नद्विवचनानुपपत्तिः विशेष्यविशेषणवाचकपदयोः समानवचनत्वात् उभयादीत्यत्रादिपदात् उक्तरीत्या धर्मत्रयमनुयोगितावच्छेदकीकृत्यैवच त्रित्वान्वयोभवतीति लभ्यते तेनचैत्रोमैत्रश्चगच्छन्तीत्यस्यापिनापत्तिरिति। उक्तप्रयोगदर्शनादिति चैत्रोमैत्रश्चगच्छतीति प्रयोगदर्शनात्। घटास्तिष्ठतीत्यादयइति आख्यातार्थैकत्वाविवक्षायामपीतिशेषः। अथेति अत्रोच्यते इत्यनेन सम्बन्धः। द्वित्वेनोपस्थितयोरिति शाब्दबोधेद्वित्वप्रकारेणभासमानयोरित्यर्थः। बहुत्वेनोपस्थितास्वित्य-

घटौस्तः घटाःसन्तीति कथं न प्रयोगाः घटादौ घटत्वादिव्याप्तिविशिष्टपर्याप्तिसम्बन्धेन द्वित्वादेः स्वरूपादिसम्बन्धेनैतद्देशवृत्तित्वाश्रयत्वादेश्च सत्त्वात्। नचद्वित्वेनोपस्थितयोर्द्वयोरेवव्यक्त्योरेवं बहुत्वेनोपस्थितासु बहुषु व्यक्तिषु विधेयान्वयात् व्यक्त्यन्तरेष्वेतद्देशवृत्तित्वादिबाधान्न तादृशप्रयोग इतिवाच्यम् व्यक्त्यन्तरेऽयोग्यतया तादृशविधेयानवगाहिन एकघटे तदवगाहिनो बोधस्योत्पत्तौ बाधकाभावात् तथातात्पर्येण तथाप्रयोगस्य दुर्वारत्वात्। न च व्यासज्यवृत्तिधर्मोयत्रान्वयितावच्छेदकस्तत्र यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वय इतिव्युत्पत्तिस्तन्निर्वाहाय च तादृशधर्मावच्छिन्न इतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकंवक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न सम्भवतीति न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम्। योग्यताभ्रमेण आकाशावत्रस्त इत्यादि वाक्यात् द्वित्वादिनैकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात् तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनासम्भवात्। यत्तु द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धौ उद्देश्यतावच्छेदकव्यापकता नियमतो विधेयसंसर्गेभासते इतिव्युत्पत्तिः यत्र-

---

स्यापात्थमेवार्थः। तथातात्पर्येणतथाप्रयोगस्येति एकघटेएतद्देशवृत्तित्वान्वयतात्पर्येण अत्र घटौस्तः घटाःसन्तीति प्रयोगस्येत्यर्थः। तन्निर्वाहायेति एतद्व्युत्पत्तिनिर्वाहायेत्यर्थः। तादृशधर्मावच्छिन्नइति व्यासज्यवृत्तिधर्मावच्छिन्ने इत्यर्थः। बुद्धित्वमेवजन्यतावच्छेदकमिति इत्थञ्च उभयत्वाश्रययत्किञ्चिद्विशेष्यकपदार्थान्तरान्वयबुद्धित्वावच्छिन्नम्प्रति कारणाभावान्न तदुत्पत्तिसम्भव इतिभावः। द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धाविति एतदुक्त्याऽन्यत्रासतिबाधकएवतथानियम इति सूचितम्। यत्रचोद्देश्यतेति अयमाशयः उद्देश्यतावच्छेदकव्यापकत्वमुद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्। तत्र सामान्यतउद्देश्यतावच्छेदकव्यापकत्वस्याभिमतत्वे घटद्वयादिमद्देशे अत्र घटौस्तइत्यादि प्रयोगानुपपत्तिः एतद्देशवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धे उद्देश्यतावच्छेदकीभूतंयद्घटत्वं तद्व्यापकत्वाभावात् एवमुद्देश्यतावच्छेदकीभूतंयद्द्वित्वं तद्व्यापकत्वाभावाच्च देशान्तरस्थघटे घटत्वस्य यत्किञ्चिद्द्वित्वस्यचसत्त्वात् अतो द्वित्वादिधर्मितावच्छेदकीभूतधर्मावच्छिन्नवृत्तित्वविशिष्टद्वित्वादिरूपोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानमुपगन्तव्यम्। तथाच पीतशंखावत्रस्तइत्यादौ पीतशंखवृत्तिद्वित्वस्याप्रसिद्ध्या व्यापकत्वमप्रसिद्धमिति। खण्डशइति तथाच निरूप्यनिरूपकभावापन्नतत्तद्विषयतानिरूपितत्वस्य संसर्गतायांसत्त्वान्नानुपपत्तिः। विधेयसंसर्गेइति एतद्देशवृत्तित्वप्रतियोगिकस्वरूपादौ। द्वित्वसमाना-

चोद्देश्यतावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या तद्व्यापकत्वमप्रसिद्धम् तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकपदार्थानां विशेष्यविशेषणभावापन्नानां भानसम्भवान्न पीतशंखावत्रेत्यादौ तादृशव्युत्पत्तिभङ्गः । एवञ्चैकघटादि व्यक्तिमात्राधिकरणपरस्य अत्रघटौस्त इत्यादिवाक्यस्याप्रामाण्यं सुघटमेव उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकतायास्तादृशवाक्यप्रतिपाद्यायाः विधेयसंसर्गे बाधादिति तदपि तुच्छम् । अत्रघटौस्त इत्यादौ द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गे बाधाद्घटद्वयाधिकरणपरतादृशवाक्यस्याप्रामाण्यापत्तेः । तत्तद्द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानोपगमस्तु न सम्भवति तत्तद्द्वित्वत्वेनानुपस्थितेः। न च तदवच्छिन्नस्य संसर्गतया भाने तेनरूपेणोपस्थितिर्नापेक्ष्येतिवाच्यम् तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याकारकतात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थितेरपि शाब्दबोधात् प्रागावश्यकत्वात् प्रकृतसंसर्गेण एकपदार्थविशिष्टापरपदार्थबोधपरत्वज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागसंभवेन उपदर्शिततात्पर्यज्ञानस्यैव शाब्दधीहेतुत्वोपगमात् । एवं वाक्यार्थघटकसंसर्गस्याननुगमे घटौस्त इत्यादौ वाक्यभेदप्रसङ्गाच्च ॥ अत्रोच्यते व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृशधर्मवत्त्वमपि विधेयसंसर्गतया भासते इतिव्युत्पत्तिः व्याप्यत्वञ्च

---

धिकारणेति घटवृत्तीत्यादिः। देशान्तरवर्त्तिघटोऽपिद्वित्ववान् तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकमेव एतद्देशाधिकरणवृत्तित्वप्रतियोगिकस्वरूपमित्याह तदधिकरणावृत्तीति। अथास्तु तात्पर्यज्ञानस्यहेतुत्वंयथातथा परन्त्वत्र तत्तद्द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य संसर्गविधया विधेयप्रतियोगिकसंसर्गे भानोपगमे वाक्यभेदोदुर्निवार इत्यतआह एवमिति उद्देश्यविधेयभावभेदेनेव संसर्गताभेदेनापि वाक्यंभिद्यते संसर्गताचावच्छेदकभेदाद्भिद्यते तथाच तत्तद्द्वित्वस्य संसर्गतावच्छेदककोटौप्रवेशे तत्तद्द्वित्वनिष्ठावच्छेदकतया परम्परानिरूपितायाः संसर्गतायाअपि भेदाद्वाक्यभेदप्रसङ्गइतिभावः ॥ स्वव्याप्येति स्वपदंविधेयपरम् ।व्यतिरेकिविधेयस्थले इति केवलान्वयिविधेयस्थलेत्वनुपदंवक्ष्यति । नन्वेवमपि एकघटवद्देशे अत्रघटौस्तइतिप्रयोगापत्तितादवस्थ्यम् देशान्तरस्थेऽपिघटे एतद्देशवृत्तित्वव्याप्योद्देश्यतावच्छेदकवत्त्वस्य कालिकादिना

तद्वदन्यावृत्तित्वं व्यतिरेकिविधेयस्थले। तादृशधर्मवत्त्वञ्चोद्देश्यतावच्छेदकताघटकसम्ब-न्धेनबोध्यम्। अत्रघटौस्त इत्यादौ एतद्देशवर्त्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्ति त्वरूपव्याप्तिमच्च एतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव घटत्वव्याप्तपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसम्बन्धावच्छिन्नम् तद्वत्त्वञ्च घटादौ बाधितमिति न तादृशवाक्यस्य प्रामाण्यम्। अधिकरणस्य घटद्वयादिमत्त्वेच घटत्वादि-व्याप्यंद्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसम्बन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रमाण्यंनिर्वहति। केवलान्वयिविधेयकस्थलेच द्वित्वत्वाद्यवच्छिन्नव्याप-कत्वमेव संसर्गघटकं केवलान्वयिनि तादृशव्यापकतायाअक्षतत्वात् नतु तत्तद्द्वित्वत्वा-वच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः ॥ घटावानयति चैत्रइत्यादौचैत्र-कर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसम्बन्धेन कर्म-त्वादौ घटादेरन्वयो व्युत्पन्नः तेन चैत्रादौ एकघटादिव्यक्तिमात्रानयनकर्तृत्वे न ता दृशप्रयोगः द्वित्वादिमत्त्वञ्च प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसम्बन्धेन-बोध्यम् तेन चैत्रस्य पटादिसहितैकघटादिव्यक्त्यानयनकर्तृत्वेऽपिन तादृशप्रयोगः। एवमन्यत्राप्यूहनीयम् ॥ यत्रानेकवृत्तिधर्मोद्वित्वान्वयितावच्छेदकतयाभासते तत्रोभ-यादिनैवसमं पदार्थान्तरस्यान्वयः। यत्रैकमात्रवृत्तिधर्मस्तथा तत्रैकेनापि व्युत्पत्तिभेदा-

---

त्त्वादत आह तादृशधर्मवत्त्वञ्चेति स्वव्याप्योद्देश्यतावच्छेदकवत्त्वञ्च। व्याप्तिमच्चेति अस्य घटपटादिनिष्ठद्वित्वमेवेत्यनेनान्वयः। यत्रैकवृत्तिधर्मस्यद्वित्वाद्यनुयोगिता-वच्छेदकत्वं तत्र तद्धर्मव्याप्यपर्याप्तेरेवद्वित्वसम्बन्धत्वादाह घटत्वव्याप्तपर्याप्तीति यत्रघटौ प्रमेयावित्यादौ प्रमेयस्य तादात्म्येनविधेयत्वं तत्रतादात्म्येन प्रमेयवद्भे-दस्याप्रसिद्धत्वात् तद्वदन्यावृत्तित्वरूपव्याप्तेर्नप्रवेशसम्भवो व्यापकसामानाधिक-रण्यरूपव्याप्तेः प्रवेशसम्भवेऽपि सामानाधिकरण्यांशाप्रवेशेन तदपेक्षया-लाघवादाह केवलान्वयिसाध्यकस्थलेचेत्यादि। निरूपकतेति अधिकरणतेत्यर्थः। व्युत्पन्नइति तथाचोक्तवाक्यान्निरुक्ताधेयत्वसम्बन्धेन द्वित्ववद्घटविशिष्टकर्मता-कानयनानुकूलकृतिमानितिबोधः। एवमन्यत्राप्यूहनीयमिति घटावानयतिचैत्रइ-त्यादौ चैत्रकर्तृकानयनकर्मत्वव्याप्यबहुत्ववन्निष्ठनिरूपकताकाधेयत्वसम्बन्धेन कर्मत्वादौ घटादेरन्वयऊहनीयइत्यर्थः ॥ प्रकारान्तरमप्याह यत्राने-कवृत्तिधर्मइति। आकाशावत्रस्तइत्यादौ योग्यताभ्रमेणभ्रमात्मकशाब्दबोधआनु-भविकस्तत्रानेकवृत्तिधर्मस्योद्देश्यतावच्छेदकत्वाभावात्तत्संग्रहोनस्यादतआह यत्रै-कमात्रवृत्तीति। तथेति द्वित्वाद्यनुयोगितावच्छेदकः। तत्रैकेनापीति समंपदार्थान्त-रस्यान्वय इतिपूर्वेणसम्बन्धः। व्युत्पत्तिभेदावलम्बनादिति एतद्व्युत्पत्तिद्वयस्वी

वलम्बनात् कार्यकारणभाववैचित्र्याच्च सर्वसमञ्जसमित्यपिवदन्ति ॥ अथघटादिव्यक्तिभेदेनानयनकर्मता भिन्नेति प्रतिसंदधानस्य पुंसो घटावानयतीतिवाक्याच्छाब्दबोधानुपपत्तिः तस्य कर्मतात्वावच्छेदेन आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसम्भवात् तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वादितिचेन्न । उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव प्रतिबध्नाति नतु केवलंविशेष्येविशेषणमितिरीत्या जायमानमुभयत्वादिविशिष्टज्ञानम् अतोविशेषदर्शिनां तादृशवाक्याद्दोषायत्तमाधेयत्वांशे उभयत्वाद्यवच्छिन्ननिरूपितत्वावगाहिभ्रमात्मकज्ञानं नभवत्येव अपितु तदंशे तदनवगाहिप्रमात्मकज्ञानमिति उभयत्वावच्छिन्ननिरूपिताधेयत्वंचोभयादिवृत्तावेकस्मिन्धर्मे एवनतु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्वमित्यवधेयम् ॥ संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित्प्रतीयन्ते यथा सम्पन्नौ व्रीहियवावित्यादौ । एतत्तत्त्वंप्रागेवाभिहितम् ॥ विरुद्ध-

---

कारादित्यर्थः । कार्यकारणभाववैचित्र्याच्चेति द्वित्वविशिष्टघटविशेष्यकैतद्देशवृत्तित्वादिरूपेतरपदार्थान्वयबुद्धिम्प्रति अत्रेत्यादिसप्तम्यन्तपदसमभिव्याहृतद्विवचनान्तघटादिपदज्ञानत्वेनकारणताया एवं द्वित्वाद्यवच्छिन्नाकाशादिनिष्ठविशेष्यताकेतरपदार्थप्रकारकान्वयबुद्धित्वावच्छिन्नं प्रति अत्रेत्यादिपद समभिव्याहृतद्विवचनान्ताकाशादिपदज्ञानत्वेन कारणतायाश्चकल्पनान्नैकघटवति अत्रघटौस्त इतिप्रयोगापत्तिर्नवाऽऽकाशावत्रेत्यादिप्रयोगानुपपत्तिरितिभावः । तस्येति पुंसः । कर्मतात्वावच्छेदेनेत्यादि उभयस्यामेवकर्मतायां द्वित्वविशिष्टघटस्य आधेयतासम्बन्धेनासत्त्वादितिभावः । निश्चयसम्भवादिति एतन्निश्चयंप्रतिद्वित्वोपलक्षितघटप्रकारकस्यतत्तत्कर्मताधर्मिकस्ययोग्यताज्ञानस्याप्रतिबन्धकतया एतन्निश्चयस्ययोग्यताज्ञानस्य चयुगपत्सत्त्वेबाधकाभावादितिभावः। तस्येति निरुक्तनिश्चयस्य ।उभयत्वावच्छिन्नाभाववत्ताज्ञानमित्यादि अयमाशयः कर्मतात्वावच्छेदेनाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकद्वित्वविशिष्टघटाभाववत्ताज्ञानमत्र प्रतिबन्धकीभूतमवश्यंद्वित्वविशिष्टवैशिष्ट्यावगाहीतिमन्तव्यम् एकस्यामपि कर्मतायामाधेयत्वसम्बन्धेनघटवत्त्वे निश्चितेद्वित्वोपलक्षितघटाभाववत्ताज्ञानस्यानुदयात एवञ्च द्वित्वावच्छिन्ननिरूपकताकाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकएवद्वित्वविशिष्टघटाभावः प्रतिबन्धकज्ञाने विषयोवाच्योनतु केवलाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्तथाच निरुक्तविशिष्टवैशिष्ट्यावगाहिज्ञानस्य द्वित्वोपलक्षितघटप्रकारककर्मत्वविशेष्यकं ज्ञानं न प्रतिबध्यमेतज्ज्ञाने केवलायाएवाधेयतायाः संसर्गत्वात् कर्मत्वस्य द्वित्वोपलक्षितघटादिवृत्तित्वे कर्मत्वनिष्ठाधेयतानिरूपित निरूपकताया द्वित्वावच्छिन्नत्वाभावाद्विशिष्टाधेयतायाः सम्बन्धत्वासम्भवाद्धिति ॥ विशेषदर्शिनामिति व्यक्तिभेदेन कर्मताभिन्नेतिनिश्चयवताम् ॥

संख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति यथा शतमेकं द्वेशते त्रीणिशतानीत्यत्र शतत्वादौ एकत्वद्वित्वबहुत्वानामन्वयः अतएवच एकशतद्विशततात्पर्य्येण न शतानीति प्रयोगः तत्रप्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यत्वेऽपि प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वयएव बहुवचनस्य साकाङ्क्षत्वात् तत्रच योग्यताविरहात्। नचैकशतेऽपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वेऽपि बहुत्वान्वययोग्यताऽक्षतैवेतिवाच्यम् परस्परसमानाधिकरणद्वयाद्यवृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात् तादृशबहुत्वस्यचैकशतादिवृत्तिनानाशतत्वादौबाधात् । अथवा तत्रापि बहुत्वमेववबहुवचनार्थः परस्परसमानाधिकरणद्वयाद्यवृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः सम्बन्धः ॥ यत्तु द्वेशते त्रीणिशतानीत्यादौ संख्यैव शतादिशब्दार्थः नतु संख्येयम्" संख्येयस्यतदर्थत्वे, त्विंशत्याद्याः सदैकत्वेसर्वाःसंख्येयसंख्ययोः, इत्यनुशासनावरोधात् द्विवचनादिसाधुतानुपपत्तेः गवांशतानीत्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च । नचाभेदः षष्ठ्यर्थः तथासति ब्राह्मणादशेत्यत्र ब्राह्मणानांदशेत्यपिस्यात् । अस्माकश्चादशतः संख्याः संख्येयेवर्तन्ते अतः परं संख्याने संख्येये चेत्यनुशासनाद्दशादिशब्दानां शतादिशब्दवत्संख्यानार्थकत्वाभावाद्दशत्वादिसंख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसम्बन्धान्वयासम्भवेन नतथाप्रयोगइति। तदसत् गवांशतानीत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे गवांशतंदद्यादित्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वयायोग्यतया प्रामाण्यानुपपत्तिः गवांशतंशुक्लमित्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात्तदनुपपत्तिश्च । तस्माद्दशादिशब्दाइव शतादिशब्दाअपि संख्यावच्छिन्नवाचकाएव नतु धर्मिविशेषणतानापन्नसंख्यावाचकाः स्वार्थैकदेशेऽपि संख्यायां स्वप्रकृतिकविभक्त्यर्थसंख्यान्वयसाकाङ्क्षतयाऽन्यप्रकृतिकषष्ठ्यर्थसम्बन्धान्वयसाकाङ्क्षतयाच तेषां संख्यानार्थकताप्रवादः नतु दशादिशब्दानां तथात्वं दशादिब्राह्मणतात्पर्येण ब्राह्मणानांदशेत्यादिप्रयोगविरहादितितेषां संख्येयमात्रवाचिताप्रवाद इति त्विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः संख्यायां द्विबहुत्वेस्तः, इत्यनुशासनमप्युक्तार्थे तात्पर्य-

---

ननुपदार्थः पदार्थेनान्वेतीतिव्युत्पत्तिविरोध इत्यतआह एतत्तत्त्वमिति । प्रागेवेति वेदाः प्रमाणमित्यस्यविचारप्रसङ्गे ॥बहुवचनस्य नानाधर्मावच्छिन्ने शक्तिकल्पनातोलाघवादाह तत्रापिबहुत्वमेवेति केवलंबहुत्वमेवेत्यर्थः । आदशतःसंख्याइति संख्याइत्यस्य संख्यावाचकाःशब्दा इत्यर्थः । संख्येयइति संख्याविशिष्टे। स्वप्रकृतिकेति गवांशतंदद्यादित्यादौ षष्ठ्यर्थाधेयत्वस्य प्रथमार्थैकत्वस्य च शतत्वेऽ-

ग्राहकम् । एकद्विबहुशब्दोत्तरैकवचनद्विवचनबहुवचनानि च न संख्याबोधकानि उद्देश्यतावच्छेदकविधेययोरैक्येन एकत्वाद्यन्वये आकाङ्क्षाविरहादिति तदुत्तर प्रथमाविभक्तिः साधुतामात्राय| नित्यबहुवचनान्तदारादिशब्दपरं प्रथमाबहुवचनमपि क्वचिन्निरर्थकमेव यत्रैकव्यक्तिमात्रतात्पर्येण तादृशशब्दःप्रयुज्यते तत्रबहुत्वान्वये-योग्यताविरहात् ॥ यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वयइति तन्नशोभनम् प्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसम्बन्धेनैवानेकवृत्तिसंख्यान्वयस्य व्युत्पन्नतया तादृशसम्बन्धेन तथाविधबहुत्वान्वये योग्यताविरहात् अन्यथोदासीनघटपटादि साधारणबहुत्वस्याप्यन्वयसम्भवेन तद्गतगुणादिसाधारणबहुत्वानुधावनस्याकिञ्चित्करत्वात् । अथाजहत्स्वार्थलक्षणया गुणादिसाधारण धर्मावच्छिन्नएवप्रकृत्यर्थ-इतिचेत्तर्हि बहुत्वेनभासमानेषुगुणादिष्वपि पदार्थान्तरान्वयःस्यात् तथाचापोद्रव्याणि दाराअत्रगृहेसन्तीत्यादिवाक्यानामप्रमाणतापत्तिः गुणादिषुद्रव्याभेदगृहवृत्तितादेर्वाधात् मुख्यार्थमात्रपरतादृशशब्दानां बहुवचनान्ततानुपपत्तेश्चेति नकिञ्चिदेतत् । (५१) अवादिपदार्थएकत्वद्वित्वान्वययोग्यतासत्वेऽप्यसाधुत्वादेव तदुत्तरमेकवचनंनप्रयुज्यतेइतिध्येयम् ॥ आख्यातैकवचनस्य संख्यार्थकत्वे विवदन्ते निष्कर्षानुसारिणः। घटोऽस्तीत्यादौ सुवेकवचनादेव संख्याबोधसंभवात्। चैत्रेणदृष्टोघटइत्यादिस्थलानुरोधेन तस्य तद्बोधकताया आवश्यकत्वात्। नचैकवचनत्वेनानुगतेनैकत्वशक्तत्वात्तिङेकवचनस्याप्येकत्ववाचकत्वमक्षतमितिवाच्यम् । एकवचनत्वस्यैकत्वशक्ततावच्छेद-कतायाः प्रागेवनिराकृतत्वात् । अस्तुवा तेनरूपेण तिङेकवचनस्याप्येकत्वे शक्तिस्तथापि तज्जन्यैकत्वोपस्थितेः शाब्दबोधोपयोगित्वे मानाभावः नहि सामान्यत एकवचनज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुतासम्भवः तथासत्येकत्वेऽगृहीत-सुपदवृत्तिकस्य पुंसः सुपदप्रकृतिघटादिपदोपस्थाप्यघटादौ पटादिपदोत्तरामादि-पदोपस्थाप्यैकत्वाद्यन्वयबोधप्रसङ्गः किंतु सुपदत्वादिप्रकारकज्ञानजन्यतदुपस्थिति-त्वादिनैव तथासति घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानघ-

---

न्वयाद्द्रोनिष्ठैकशतत्वसंख्याश्रयकर्मक दानबोधादितिभावः । आख्यातैकवचनस्येति द्विवचनादेः संख्यार्थकत्वमग्रेवक्ष्यति । यद्यप्ययंविचार आख्यातार्थ-विचारप्रसङ्गे एव कर्तुमुचितस्तथापि आख्यातैकवचनस्यसंख्यार्थकत्वे तत्समभि-व्याहृतस्य प्रथमैकवचनस्य नैकत्वार्थकत्वस्यात्तस्यातथात्वेतु स्यादित्यभिप्रायेणात्र विचारः ॥ घटोऽस्ति पटंपश्येत्यादौ घटपदाद्घटोपस्थितौ सुपदादेकत्वस्यानुप-स्थितौ पटमित्यत्रामपदेनैकत्वस्योपस्थितौच एकोघटोऽस्तीतिशाब्दबोधः स्यादि-त्याह तथासत्येकत्वइति । तादृशापत्तेरिति एकोघटोऽस्तीति शाब्दापत्तेः । यत्त्विति

टितायां घटादावेकत्वान्वयबोधस्य सामग्र्यां सुपदत्वादिप्रकारकधीजन्योपस्थितेरन्तर्भावात्तादृशापत्तेरनवकाशात् । एवञ्च तिवादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वेमानाभावइति ॥ यत्तु तिवादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलं चैत्रेणपच्यते तण्डुल इत्यादौ कर्तृकर्मवाचकपदात् तृतीयाद्वितीययोरापत्तिः कर्तृकर्मगतसंख्याया अनभिधाने कर्तृकरणयोस्तृतीयेति कर्मणिद्वितीयेतिसूत्राभ्यां तयोरनुशासनात् । नैयायिकमते लकारस्यकर्तृकर्मावाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासंभवात् । नचकर्त्रादिगतसंख्यानभिधानमेव कथंकर्त्रादिवाचकपदोत्तरतृतीयादिनियामकम् चैत्रेणपच्यतेतण्डुल इत्यादिस्थलेऽपिलकारस्य चैत्रादिगतसंख्याभिधायकत्वात् एकत्वत्वादिना एकत्वादिसामान्यस्यैकवचनाद्यभिधेयत्वादितिवाच्यम् यतस्तद्गतसंख्यानभिधायकत्वंप्रकृते न तद्गतसंख्यानिष्ठवृत्त्यनिरूपकत्वमपितु तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वमेव तथाच कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादिसमभिव्याहृतकर्त्रादिवाचकपदात् तृतीयादयोभवन्तीत्यत्र तदनुशासनतात्पर्यम् । चैत्रेणपच्यतेतण्डुल इत्यादौ चैत्रादिविशेष्यकसंख्यान्वयबोधकत्वं नाख्यातस्य आख्यातार्थभावनाया यत्रान्वयस्तद्विशेष्यकसंख्यान्वयबोधस्यैवाख्यातेन जननात्तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्यएव । चैत्रःपचतितण्डुलमित्यादौ चैत्रादिःसाक्षादेव भावनाविशेष्यः । चैत्रेणपच्यतेतण्डुल इत्यादौतु परम्परया चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुल इत्याकारकबोधस्यैवतत्रोदयात् तस्मात्तिवादेरपि संख्याबोधकत्वमावश्यकमिति तन्न विचारसहम् तथाहि कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं तदा यादृशतिवादिज्ञानेन सहकार्यन्तरविरहात्तादृशबोधो नजनितस्तद्योगे तृतीयाद्यापत्तेः। यदिच तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यगादिसमभिव्याहृतात्मनेपदादिज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात्तत्स्वरूपयोग्यज्ञानाविषयतिवाद्याख्यातस्यैवाप्रसिद्धेः । अथ कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमेव तादृशबोधाननुकूलत्वम् चैत्रः पचतीत्यादिवाक्यघटकतिवादिविषयिता

---

तन्नविचारसहमित्यनेनसम्बन्धः । तदनभिधानस्येति कर्तृकर्मानभिधानस्येत्यर्थः। एकत्वादिसामान्यस्यैवेति तथाच चैत्रेणेतितृतीयार्थैकत्वसंख्यायाश्चैत्रान्वितायाअपि लकारवाच्यत्वात्कर्तृगतसंख्याभिधायकत्वमेवेतिभावः । भावनायाइति भावनाकृतिर्व्यापारोवा । तादृशबोधोपधायकेति तत्त्वञ्चाव्यवहितपूर्वत्वसम्बन्धेन

चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजनकतावच्छेदिका ताद्दशान्वयबुद्धित्वावच्छिन्नम्प्रति चैत्रादिपदसमभिव्याहृततिवादिज्ञानस्य हेतुत्वात् । चैत्रेणपच्यते तण्डुल इत्यादिवाक्यघटकतयादिपदविषयिताच नताद्दशी चैत्रादिपदसमभिव्याहृतताद्दशपदज्ञानत्वेन ताद्दशबुद्धित्वावच्छिन्नम्प्रत्यहेतुत्वात् । नचचैत्रः पच्यते इत्यादौ चैत्रविशेष्यकाख्यातार्थसंख्यान्वयबोधोत्पत्त्या चैत्रादिपदसमभिव्याहृततयादिपदज्ञानत्वेन ताद्दशान्वयबुद्धित्वावच्छिन्नहेतुताऽक्षतैवेति चैत्रेणपच्यते इत्यादिवाक्यघटकीभूततयादिपदविषयितापि ताद्दश्येवेतिवाच्यम् चैत्रेणपच्यते चैत्रःपच्यते इत्यादिवाक्यात् चैत्रादिविशेष्यकस्य भावनायाः संख्यायाश्चान्वयबोधस्यानुदयात् तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशवादिविकरणोत्तर तत्तदाख्यातपदज्ञानत्वेन हेतुत्वात् चैत्रेणपच्यते तण्डुल इत्यादि वाक्यघटकतयादीनां ताद्दशसमभिव्याहारादिशून्यतया तद्विषयिताया अताद्दशत्वात् । चैत्रः पक्ष्यते इत्यादितः तण्डुलः पक्ष्यते इत्यादितश्च चैत्रतण्डुलादिविशेष्यकसंख्यान्वयबोधोत्पत्त्या चैत्रः पक्ष्यते तण्डुल इत्यत्र उभयविशेष्यकसंख्यान्वयबोधौपयिकसमभिव्याहार ज्ञानविषयितायाः त इत्यादौसत्त्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न ताद्दशवाक्यं व्युत्पन्नाः प्रयुञ्जते । कर्तरिसाक्षात् कर्मणिचदर्शितपरम्परया युगपद्भावनाविशेषणकान्वयबोधजनकताया आख्यातस्याव्युत्पन्नतया ताद्दशवाक्यादुभयविशेषणकान्वयबोधासम्भवात् । नचाकाङ्क्षायोग्यतादिसत्त्वात् कथंन ताद्दशान्वयबोध इति वाच्यम् [illegible]तया एकविधान्वयबोधेऽन्यविधान्वयबोधसामग्र्यास्तद्घटक तात्पर्यज्ञानस्यवा प्रतिबन्धकत्वोपगमात् । न च चैत्रेणतण्डुलः पक्ष्यते चैत्रस्तण्डुलं पक्ष्यते इत्यादिवाक्यद्वयविषयकसमूहालम्बनदशायामपि उभयविधान्वयबाधानुपपत्तिरितिवाच्यम् ताद्दशैकविधान्वयबोधे ताद्दशान्यविधान्वयबोधपरत्वेनागृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुतया चैत्रः पक्ष्यते तण्डुल इत्यादिवाक्यात्ताद्दशद्विविधान्वयबोधवारणस्य दर्शितवाक्यात्तदुपपादनस्य च शक्यत्वात् । न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे चैत्रेणस्वंद्दश्यते चैत्रः स्वंपश्यतीत्यादौ तृतीयाद्विती[illegible]योरनुपपत्तिः कर्त्रादिविशेष्यकसंख्याप्रकारकान्वयबोधौपयिकाकाङ्क्षाज्ञानीयविषयित्वनिरूपकत्वस्य तत्राख्याते सत्त्वादिति

---

बोधविशिष्टत्वम् । अन्वयबुद्धित्वावच्छिन्नजनकतेति अन्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतेत्यर्थः । वाक्यघटकतयादिपदेत्यादि वाक्यघटकंयत्त आदिपदं तन्निरूपितविषयितेत्यर्थः । परम्परयेति स्वजन्यफलवत्त्वसम्बन्धेन । तदनभिधा-

वाच्यम् कर्त्रादिपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्न प्रयोजकविषयित्वानिरूकस्तत्पदोत्तरं तृतीयाविभक्तिरित्येवं नियमोपगमेन प्रथमस्थले चैत्रपरस्वपदाख्यातपदयोः द्वितीयेच तत्परचैत्राख्यातपदयोः समभिव्याहार स्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदस्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यनवकाशादिति चेन्न अनभिहितइत्यधिकारे कर्तृकरणयोस्तृतीयेत्याद्यनुशासनस्य किंप्रयोजनमितिवक्तव्यम् चैत्रःपचति तण्डुलः पच्यते इत्यादौ चैत्रतण्डुलपदाभ्यां द्वितीयातृतीययोरप्रयोग इति चेत् तत्किंमणिमन्त्रादिन्यायेन तादृशानुशासनस्य तथाविधप्रयोगविरोधिता येनतदभावस्तत्प्रयुक्तः स्यात् न चैवं सम्भवति पचतिपच्यते इत्यादि क्रियायोगे कर्तृकर्मवाचकपदानन्तर तृतीयाद्वितीय योरसाधुत्वस्य तत्कर्तृत्वतत्कर्मत्वादिबोधौपयिकाङ्क्षादिरहितत्वादिरूपस्य प्रतिपत्तिः प्रयोजनं तस्येति चेत्तर्हि उक्तनियमपरतयाऽपि न ततस्तल्लाभः प्रथमान्तचैत्रतण्डुलादिपदतत्तदाख्यातपदयोः समभिव्याहारस्यैव चैत्रतण्डुलादिविशेष्यकतत्तदाख्यातार्थसंख्यान्वयबोधप्रयोजकतया चैत्रेणपचति तण्डुलंपच्यते इत्यादिवाक्यघटक चैत्रतण्डुलादिपदतिबादिपदयोःसमभिव्याहारस्यातथात्वेन तद्घटक तृतीयाद्वितीययोः साधुत्वस्योक्तनियमाव्यवच्छेद्यत्वात् ॥ तस्मान्मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानमेव तृतीयाद्वितीयादि नियामकं शिरोमणिभिरत्रैव निर्भरोविहितः ।। लादीनां तदनभिधायकत्वंचन तदवाचकत्वं तन्निष्ठवृत्त्यनिरूपकत्वम्वा आख्यातसामान्यस्याप्याख्यातत्वेन तेत्वादिना वा कर्तृत्वादिनिष्ठशक्तिलक्षणानिरूपकत्वात्। कर्तृत्वानभिधायकाख्यातस्यैवाप्रसिद्धेः तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वमेवतत् चैत्रेणपच्यतेतण्डुलइत्यादावाख्यातस्य कर्तृत्वादिवाचकत्वेऽपि तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यं तत्राक्षतमेव चैत्रादिपदोत्तरतृतीययैव कर्तृत्वबोधनसम्भवात् तत्र तादृशाकाङ्क्षाया अकल्पनादित्यपिन। चैत्रेण पक्ष्यते इत्यादौतृतीयानुपपत्तेः पक्ष्यते चैत्रइत्यादितश्चैत्रादौ पाककृतेः केवलात्पक्ष्यते इत्यादितश्च मुख्यविशेष्यतया तस्यबोधात् तादृशाख्यात धात्वोरानुपूर्वीविशेषाकाङ्क्षायाः कृतिबोधौपयिकत्वात् नचसमभिव्याहाररूपाकाङ्क्षैवविवक्षणीया प्रकृते प्रकृतिप्रत्यययोरानुपूर्वीरूपाकाङ्क्षा नतुसमभिव्याहार इति नोक्तानुपपत्तिरितिवाच्यम् तथासति चैत्रेणपचतीत्यादावपि तृतीयायाः साधुतापत्तेः

---

धायकत्वमिति कर्तृत्वकर्मत्वानभिधायकत्वम्। तदवाचकत्वमिति तदशक्तत्वम्। अविवक्षितकर्तृत्वकर्मत्वार्थकाख्यातस्यैव भावाख्यातत्वेन परिभाषितत्वात् तत्र-

तादृश चैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात् चैत्रेण विजेष्यतेमैत्रइत्यादौ तृतीयानुपपत्तेश्च विजेष्यतेमत्रइत्यादितोमैत्रकृतिबोधात्तादृशाख्यात मैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात् किंतु तत्तात्पर्यशून्यत्वमेव। तथा च चैत्रेणपक्ष्यते इत्यादावाख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीया असाधुरेव। तथा च चैत्रेणपचतीत्यादावाख्यातस्यार्थाविवक्षायां तृतीयायाः साधुत्वेऽपिपरस्मैपदस्यासाधुत्वान्नप्रयोगः। परस्मैपदस्यासाधुत्वञ्च धात्वर्थविशेष्यस्य प्रत्ययेनाविवक्षणे भावकर्मणोरितिसूत्रेणात्मनपदनियमात् आख्यातार्थविवक्षायां नचैत्रेणपचते इत्यादि प्रयोगः शवादिविकरणस्यासाधुत्वात् कर्तृत्वतात्पर्यकसार्वधातुकयोगएवतत्साधुत्वात् कर्तृत्वकर्मत्वोभयतात्पर्येण मैत्रः पक्ष्यते तण्डुल इत्यादयस्तु न प्रयोगाः। तदेकतर बोधेऽन्यपरत्वेनागृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात्। चैत्रेण पक्ष्यतेतण्डुलइत्यादौ कर्तृत्वादावाख्यातस्यतात्पर्यग्रहे कर्मत्वाद्यन्वयबोधोऽपिनभवत्येव॥ अथ पक्वानि भुंक्ते चैत्र ओदनः पक्त्वाभुज्यते इत्यादौ कृता क्रमेण कर्तृत्व कर्मत्वाद्यनभिधानात् चैत्रपदौदनपदाद्युत्तरं तृतीयाद्वितीये कथंन स्याताम् नचकृताऽनभिधानेऽपि आख्यातेनतदभिधानान्नानभिहितत्वम् समभिव्याहृतपदाभिहितत्व सामान्याभावस्यैवानभिहितपदेनविवक्षणात् समभिव्याहृतेतिकरणाच्च चैत्रेणगम्यतेग्रामस्तंमैत्रोगच्छतीत्यादौ न तृतीयाद्वितीययोरनुपपत्तिः गच्छतिगम्यते इत्यादावाख्यातस्य तत्तत्पदासमभिव्याहृतत्वादितिवाच्यम् तथासति भुञ्जानेनचैत्रेणपच्यते भोक्तव्यमोदनंपचतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः कृता कर्तृत्वकर्मत्वयोरभिधानात्। कृतातत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधानेऽपि पाककर्तृत्वंतत्कर्मत्वं चानभिहितमेवेति चेत्तर्हि प्रकृतेऽपि तदनभिहितमेव। नच प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति तदुक्तम् प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते इति शक्तिः कर्मत्वादिकमिति वाच्यम् तथापि चैत्रेणदृश्यमानंघटंमैत्रः

---

कर्तृवाचकपदात् तृतीयायाइष्टत्वमेव पचतीतिप्रयोगस्तु तत्रनयुक्तः भावेआत्मनेपदस्य यकश्च विधानादित्याह तथाचचैत्रेणपचतीत्यादावाख्यातस्येति। धात्वर्थविशेष्यस्येति कर्तृत्वकर्मत्वादिकं यद्धात्वर्थस्यविशेष्यं तस्याविवक्षणे भावप्रत्ययस्थले इतियावत्। विकरणस्येति विकरणत्वञ्चप्रकृतिप्रत्ययमध्यपातित्वम्। तत्साधुत्वादिति शवादिविकरणस्यसाधुत्वात्। प्रधानशक्त्यभिधानइत्यादि प्रधानक्रियानिरूपितस्यकर्तृत्वस्य कर्मत्वस्यवाऽभिधाने गौणक्रियानिरूपितमपि कर्तृत्वंकर्मत्वञ्चाभिहितवद्भवति इत्थमेवच प्रधानक्रियानिरूपितस्यकर्तृत्वस्यकर्मत्वस्यवाऽनभिधाने गौणक्रियानिरूपितंकर्तृत्वंकर्मत्वञ्चानभिहितवद्भवतीत्युपेयमितिभावः।

पश्यतीत्यादौ ज्ञानभेदेनविषयताभेदाभावात् चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषयत्वरूपकर्मतायाः कृताभिधानात् द्वितीयानुपपत्तिरितिचेन्न तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृत्वकर्मत्वाद्यविवक्षायाएव तदनभिधानपदार्थत्वात् तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षया द्वितीयादिविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात् शेषमाख्यातार्थविचारे विवेचयिष्यते इत्यलमत्राधिक्येन ॥ आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकं चैत्रोमैत्रश्चगच्छतः चैत्रो मैत्रोदेवदत्तश्च गच्छन्तीत्यादौ 'चन्द्रेकलङ्कः सुजनेदरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला। मुखाप्रसादः सधनेषु सर्वदा यशोविधातुः कथयन्तिखण्डितम् '॥ इत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात्। नचतत्र सुवेकवचनस्यैवद्वित्वबहुत्वादौ लक्षणाऽस्त्वितिवाच्यम् आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात् अन्यथा चैत्रोमैत्रश्चगच्छतइत्यादाविव छन्दसिलक्षणयैव स्वादिना द्वित्वान्वयबोधन सम्भवात्। औजसादिरूपादेशिस्मृतिद्वारा द्वित्वादिबोधनिर्वाहाय छन्दसि सुपां सुलुगित्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्यवैयर्थ्यात्। चैत्रादिपदोत्तरैकवचनस्य द्वित्वादि लाक्षणिकत्वे तदप्रकृत्यर्थमैत्रादिसाधारणद्वित्वादिबोधस्योक्त व्युत्पत्तिविरोधेनानुपपत्तेश्च ॥ आख्यातार्थसंख्यान्वयबोधेच समानविशेष्यकतदर्थ-

---

आनुशासनिकातिरिक्तार्थेइति तदुक्तं वार्तिककृता। 'सुपांकर्मादयोऽप्यर्थाः संख्याश्चैवतथातिङाम्। प्रसिद्धोनियमस्तत्र नियमः प्रकृतेषुवा,। इति अस्यार्थस्तु सुपांतिङाञ्चकर्मादयः कर्मत्वादयोवार्थाः यद्यदनुशासनेनबोधिताः तत्तदनुशासनं नियमपर्यवसायि नियमश्च द्वितीयैव कर्मत्वम् एक वचनमेव एकत्वं द्विवचनमेव द्वित्वं बहुवचनमेव बहुत्वंबोधयतीत्याद्याकारकः। नन्वेव मपिद्वितीयादिः कर्मत्वादिकमपहाय घटादिकमपिबोधयेत् तावताऽप्युक्तनियमभङ्गाभावोऽत: पक्षान्तरमाह नियमः प्रकृतेपुवेति प्रकृतेषु प्राकरणिकेषु एकत्वकर्मत्वाद्यर्थेषु नियमइत्यर्थः सचनियमः द्वितीया कर्मत्वमेव बोधयतीत्याद्याकारकः इत्थञ्च नानुशासनिकातिरिक्तार्थेलक्षणेति ॥ ननुप्रकृतेरिव विभक्तेरपि आनुशासनिकातिरिक्तार्थेलक्षणायामबाधकाभावः अतएव जानातीत्यादौ तिङआश्रयत्वे लक्षणोपपद्यते नचास्तुतिङेलाक्षणिकत्वं सुब्विभक्तेस्तु आनुशासनिकातिरिक्तार्थेलक्षणा न क्वापिकल्प्तेतिवाच्यम् हन्तिपुण्यंपुराकृतमित्यादौ पुण्यप्रतियोगिकनाशानुकूलव्यापारविषयकबोधान्यथानुपपत्त्याऽऽनुशासनिकातिरिक्तेऽपि प्रतियोगित्वाद्यर्थे द्वितीयादेर्लक्षणाया आवश्यकत्वात् सुपांकर्मादयोप्यर्थाइतिवार्तिकन्तु नसार्वत्रिकं किन्तुप्रायिकमतोदोषान्तरमाह चैत्रादिपदोत्तरैकवचनस्येत्यादिना। उक्तव्युत्पत्तीति प्रकृत्यर्थान्वितस्वार्थबोधकत्वंप्रत्ययानामितिव्युत्पत्तीत्यर्थः ॥ ननु

भावनान्वयबुद्धिसामग्री अपेक्षिता भावनाया बाधादिग्रहकाले तात्पर्यशून्यकालेवा उक्तस्थले द्वित्वान्वयाबोधात्। भावनायाअविशेष्येधात्वर्थादौ संख्यान्वयावोधाच्च। तादृशसामग्र्याः संख्यान्वयबुद्धित्वावच्छिन्नम्प्रति स्वातन्त्र्येण न हेतुता तदकल्पनेऽपि आख्यातजन्यसंख्योपस्थितियोग्यताज्ञानविशेषादिघटितसामग्र्या भावनानवगाहिसंख्यान्वयबोधस्य कदाप्यजननात्। संख्यान्वयबोधसारणभावनान्वयबोधत्वावच्छिन्नहेतूनामपि तादृशसामग्रीघटकत्वेनापत्त्यभावात्। नच तादृशकारणानां भावनान्वयबुद्धित्वं संख्यान्वयबुद्धित्वम्वा जन्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहः। संख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वात् द्वितीयस्य जन्यतावच्छेदकत्वासम्भवादिति दिक्॥ अथ गुणादिवाचकपदोत्तरद्विवचनवहुवचनयोः कथं द्वित्वादिबोधकता संख्यायागुणत्वेन गुणादौबाधात्। नच तत्रस्वाश्रयसमवेतत्वादिसम्बन्धेन द्रव्यगतं द्वित्वादिकमेवभासते इति वाच्यम्। एकव्यक्तावपि तादृशसम्बन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्पर्येणापि द्विवचनाद्यापत्तिरितिचेत्। अपेक्षाबुद्धिविषयत्वमेवत दुत्तरद्विवचनादिना बोध्यते तच्चैकमात्रधर्मस्य प्रकृत्यर्थतावच्छेदकत्वस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वेति अन्यत्र शुद्धपर्याप्तिसम्बन्धेनेति न द्वन्द्वादिस्थलोक्तदोष इति विदुषां परामर्शः॥

॥ इति व्युत्पत्तिवादे प्रथमा॥

---

समानविशेष्यकाख्यातार्थान्वयबुद्धिसामग्र्याः आख्यातार्थसंख्यान्वयबुद्धित्वापेक्षया लाघवात् संख्यान्वयबुद्धित्वमेव कार्यतावच्छेदकमस्तु इत्याशंकायामाह तादृशसामग्र्याइति॥निरुक्तसामग्र्याः सामान्यतः संख्यान्वयबुद्धित्वावच्छिन्नम्प्रति कारणत्वाकल्पनेऽपि चैत्रः पचतीत्यादौ भावनायाश्चैत्रादावनन्वये आख्यातार्थसंख्यान्वयबुद्धिर्नसम्भवतीत्याह तदकल्पनेऽपीति। नन्वाख्यातार्थसंख्याप्रकारकः शाब्दबोधोभावनानवगाही कुतोनजन्यते इत्याशंकायाम् आख्यातार्थसंख्यान्वयबोधेच समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षितेत्यनुपदोक्तमेव स्मारयति संख्यान्वयेत्यादिना। असम्भवादिति तथाच न सामान्यतः संख्यान्वयबुद्धौ आख्यातार्थभावनान्वयबुद्धिसामग्र्याअपेक्षितत्वमितिभावः।तादृशसम्बन्धेनेति स्वाश्रयसमवेतत्वसम्बन्धेन। परिसमाप्ततयेति वृत्तितयेत्यर्थः। एकमात्रधर्मस्येति अत्र एकमात्रवृत्तिधर्मस्येतिपाठस्तु नयुक्तः तथासति रूपत्वरसत्वादेरेकमात्रवृत्तित्वाभावेन एकरूपादिमत्यपि अत्ररूपेवर्त्तते इति प्रयोगस्य प्रामाण्यापत्तेः प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेर्भानासम्भवादिति। अन्यत्रेति

कर्मणि द्वितीयेत्यनुशासनात्कर्मत्वं द्वितीयार्थः। तत्र कर्मपदस्य धर्ममात्रपरत्वात् सप्तम्या वाचकतार्थकत्वात्। कर्मणश्च न तथात्वं कर्मणि नामार्थस्य ग्रामादेरभेदान्वयसंभवेपि धात्वर्थगमनादिनातदन्वयासंभवात् गौरवाच्च। कर्मत्वं च क्रियाजन्यफलशालित्वम्। तत्रच क्रिया धातुतएव लभ्यते जन्यजनकभावस्य च विनैव

---

अनेकधर्मस्य प्रकृत्यर्थतावच्छेदकत्वस्थले इत्यर्थः ॥ अनेकधर्मस्यप्रकृत्यर्थतावच्छेदकत्वस्थलेऽपि यदि प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेवसंसर्गत्वं स्यात्तदा रूपरसावित्यादौ रूपत्वरसत्वव्याप्यंद्वित्वद्वयमेव प्रतीयेत उक्तरीत्यातुनेत्याह इतिनद्वन्द्वादिस्थलेति। परामर्श इति विचार इत्यर्थः ॥ साम्बशिवार्पणमस्तु

इति सर्वतन्त्रस्वतन्त्रमैथिलकुलभूषणधर्मदत्तापरनामकश्रीबच्चाझाशर्मचरण
सेवनलब्धविद्यमैथिलझोपनामक श्रीलक्ष्मीनाथशर्मविरचित:
प्रथमाप्रकाशः समाप्त:



कर्मत्वंद्वितीयार्थइति द्वितीयायामुख्योऽर्थः कर्मार्थकत्वपक्षे कर्मत्वस्य शक्यतावच्छेदकतया द्वितीयार्थत्वेऽपि न तस्यमुख्यार्थत्वम् वृत्तिग्रहमुख्यविशेष्यत्वस्य मुख्यार्थत्वरूपत्वात् नच द्वितीयायाः संख्यायामेवशक्तिः कर्मत्वेतु लक्षणेत्येव कुतोनोपेयत इतिवाच्यम् शक्तिग्राहकव्याकरणस्मृतेरुभयत्रतुल्यतया एकत्रशक्तिरपरत्र लक्षणेत्यत्र विनिगमकाभावादुभयत्र शक्तेरावश्यकत्वादिति ॥ तत्रेति उक्तसूत्रे। धर्ममात्रपरत्वादिति भावप्रधाननिर्देशेन कर्मत्वात्मकधर्ममात्रपरत्वादित्यर्थः। मात्रपदेन कर्मत्वाश्रयस्य शक्यत्वव्युदासः। वाचकतार्थकत्वादिति तथाच कर्मणिद्वितीयेत्यस्य कर्मत्ववाचिकाद्वितीयेत्यर्थः। नतथात्वमिति नद्वितीयार्थत्वम्। स्वनिष्ठकर्मतानिरूपकत्वसम्बन्धेनान्वयसम्भवादाह गौरवाच्चेति गौरवं ज्ञापयितुं कर्मत्वस्वरूपमाह कर्मत्वञ्चेत्यादि तथाच फलानां संयोगविभागादीनामनन्तत्वात्तेषु शक्यतावच्छेदकत्वकल्पनापेक्षया कर्मतात्वेऽखण्डोपाधौ शक्यतावच्छेदकत्वे लाघवमितिभावः। नन्विदंकर्मेदंकर्मेत्यनुगतव्यवहारात् विषयत्वादिवत् कर्मत्वमप्यखण्डोपाधिरेवेति कर्मत्वस्य शक्यतावच्छेदकत्वे किञ्चिदपिन गौरवमिति चेदेवमपि तण्डुलंपचति द्विदलंपचतीत्यादौ सर्वत्रैव तण्डुलद्विदलादिषु शक्यतायाः कर्मत्वे शक्यतावच्छेदकतायाश्च कल्पनापेक्षया एकस्मिन् कर्मत्वे शक्यत्वस्य एकस्मिन्नेव च कर्मतात्वे शक्यतावच्छेदकत्वस्य च कल्पने लाघवं सुव्यक्तमेवेति। फलशालित्वमिति फलत्वञ्च धात्वर्थव्यापारे

पदार्थत्वं संसर्गमर्यादया भानं संभवतीति फलमात्रं कर्मप्रत्ययार्थः। नच संयोगविभागरूपफलमपि धातुलभ्यमेव गमित्यजिप्रभृतीनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वादिति वाच्यम् व्यापारमात्रस्य धात्वर्थत्वात्। फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव ग्रामं गच्छतीत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते नतु विपरीतम्। ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दतइत्यादयो न प्रयोगाः द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात्। स्पन्दिप्रभृत्युपस्थापिते तस्मिन् द्वितीयादिना फलान्वयबोधजननासंभवात्। न हि येन केनचिदुपस्थापितयोरेवार्थयोः परस्परमन्वयः प्रतीयते तथा सति घटकर्मत्वादिपदोपस्थापितयोरपि घटकर्मत्वाद्योः परस्परमन्वयबोधप्रसंगात् कृञादिसमानार्थकधातूपस्थाप्ययत्ने विषयितार्थकद्वितीयार्थान्वयसंभवेन घटं करोतीतिवद् घटं यतते इत्यादिप्रयोगप्रसङ्गाच्च अपि तु ययोर्यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोधः आकाङ्क्षा च द्वितीयादेर्गम्यादिना कृञादिना च कल्प्यते न तु तत्समानार्थकेनापि स्पन्दियतिप्रभृतिनेति। नचाकाङ्क्षात्र समभिव्याहारः स च गम्यादिनेव स्पन्दादिनापि समान एवेति वाच्यम् यतो द्वितीयादेर्गम्यादि समभि-

---

विशेषणतया भासमानत्वेसति धात्वर्थजन्यत्वम् तत्र मन्दंगच्छति द्रुतंगच्छतीत्यादौ धात्वर्थव्यापारे तादात्म्येन मन्दादेरन्वयान्मन्दादावतिप्रसङ्गस्तद्वारणाय विशेष्यम् गम्यादि धात्वर्थसंयोगानुकूलव्यापारजन्यत्वस्य पूर्वदेशविभागादौसत्वादतिव्याप्तिस्तद्वारणाय सत्यन्तम्। फलमात्रमिति अनन्यलभ्यःशब्दार्थ इतिन्यायादितिभावः। कर्मप्रत्ययार्थः द्वितीयाद्यर्थः। ननुफलस्यापि द्वितीयार्थत्वेऽनन्यलभ्यइतिनियमो भज्येतैवेत्याशंकते नचेति ननुव्यापारमात्रं यदिधात्वर्थस्तदा ग्रामं त्यजति ग्रामंगच्छतीत्यादावनुभूयमानप्रतीतिवैलक्षण्यस्यानुपपत्तिरित्यतआह फलविशेषान्वयबोधेचेति। हेतुतयेति नन्वत्र ग्रामः कर्मत्वंगमनमित्यादिनिराकाङ्क्षवाक्याद्विशिष्टान्वयबोधवारणाय ग्रामंगच्छतीत्याद्यानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानत्वेन ग्रामनिष्ठसंयोगजनकव्यापारानुकूलकृतिमानितिबोधंप्रति कारणत्वस्यावश्यवाच्यतया ततएव ग्रामंगच्छतीत्यादौ ग्रामनिष्ठविभागादिविषयकान्वयबोधवारणसम्भवात् फलविशेषान्वयबुद्धिंप्रति धातुविशेषजन्योपस्थितित्वेन हेतुताकल्पनमप्रामाणिकमिति वाच्यम् ग्रामंत्यजतीत्याकाङ्क्षाज्ञानसत्वे त्यजधातुतोव्यापारस्यानुपस्थितौ गमधातुतस्तदुपस्थितौच ग्रामकर्मकविभागादिविषयकशाब्दबोधापत्तेर्वारणायोक्तहेतुत्वस्यावश्यकत्वादिति। नतुविपरीतमिति ग्रामंगच्छतीत्यत्र ग्रामनिष्ठविभागजनकत्वं ग्रामंत्यजतीत्यत्र ग्रामनिष्ठ-

व्याहारस्यैव फलवलादन्वयबोधौपयिकत्वमुपगम्यते नतु स्पन्दिप्रभृतिसमभिव्याहारस्येति न तस्याकाङ्क्षात्वमन्वयबोधौपयिकसमभिव्याहारस्यैव तथात्वात्। अतएव समानार्थकत्वेऽपि गम्यादेरिव न स्पन्द्यादेः सकर्मकत्वव्यवहारः फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात्। अथ धातोर्व्यापारमात्रवाचित्वे त्यजति गच्छति त्यागो गमनमित्यादिवाक्यादविलक्षणबोधप्रसङ्गः नहि शक्तिभ्रमाद्यजन्मनोस्तादृशवाक्यजन्यबोधयोर्वैलक्षण्यं कश्चिदभ्युपैति तथासति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्ना अपि प्रयुञ्जीरन्। नच तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियते इति विलक्षणबोधोपपत्तिरितिवाच्यम् लक्षणया विलक्षणबोधजननेऽपि शक्त्याऽविलक्षणबोधजननसंभवेन दर्शितातिप्रसङ्गस्य दुर्वारत्वात्। नच गम्यादिश-

---

संयोगजनकत्वमिति विपरीतं नप्रतीयते इतिभावः। ययोरिति पदयोरितिशेषः। तथात्वादिति आकाङ्क्षात्वात्। तन्नियामकत्वादिति सकर्मकत्वव्यवहारनियामकत्वादित्यर्थः नचघटं जानातीत्यादौ ज्ञादेः सकर्मकत्वंनस्यात् विषयित्वादेरखण्डोपाधित्वेन नित्यतया उपदर्शितफलत्वाभावादितिवाच्यम् धात्वर्थव्यापारे विशेषणतया भासमानत्वेसति व्यापारत्वभिन्नत्वेच सति धात्वर्थत्वमेव हि फलत्वम् तच्च विषयत्वादावप्यक्षतमिति ॥ अथफलविशेषान्वयबोधे धातुविशेषजन्योपस्थितेः कारणत्वं परिकल्प्य व्यापारमात्रस्यधात्वर्थत्वेऽपि ग्रामंगच्छति ग्रामंत्यजतीत्यादिभ्यः प्रतीतिवैलक्षण्योपपादनेऽपि यत्र गच्छतित्यजति त्यागः गमनमित्यादिकमेव वाक्यंप्रयुक्तं न तु द्वितीयान्तादिकमपि तत्र तेभ्योवाक्येभ्यः सर्वानुभवसिद्धं प्रतीतिवैलक्षण्यं नोपपद्यते इत्याशंकते अथेति। अविलक्षणबोधप्रसङ्ग इति वैलक्षण्यप्रयोजकस्य समभिव्याहृतद्वितीयादेरभावादिति। तथासतीति अविलक्षणबोधोपगमेसति। अविलक्षणबोधप्रसङ्गइत्यस्य विलक्षणबोधाभावप्रसङ्गइत्यर्थमवगत्य शंकते नच तत्रफलविशेषेति अविलक्षणबोधप्रसङ्गमुद्भावयिता स्वाभिप्रायमाविःकरोति लक्षणयेत्यादिना। ननु व्यापारमात्रस्य धात्वर्थत्वेऽपि केवलव्यापारबोधस्याकिञ्चित्करतया फलविशिष्टव्यापारविषयकपदबोधोविशिष्टशक्तिवादिभिरिवास्माभिरपितुल्योऽभ्युपेयः केवलमस्माभिः गच्छति गमनमित्यादिवाक्यजन्यबोधे ग्रामं ग्रामस्येत्यादिफलविशेषबोधकद्वितीयाद्यन्तसमभिव्याहारज्ञानं तत्तत्पदजन्योपस्थितिश्चापेक्ष्यते भवद्भिः पुनर्न तदपेक्ष्यते तथाच गम्यादिपदजन्यबोधे फलविशेषोपस्थापकद्वितीयादिसमभिव्याहारज्ञानघटितसामग्र्याः प्रयोजिकाया अभावे केवलाद्गच्छतिगमनादिपदाच्छाब्दबोधस्यैवानुदयान्नावैलक्षण्यमित्याशंकते नचगम्यादीति। पर्यायतांविपर्यस्यतइति त्यजिगमी समानार्थकावितिभ्रमवतइत्यर्थः। यद्यपि व्यापारमात्रे शक्त्यादिनामेकार्थवाचकत्वरूपपर्यायत्वं वास्तविकमेवेति नतद्भ्रमत्व सम्भ-

क्तिज्ञानजन्यार्थोपस्थित्या फलाविषयकान्वयबोधस्य कुत्राप्यजननात् तादृशोपस्थिति-घटितसामग्रीशरीरे फलविशेषबोधकसामग्री निवेश्यते तथाच त्यागगमनादिपदयोः शक्त्या नाविलक्षणबोधजनकतेति वाच्यम् त्यजिगम्योरेकार्थवाचकतारूपपर्यायितां विपर्यस्यतो गमनादिपदात् त्यागादिपदजन्यबोधसमानाकारकबोधस्य सर्वानुभवसिद्धतया गम्यादिशक्तिज्ञानात्फलाविषयकबोधस्यापि प्रसिद्धेः फलविशेषबोधकसामग्र्या गम्यादिशक्तिज्ञानजन्यबोधनियामकताया वक्तुमशक्यत्वात् । तथाचाभ्रान्तस्यापि भवन्मते ततोऽविलक्षणबोधसंभवेन एकविधबोधतात्पर्येण व्युत्पन्नानां तादृशप्रयोगप्रसङ्गो दुर्वार इति चेत् मैवम् कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिप्रयोगः । एवं त्यजिगमिप्रभृतिसमभिव्याहृतकर्मप्रत्ययस्य फलविशेषएव नियतं तादृशं तात्पर्यमिति न विभागादितात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगः । तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकं तथासति शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटेऽपि घटादिपदप्रयोगापत्तिः । नापि शक्त्या बोधकत्वं तथा निरूढलक्षणयापि स्वारसिकपदप्रयोगात् । शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेर्विभागादिरूपफलविशेषितस्पन्दादिबोधकत्वाभावनियमोऽसिद्ध एवेति तात्पर्यभ्रमसहकृतशक्तिभ्रमया तादृशबोधजननेऽपि न क्षतिः । विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न संभवतीत्येव नियमः स च तात्पर्यभ्रमेणैव निर्वहति विभागाद्यर्थे पूर्वपूर्वेषामनादितात्पर्यभ्रमवतो वक्तुः स्वकीयतात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगो यत्र तत्र श्रोतुस्तात्पर्यभ्रमासंभवेऽपि वक्तृतात्पर्यानादित्वभ्रम एव प्रयोगसंपादनद्वारा तदर्थशाब्दबोधप्रयोजक इति न तादृशनियमक्षतिरिति प्राचीनपथपरिष्कार

---

वति तथापि विशिष्टशक्तिवादिभिः स्वमतसिद्धोक्तविपर्यासवासनयेदमुक्तमिति । ततइति त्यागगमनादिपदादित्यर्थः तादृशप्रयोगप्रसङ्गः गमनादितात्पर्येण त्यागादिपदप्रयोगप्रसङ्गः । घटादिपदप्रयोगापत्तिरिति घटादिपदप्रयोगस्य स्वारसिकत्वापत्तिः । तथेति स्वारसिकप्रयोगनियामकम् । तादृशबोधजननेऽपीति गमनादिपदात्त्यागादिविषयकबोधजननेऽपीत्यर्थः । नक्षतिरिति न व्युत्पन्नानां गमनादितात्पर्येण त्यागादिपदप्रयोगापत्तिरितिभावः । विनालक्षणाग्रहमित्यादि तथाच शक्तिभ्रमेण लक्षणयैव वा गमिप्रभृतिभ्यस्तादृशशाब्दबोधोभवतीतिभावः । नतादृशनियमक्षतिरिति विनालक्षणाग्रहमित्यनुपदोक्तनियमस्य न भङ्गः

प्रकारः ॥ नव्यास्तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वं नातोगम्यादिकर्मत्वस्य पूर्वदेशादौ प्रसङ्गः। नवा स्पन्देः सकर्मकत्वं तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्। एवं च धातोरेव फलविशेषलाभात्, फलान्वयिनी वृत्तिरेव द्वितीयार्थः। नच कर्मणि द्वितीयेत्यनुशासनविरोधः तस्य कर्मणि फलनिष्ठाधेयत्वान्वयिनि प्रकृतितात्पर्ये तदुत्तरं द्वितीयेत्यर्थकत्वात्। न चैवं तस्य शक्तिग्राहकत्वानुपपत्तिः अनादितात्पर्यग्रहसंपादकत्वेन परंपरया शक्तिग्राहकत्वसंभवात्। न च फलस्य पदार्थैकदेशतया तत्र द्वितीयार्थवृत्तेरन्वयासंभवः व्युत्पत्तिवैचित्र्येण प्रकृते एकदेशान्वयस्वीकारात्।

---

उक्तस्थलेश्रोतुस्तात्पर्यभ्रमस्यासत्त्वेऽपि वक्तुस्तात्पर्यभ्रमस्याप्युक्तशाब्दबोधप्रयोजकतया तस्य सत्त्वादित्यर्थः। स्पन्दइति स्पन्दः क्रिया व्यापारइत्यनर्थान्तरम्। तद्धात्वर्थतावच्छेदकेत्यादि अत्र तद्धात्वर्थानधिकरणत्वेसतीत्यपि विशेषणीयम् तेन चैत्रादौ गम्धात्वर्थतावच्छेदकसंयोगवत्त्वेऽपि चैत्रोगच्छतीत्यादौचैत्रादौन गमनकर्मत्वापत्तिः। अत्र धात्वर्थजन्यफलशालित्वमित्यनभिधाय धात्वर्थतावच्छेदकफलशालित्वमितियदुक्तं तत्फलमाह नातोगम्यादीति पूर्वदेशविभागस्य गम्धात्वर्थव्यापारजन्यत्वेऽपि तस्य धात्वर्थतावच्छेदकत्वाभावादितिभावः। फलपदञ्चक्रियाजन्यफलपरम तेन धात्वर्थतावच्छेदकीभूतं व्यापारत्वमादाय न व्यापारे कर्मत्वापत्तिरिपूर्वमेवोक्तम। एवञ्चेति संयोगादिरूप फलावच्छिन्नस्पन्दस्य धात्वर्थत्वेचेत्यर्थः। वृत्तिरेवेति आधेयत्वमेवेत्यर्थः। इत्थञ्च ग्रामंगच्छतीत्यतो ग्रामवृत्तिसंयोगानुकूलव्यापारानुकूलकृतिमानितिबोधः। व्यापारश्चात्र चरणादेः क्रियारूपः। अनुशासनविरोधइति एतदनुशासनं हि कर्मत्ववाचिका द्वितीयेत्यर्थकम् कर्मत्वञ्चानुपदोक्तफलरूपं नतुवृत्तित्वमितिभावः। आधेयत्वान्वयिनीति सप्तम्याविषयत्वमर्थः तस्य तात्पर्यपदार्थभूतायामिच्छायामन्वयः तथाच फलनिष्ठाधेयत्वान्वयिविषयकप्रकृतितात्पर्येसति प्रकृत्युत्तरद्वितीयास्यादित्यर्थः। इत्यर्थकत्वादिति तथाच तन्मते सूत्रे कर्मणीत्यत्र न वाचकत्वार्थासप्तमीतिभावः। नन्वेतावता द्वितीयार्थानिरूपणादुक्तसूत्रस्य शक्तिग्राहकत्वानुपपत्तिरित्याशंकते। नचैवमिति। अनादितात्पर्येति आधेयत्वाथ इतिशेषः। परम्परयेति अयमाशयः द्वितीया आधेयत्वशक्ता असतिबाधके स्वघटितवाक्यघटकपदान्तरार्थाधेयत्वान्वितस्वार्थतात्पर्यविषयप्रकृतिकत्वादित्यनुमानेनैव शक्तिग्रहः 'अत्र प्रथमं स्वपदंद्वितीयापरम स्वार्थेत्यत्रस्वपदंप्रकृतिपरम्, सूत्रंतूक्तहेतुघटकतथाविधतात्पर्यग्रहसम्पादकत्वेनोपयुज्यते इति। द्वितीयार्थवृत्तेरिति द्वितीयार्थरूपाधेयत्वस्येत्यर्थः। व्युत्पत्तिवैचित्र्येणेति पदार्थः

अथ गमनं न स्पन्द इत्यादितो धात्वर्थतावच्छेदके भेदान्वयबोधसंभवेन एतादृशप्रयोगस्य वारणाय फलविशेष्यकान्वयबोधे तद्विशेष्यकवृत्तिज्ञानजन्यफलोपस्थितित्वेन हेतुत्वकल्पनस्यावश्यकत्वात् तादृशकारणबाधेन धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयासंभवः। न च यादृशपदसमभिव्याहारज्ञानात् फलविशेष्यकस्पन्दभेदान्वयबोधः प्रसिद्धः तादृशपदसमभिव्याहारज्ञानतादृशपदज्ञानजन्यफलाद्युपस्थितिघटितसामग्र्यास्तादृशान्वयबोधोत्पादप्रयोजिकाया असत्त्वेनोक्तस्थले तदापत्त्यसंभव इति वाच्यम् यत्र गमनादिपदादेव लक्षणया शक्तिभ्रमेण वा स्वातन्त्र्येण फलोपस्थितिस्तत्र फलविशेष्यकस्पन्दभेदान्वयबोधप्रसिद्ध्या गमनपदसमभिव्याहारतज्जन्यफलोपस्थितिघटितसामग्र्याः फलविशेष्यकस्पन्दत्वाद्यवच्छिन्नभेदान्वयबोधप्रयोजकताया आवश्यकत्वात् तद्बलेन शक्तिप्रमाधीनबोधेऽपि फलांशे स्पन्दभेदादिभानप्रसङ्गः। एवं च फलव्यापारयोः पृथक्शक्तिस्वीकारपक्षेऽपि न निस्तारः। तथात्वेऽपि हि गमनं न स्पन्द इत्यादौ फले शक्तिप्रमया स्पन्दभेदान्वयबोधसंभवेन तादृशप्रयोगापत्तेर्दुर्वारत्वादिति चेन्न। तद्विशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्यव्यवहितोत्तरत्वनिवेशनमावश्यकम्। विशिष्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेरेकैकविधबोधे नानाहेतुताया व्यवस्थापितत्वात् एकपदाधीनतद्विषयकशाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचारस्य प्रकारान्तरेण वारणासंभवात्। एवं च धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयबोधेऽपि क्षतिविरहात् तत्र तादृशकारणस्य व्यभिचाराप्रसक्तेरिति वदन्ति।

---

पदार्थेनान्वेतीतिनियमे पदार्थैकदेशे धात्वर्थतावच्छेदकातिरिक्तत्वविशेषणप्रक्षेपेणेत्यर्थः। शंकते अथेति गमनन्नाम संयोगानुकूलव्यापारस्तत्र स्पन्दभेदासत्वेऽपितद्घटकसंयोगे तदन्वये बाधकाभावो व्युत्पत्तिवैचित्र्यस्येदानीमेवाङ्गीकृतत्वादिति प्रश्नकृतामाशयः। तादृशकारणबाधेनेति संयोगविशेष्यकवृत्तिज्ञानजन्यसंयोगोपस्थितिरूपकारणबाधेनेत्यर्थः। यादृशपदसमभिव्याहारज्ञानादिति संयोगो न स्पन्द इत्यादिसमभिव्याहारज्ञानादित्यर्थः। यत्रेति गमनंनस्पन्दइत्यादिविति शेषः। तथात्वेऽपीति पृथक्शक्तिस्वीकारेऽपीत्यर्थः। तद्विशेष्यकेत्यादि अयमाशयः प्रकारतासम्बन्धेनशाब्दबोधे प्रकारतासम्बन्धेनोपस्थितेः कारणत्वोपगमे घटपदघटिताकाङ्क्षास्थले घटपदाद्घटस्यानुपस्थितौ कलशादिपदात्तदुपस्थितौ च शाब्दबोधापत्तिवारणाय घटत्वावच्छिन्नविषयताशालिशाब्दबोध प्रति घटत्वावच्छिन्नविशेष्यकघटपदवृत्तिज्ञानजन्यघटोपस्थितित्वेन कारणत्वस्योक्तावपि कलशादिपदजन्य

अत्रेदं चिन्त्यते। व्यापारमात्रस्य धात्वर्थतायामपि सर्वानुपपत्तीनामुद्धृतत्वात् फलावच्छिन्नव्यापारस्य गुरुतया तथात्वमनुचितम्। अथ फले द्वितीयादेः शक्त्यन्तर कल्पनामपेक्ष्य धातोर्विशिष्टशक्तिकल्पनमेवोचितम्। नच भवन्मतेऽप्याधेयत्वे द्वितीयादेः शक्त्यन्तरस्य कल्पनीयत्वात्तदंशे साम्यमिति वाच्यम् ग्राममध्यास्ते ग्राममधिशेते ग्राममधितिष्ठतीत्यादौ द्वितीयायाः सर्वमतएवाधेयत्वबोधकतया द्वितीयादेः फलवाचकत्वमतेऽपि आधेयत्ववाचकताया आवश्यकत्वात्। न च द्वितीयायाः संयोगादिवाचकत्वमते आधेयत्वे तस्या लक्षणैव न तु शक्तिरिति वाच्यम् आधेयतात्वस्याखण्डतया संयोगत्वादिसमशरीरत्वात् संयोगत्वाद्यवच्छिन्ने तदवच्छिन्ने

---

घटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्थले उक्तघटपदजन्योपस्थितेरभावाद्व्यभिचारःस्यादतो घटत्वावच्छिन्नधर्मिकघटपदवृत्तिज्ञानजन्यघटोपस्थित्यव्यवहितोत्तर शाब्दबोधंप्रति घटत्वावच्छिन्नधर्मिकघटपदवृत्तिज्ञानजन्यघटोपस्थितित्वेन कारणत्वम् एवमेव तत्रतत्रापि तथाच फलविशिष्टव्यापारे धातोः शक्तिपक्षे संयोगत्वावच्छिन्नधर्मिकगम्धातुवृत्तिज्ञानस्य शाब्दधीहेतुत्वमेव नास्ति लक्षणास्थले तत्सत्वेऽपि संयोगत्वावच्छिन्नधर्मिकगमधातुवृत्तिज्ञानजन्यसंयोगोपस्थित्यव्यवहितोत्तरशाब्दबोधत्वावच्छिन्नंप्रत्येव तत् कारणत्वम्वाच्यम् तच्च प्रकृते संयोगधर्मिक वृत्तित्वान्वयबोधस्य न बाधकं प्रकृतान्वयबोधस्य संयोगत्वावच्छिन्नधर्मिकवृत्ति ज्ञानाजन्यत्वेनोक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वात् खण्डशः शक्तिरितिपक्षेतु संयोगत्वावच्छिन्नधर्मिकस्य गम्धातुवृत्तिज्ञानस्य तज्जन्योपस्थितेश्च सत्वात्तत्पक्षे ग्रामंगच्छतीत्येतद्वाक्यजन्यबोधस्योक्तकार्यतावच्छेदकाक्रान्तत्वेऽपि नक्षतिरिति। अथैवमपि गमनंनस्पन्द इत्यस्य फलव्यापारयोः पृथक्शक्तिपक्षे न वारणम् गम्धातोः शक्तिप्रमयोपस्थिते संयोगे स्पन्दभेदस्य सत्वादितिवाच्यम् विभक्त्यर्थान्यनिष्ठ प्रकारतानिरूपितधातुप्रयोज्यफलनिष्ठविशेष्यताकशाब्दबोधे धातुजन्यव्यापारोपस्थितित्वेन प्रतिबन्धकत्वस्य कल्पनात् व्यापारविशेष्यकफलविशेषणकबोध तात्पर्यज्ञाननिष्ठस्यप्रतिबन्धकत्वस्य वक्ष्यमाणत्वाच्चेति। उचितमिति एकस्याःशक्तेः कल्पने तज्जन्योपस्थितेरेकस्या एव कारणत्वेन सामग्रीप्रतिबन्धकतायां लाघवादितिभावः। तदंशेसाम्यमिति तथाचविशिष्टशक्तिकल्पने नवीनानां गौरवमिति भावः। आवश्यकत्वादिति तथाचाधेयत्वे संयोगादौ च द्वितीयायाः धातोर्व्यापारे च शक्तिकल्पनापेक्षया धातोर्विशिष्टशक्तिकल्पनमेवोचितमितिभावः। तदवच्छिन्ने आधेयतात्वावच्छिन्ने। ननु द्वितीयायाआधेयत्वे शक्त्युपगमे गम्यादिधातोः फलावच्छिन्नव्यापारत्वरूपगुरुधर्मावच्छिन्ने शक्तिः तस्याः फले शक्त्युपगमेच व्यापारत्वरूपलघुधर्मावच्छिन्ने धातोः शक्तिः परिच्छि-

वा शक्तिः कल्प्यते इत्यत्र विनिगमकासंभवात् । अस्तु वा ममाप्याधेयत्वे लक्षणैव शक्तिस्तु संख्यायामेव । यदि च द्वितीयादेः फलबोधकतामते फलेपि तस्या लक्षणैव न तु शक्तिः शक्तिस्तु संख्यायामेव संयोगविभागादिरूपप्रत्येकफलापेक्षया संख्यायां तत्प्रयोगप्राचुर्यस्य विनिगमकत्वादित्युच्यते तथापि तन्मते धातुजन्यशुद्धव्यापारोपस्थितेः शाब्दबोधहेतुताकल्पनमधिकं द्वितीयाद्यसमभिव्याहारस्थलानुरोधेन फलविशेषावच्छिन्नव्यापारे धातोर्लक्षणया भवतामप्यावश्यकत्वाद्धातुजन्यतादृशव्यापारोपस्थितिहेतुताया उभयसिद्धत्वात् । यदि च स्पन्दतइत्यादित इव शक्तिभ्रमाद् गच्छतीत्यादितोऽपि शुद्धव्यापारबोध आनुभविक इति मन्यते तथापि तन्मते शाब्दबुद्धौ द्वितीयादिजन्यफलोपस्थितेः कारणतायाः कल्पनाधिक्यं तज्जन्याधेयत्वोपस्थितिहेतुत्वकल्पनस्य चोक्तस्थलानुरोधेन उभयमतएवावश्यकत्वादिति चेत् अस्तु तन्मते तादृशकारणताया आधिक्यम् । नव्यमते तु ग्रामं गच्छतीत्यादिवाक्यज्ञानघटितशाब्दसामग्र्याः समानविषयकानुमित्यादिप्रतिबन्धकतायां फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन धातुजन्योपस्थितेर्निवेशनीयतया तस्यास्तादृशविशेष्यताशालित्वेन व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमनाविरहात् सामग्रीप्रतिबन्धकताधिक्यमवच्छेदकगौरवं च । प्राचीनमते द्वितीयाजन्यफलोपस्थितेः सामग्र्यन्तर्निवेशस्तु नव्यमतसिद्धतज्जन्याधेयत्वोपस्थितिनिवेशस्थलीय इति । नव्यमते तादृशस्थले शाब्द-

---

द्यते इति लाघवगौरवयोर्व्यक्तत्वमेवेत्यतआह अस्तुवेति । संख्यायामेवेति तथा च संयोगादौ द्वितीयाया व्यापारेच धातोः शक्तिकल्पनापेक्षया धातोर्विशिष्टशक्तिकल्पनमेवोचितमितिभावः । फलेऽपि तस्या लक्षणैवेति एतेन नवीनमते आधेयतात्वरूपाखण्डधर्मावच्छिन्ने शक्तिः प्राचाम्मतेतु संयोगत्वविभागत्वादितत्तन्नानाधर्मावच्छिन्ने नानाशक्तिरतोगौरवमित्यपि निरस्तम् । संख्यायामेवेति तथाच विशिष्टशक्तिकल्पनापेक्षया व्यापारमात्रे धातोः शक्तिकल्पनायां लाघवं फलस्य लक्षणया द्वितीययैव लाभादितिभावः ।तन्मतेइति प्राचीनमते । अधिकत्वमेवस्पष्टयति द्वितीयाद्यसमभिव्याहारेति । भवतामपि प्राचामपि । उभयसिद्धत्वादिति उभयवादिसिद्धत्वात् तथाच ग्रामंगच्छतीत्यादौ केवलव्यापारोपस्थितेः कारणत्वं प्राचाम्मतेऽधिकम् । उक्तस्थलानुरोधेनेति ग्राममध्यास्ते इत्यादिस्थलानुरोधेनेत्यर्थः । अवच्छेदकगौरवञ्चेति प्रतिबन्धकतावच्छेदकगौरवञ्चेत्यर्थः। तज्जन्येति द्वितीयाजन्येत्यर्थः । नव्यमतेतादृशस्थलइति नव्यमते आधेयत्वस्य प्रकारविधया भानात् तत्संसर्गस्यापि बोधविषयत्वं प्राचीनमतेच संयोगादौ

बोधस्याधिकविषयतया तात्पर्यज्ञानादिकमप्यधिकविषयकमेव शाब्दधीहेतुर्भवि-ष्यति प्रतिबन्धकसामग्र्यामप्यन्तर्भविष्यतीतिगौरवम् । अथ फलस्य द्वितीयार्थत्वे भूमिंगच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगादेर्जनकतासंबन्धावच्छिन्ना-भाव एव नञर्थो वाच्यः; स च वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छे-दकतया अप्रसिद्धः । नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठोऽभाव एव तथेति नानुपपत्तिः। न च भूमिकर्मकगमनकर्त्रादौ महीरुहकर्मकगमनकर्तृत्वाद्यभावः प्रतीयते इति वाच्यम् कर्तृवाचकपदासमभिव्याहारस्थले तदसंभवात् । न च तत्रा प्याख्यातार्थान्वयबोधानुरोधेन कर्तृवाचकपदाध्याहारस्यावश्यकतया अध्याहृतप-दोपस्थाप्यकर्तर्येव तादृशाभावो नञा बोधयिष्यते इति वाच्यम् आख्यातार्थविशे-ष्यकस्याप्यन्वयबोधस्य संभवेनाध्याहारस्यानावश्यकत्वाद् भूमेर्गमनं न महीरुहस्ये-त्यादौ द्वितीयासमानार्थकषष्ठ्यर्थाभावबोधकताया आवश्यकत्वाच्च । न हि तत्रा-प्याश्रयतासंबन्धावच्छिन्नप्रतियोगिताकगमनाभावः प्रतीयते इति सम्यक् । अनुयो-ग्यनुपस्थिते नञोऽनुयोगिविनिर्मोकेनाभावबोधकताया अव्युत्पन्नत्वादिति चेन्न । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे दोषः कः । अथ जनकतादि-संबन्धावच्छिन्नप्रतियोगिताकसंयोगाद्यभावस्यातिरिक्तस्य कल्पने गौरवमिति चेन्न । तादृशाभावस्य संयोगजनकत्वाद्यभावसमनियतत्वेन तत्स्वरूपत्वात्तस्य चो-भयवादिसिद्धत्वात् अतिरिक्तप्रतियोगिताकल्पने गौरवमिति चेदस्त्वेतद् गौरवम् ।

---

ग्रामादेराधेयत्वसम्बन्धेनान्वयादाधेयत्वस्य संसर्गो नभासते इतिभावः । यद्यपि शाब्दबोधस्याधिकपदार्थावगाहित्वे एव प्रतिबध्यप्रतिबन्धकभावलाघवं राज्ञः पुरुष इत्यादौ संसर्गतानिराकरणप्रस्तावे प्रदर्शितमिहापि तथैवयुक्तं तथापीदा-नींतदनाकलय्येदमुक्तम् तदाकलय्यतु वस्तुतस्तुशाब्दबुद्धेरधिकविषयत्वे इत्या-दिना नवीनमते एवलाघवम्प्रदर्शयिष्यति । नञर्थोवाच्यइति तथाच जनकत्व-सम्बन्धेन भूमिसंयोगविशिष्टो जनकत्वसम्बन्धावच्छिन्नप्रतिबन्धावच्छिन्नप्रति-योगिताकमहीरुहसंयोगाभावविशिष्टो यो व्यापारस्तदनुकूलकृतिमानिति प्राचा-म्मतेऽन्वयबोधः । नव्यमते च भूमिवृत्तिर्योमहीरुहवृत्तित्वाभाववान्संयोगस्तदनु-कूलव्यापारानुकूलकृतिमानिति बोधः । आधेयत्वस्येत्यादि स्वरूपसम्बन्धावच्छिन्न प्रतियोगिताकाधेयत्वाभावः संयोगादिनिष्ठएवनञर्थइत्यर्थः । अव्युत्पन्नत्वादिति एतेन भूमिंगच्छति न महीरुहमित्यादौ भूमिकर्मकगमनानुकूलाकृतिः महीरुहकर्मकगमनानुकूलकृत्यभावइति समूहालम्बनबोधाङ्गीकारोऽपिनिरस्तः । नन्वस्त्वभावयोरैक्यं किंतु एकत्र संयोगत्वावच्छिन्ना ऽपरत्र संयोगजनकतात्वावच्छिन्ना प्रतियोगितेत्यवश्य वाच्यंतथाच व्यक्तमेवगौरवमित्यत आह अतिरिक्तप्रतियोगितेति । नन्वेवं गुणोन-

उपदर्शितबहुविधलाघवेन द्वित्वगौरवस्याकिंचित्करत्वात् । अथ फलस्य द्वितीयार्थत्वे वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि द्रव्यं गच्छति न गुणमित्यादौ गुणादिनिष्ठस्य संयोगादिरूपफलस्याप्रसिद्ध्या नञर्थान्वयबोधानुपपत्तिरिति चेन्न । तत्राधेयतासंबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावस्यैव द्वितीयार्थे फले नञा बोधनोपगमात् । गुणो न गुणं गच्छतीत्यादिवाक्यस्य उभयमत एवाप्रमाणत्वात् । अस्तु वा तत्राभावस्य द्विधाभानोपगमेन गुणाभाववत्फलानुकूलस्पन्दाश्रयत्वाभाववान् गुण इत्याकारक एवान्वयबोधः॥ परेतु वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे नव्यमतेऽपि द्रव्यं गच्छति नाभावमित्यादौ गतिविरहस्तथाहि समवायसंबन्धावच्छिन्नाधेयतैव द्वितीयार्थो वाच्यः । अन्यथा कालिकादिसंबन्धावच्छिन्नग्रामादिवृत्तिसंयोगादिकमादायातिप्रसङ्गात् । तथा चाभावादिनिरूपिततथाविधाधेयत्वाप्रसिद्ध्या तदभावबोधासंभवः। निरूपितत्वसंबन्धस्य च वृत्त्यनियामकतया समवायसंबन्धावच्छिन्नाधेयतायां तत्संबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावबोधो न संभवत्येवेत्याहुरिति । अत्रोच्यते ।

---

गुणंगच्छतीत्यादावप्याधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभाववत्संयोगानुकूलव्यापारवान् गुण इत्येवान्वयबुद्धिरुपेतव्या साच नप्रमा उक्तव्यापाराश्रयत्वस्य गुणेऽभावादतआह गुणोनगुणमिति नचात्र गुणपदोत्तरमेवं द्रव्यंगच्छति नाभावमित्यादावभावादिपदोत्तरं कथंद्वितीया कर्मबोधकपदोत्तरद्वितीयायाएव साधुत्वस्य कर्मणिद्वितीयेतिसूत्रेण बोधितत्वादिति वाच्यम् कर्मत्वान्वयितया तात्पर्यविषयार्थकप्रातिपदिकाद्द्वितीयायाः साधुतायामेव सूत्रतात्पर्यात् तत्र कर्मत्वान्वयित्वं साक्षान्नञर्थद्वारा वा इत्थञ्च यत्र प्रकृतधात्वर्थकर्मत्वं यस्य कदाचिदपि प्रसिद्धं तत्र तत्कर्मत्वस्याभावः नञा प्रकृतधात्वर्थं बोध्यते अतएव भूमिंगच्छति नमहीरुहमित्यादौ महीरुहनिष्ठकर्मताकत्वाभाववद्गमनं प्रतीयते तत्र कर्मत्वसाक्षादन्वयित्वमेव महीरुहस्येत्यतस्तद्वाचकपदाद्द्वितीया यस्यच प्रकृतधात्वर्थकर्मत्वंयत्रबाधितमेव तत्र तस्यैवाभावः कर्मत्वे बोध्यते तथाच द्रव्यंगच्छति नगुणमित्यादौ गुणाभाववत्कर्मतानिरूपकं द्रव्यकर्मकगमनं प्रतीयतेऽतो नञर्थद्वारा कर्मत्वान्वयित्वमेव तत्र गुणादेरतस्तद्वाचकपदाद्द्वितीयेति । अतिप्रसङ्गादिति ग्रामवृत्तिसंयोगानुकूलव्यापारशून्येऽपि चैत्रादौ ग्रामंगच्छतीति प्रयोगापत्तेरित्यर्थः । इत्याहुरिति अत्रेदमवधेयम् समवायसम्बन्धावच्छिन्नाधेयत्वं नद्वितीयार्थः किन्त्वाधेयतामात्रम् तथाच नञ्पदसमभिव्याहारे समवायसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन संयोगादिरूपे फले द्वितीयार्थाधेयत्वस्यान्वयः अभावन्न गच्छतीत्यादौ च समवायसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाधेयत्वाभावो नञ्समभिव्याहारस्थले बोध्यते अतोन वृत्त्यनियामकसम्बन्ध-

वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे आधेयत्वं संसर्गः विभक्तेः संख्यामात्रमर्थः फलावच्छिन्नो व्यापारो धात्वर्थ इत्येवोचितम् । अस्तु च व्युत्पत्तिवैचित्र्येण नामार्थधात्वर्थयोरपि साक्षादन्वयबोधस्तथासत्यतिप्रसङ्गस्य प्रागुपदर्शितप्रकारेण वारणसंभवात् । न चैतत्कल्पे लाघवानवकाशः फले स्वतन्त्रशक्त्यकल्पनेन सामग्रीप्रतिबन्धकतायां द्वितीयादिजन्यफलोपस्थितिधातुजन्यव्यापारोपस्थित्युभयनिवेशापेक्षया धातुजन्यविशिष्टविषयकोपस्थितेरेकस्या निवेशेन च लाघवात् । वस्तुतस्तु, शाब्दबुद्धेरधिकविषयत्वे राज्ञः पुरुष इत्यादौ स्वत्वादेः संसर्गतानिराकरणावसरे सामग्रीप्रतिबन्धकतायां लाघवस्य दर्शितत्वाद् द्वितीयादेराधेयत्वमर्थः फलावच्छिन्नव्यापारश्च धातोरित्येव युक्तम् ॥ कर्माख्यातस्य फलमर्थः । अन्यथा ग्रामो गम्यते इत्यादौ ग्रामादेः व्यापारजन्यफलाश्रयत्वरूपकर्मत्वप्रतीत्यनुपपत्तेः । यादृशविशेष्यविशेषणभावापन्नयोः पदशक्यता, तादृशविशेषणविशेष्यभावापन्नयोरेव शाब्दबोधे भानसंभवात् । न तु विपरीतविशेषणविशेष्यभावाप-

---

स्याभावप्रतियोगितानवच्छेदकत्वपक्षे आधेयताया द्वितीयार्थत्वाङ्गीकारे काचिद्धानिरिति । नन्वाधेयत्वसम्बन्धेन ग्रामादेर्धात्वर्थसंयोगादौ कथमन्वयोनामार्थधात्वार्थयोर्भेदेनान्वयादतआह अस्तुचेति । व्युत्पत्तिवैचित्र्येणेति आधेयत्वसम्बन्धावच्छिन्नग्रामादिनिष्ठप्रकारतानिरूपितधात्वर्थफलनिष्ठविशेष्यताकशाब्द बोधे द्वितीयान्तग्रामादिपदगम्यादिधातुसमभिव्याहारज्ञानत्वेन कार्यकारणभावाङ्गीकारेणेत्यर्थः । अतिप्रसङ्गस्येति ग्रामोगच्छतीत्यादावाधेयत्वसम्बन्धेन ग्रामनिष्ठप्रकारताकसंयोगादिनिष्ठविशेष्यताकबोधप्रसङ्गस्येत्यर्थः । प्रागुपदर्शितप्रकारेणेति आधेयत्वसंसर्गेण नामार्थप्रकारकसंयोगादिरूपधात्वर्थविशेष्यकशाब्दबोधंप्रति द्वितीयान्तग्रामादिपदसमभिव्याहृतगच्छतीत्यादि समभिव्याहारज्ञानस्य कारणत्वकल्पनेनेत्यर्थः । अनन्तधातूनां तत्तत्फलावच्छिन्नव्यापारे शक्तिकल्पनायां गौरवमेव नतु लाघवमित्याशंकते नचैतत्कल्पइति । लाघवंप्रदर्शयति फलइति उभयोर्विशेष्यविशेषणभावेविनिगमनाविरहेण विभिन्नविषयकप्रत्यक्षादिकंप्रति प्रतिबन्धकत्वाधिक्याद्गौरवमित्याह उभयनिवेशापेक्षयेति नच विशिष्टविषयकोपस्थितेः प्रवेशेऽपि फलप्रकारत्वव्यापारविशेष्यत्वयोर्विशेष्यविशेषणभाववैपरीत्येनावच्छेदकगौरवमेवेतिवाच्यं फलविषयकोपस्थितिव्यापारविषयकोपस्थित्योर्द्वयोरेव सामग्र्यांप्रवेशेहि प्रथमायांप्रदर्शितरीत्या विभिन्नविषयकप्रत्यक्षादि प्रतिबन्धकतायामेतदुपस्थितिद्वयस्य योग्यताज्ञानस्य च परस्परविशेष्यविशेषण भावे विनिगमनाविरहेण षट्प्रतिबन्धकत्वानि कल्पनीयानि विशिष्टशक्तिपक्षेतु विशिष्टोपस्थितेर्योग्यताज्ञानस्यच विशेष्यविशेषणभावे चत्वार्येव एतत्पक्षेहि उपस्थित्योः परस्परविशेष्यविशेषणभावस्याप्रसक्तेरतो लाघवं सुव्यक्तमेव एवमधिककारणैः सह विशेष्यविशेषणभावे विनिगमनाविरहेतु अधिकं

न्नयोः । यत्तु फले धातोः पृथक् शक्त्युपगमात् व्युत्पत्तिवैचित्र्येण कर्त्राख्यातसमभिव्याहारस्थले व्यापारविशेषणतया भासमानस्य फलस्य कर्माख्यातस्थले तद्विशेष्यतया भानमिति । तन्न । पृथक् शक्तिस्वीकारे शाब्दसामग्र्याः प्रतिबन्धकतायां विशिष्टविषयकोपस्थितिस्थले उपस्थितिद्वयकल्पने गौरवात् । गम्यादेः सम्पूर्वयुजिप्रभृतिसमानार्थकताभ्रमवतामिव विशेषदर्शिनामपि गमनं न स्पन्द इत्यादिवाक्यात्संयोगादौ स्पन्दभेदान्वयबोधापत्तेर्दर्शिताया दुर्वारत्वाच्च । संयोगादिविशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिघटितायास्तथाविधान्वयबोधसामग्र्या अक्षतत्वात् । तत्तद्धातूपस्थाप्यव्यापारांशे तत्तद्विशेषणकबोधतात्पर्यज्ञानस्य तादृशान्वयबोधे प्रतिबन्धकताकल्पने गौरवादिति । फलस्य द्विधा भानं चेदनुभवविरुद्धं तदा पुनरनायत्या फलव्यापारयोः खण्डशः शक्तिद्वयमेव धातोः स्वीकरणीयम् । आख्यातस्याश्रयत्वमेव तत्रार्थः अधिकमग्रे वक्ष्यते ॥ अथ द्वितीयाया आधेयतार्थकत्वे व्यापारे तदन्वयतात्पर्येण सप्तम्या इव द्वितीयाया अपि प्रयोगापत्तिः । नहि गृहे पचतीत्यादिवद्गृहं पचतीति कश्चित्प्रयुङ्क्ते ॥ मैवं धात्वर्थतावच्छेदकफलांशे आधेयत्वान्वय एव तादृशद्वितीयायाः साकाङ्क्षत्वकल्पनाद्व्यापारे तदुपस्थापिताधेयत्वान्वयासंभवात् । सप्तम्यधीनाधेयत्वोपस्थितिसप्तमीसमभिव्याहारज्ञानघटिताया एव सामग्र्यास्तादृशान्वयबोधनियामकत्वात् । द्वितीयासप्तम्योः समानार्थकत्वेऽपि व्युत्पत्तिभेदज्ञापनायैव पृथक् पृथक् सूत्रेण तयोर्विधानात् ॥ अथाधःसंयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वात्, धात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्येण भूमिं पततीति प्रयोगापत्तिः । न च द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकान्वयबोधे गम्या-

---

प्रतिबन्धकत्वं दर्शितदिशा कल्पनीयमित्यवधेयम् । व्युत्पत्तिवैचित्र्येणेति फलविशिष्टव्यापारविषयकशाब्दबोधे द्वितीयान्तकर्त्राख्यातसमभिव्याहारज्ञानस्य व्यापारविशिष्टफलविषयकशाब्दबोधेच कर्माख्यातप्रथमान्तसमभिव्याहार ज्ञानस्य कारणत्वोपगमेनेत्यर्थः । सप्तम्याआधेयत्वार्थकत्वस्य वक्ष्यमाणतया द्वितीयाया अप्याधेयत्वार्थकत्वे द्वितीयासप्तम्योःप्रयोगव्यवस्था नोपपद्येत अतस्तदुपपत्तये यत्र धात्वर्थतावच्छेदकफले आधेयत्वान्वयस्य विवक्षा तत्रद्वितीया यत्रव्यापारे तद्विवक्षा तत्रसप्तमीत्युपगन्तव्यं तत्रशंकते अथेति । तदुपस्थापितेति द्वितीयोपस्थापितेत्यर्थः ॥ तादृशान्वयबोधेति व्यापार धर्मिकान्वयबोधेत्यर्थः । व्युत्पत्तिभेदज्ञापनायेति फलविशेष्यकाधेयत्वान्वयबोधंप्रति द्वितीयासमभिव्याहारज्ञानस्य कारणत्वम् व्यापारविशेष्यकाधेयत्वान्वयबोधम्प्रति सप्तमीसमभिव्याहारज्ञानस्य कारणत्वमिति बोधनायेत्यर्थः । अधः संयोगावच्छिन्न-

दिजन्यफलोपस्थितितत्समभिव्याहारज्ञानघटितसामग्र्येव प्रयोजिका न तु पतधातुजन्यतदुपस्थितिघटिता सामग्रीति नातिप्रसङ्ग इति वाच्यम् पतधातुनैव यत्र संयोगावच्छिन्नगमनं लक्षणादिनोपस्थापितं तत्र संयोगे द्वितीयार्थाधेयत्वान्वयात् । अत्राहुः । धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितेः शाब्दबोधकारणताया अवच्छेदकघटकसंयोगविषयतायामधिकरणानवच्छिन्नत्वं विशेषणं देयम् । तथाच

---

स्पन्दस्येतिः अधःसंयोगानुकूलव्यापारस्येत्यर्थः।लक्षणादिनेति इयन्तुलक्षणाभागत्यागलक्षणाशब्देन व्यवह्रियते। नन्वधः संयोगावच्छिन्नव्यापारस्य पत्धातुशक्यत्वे संयोगावच्छिन्नव्यापारोऽपि शक्यएवेत्यलमुक्तलक्षणोपगमेन नहि यद्धर्मावच्छिन्नविषयताकः शाब्दबोधस्तद्धर्ममात्रावच्छिन्नविषयताकत्वेन शक्तिज्ञानस्य शाब्दधीहेतुता येन संयोगावच्छिन्नव्यापारत्वावच्छिन्नविषयताकशाब्दबोधे संयोगावच्छिन्नव्यापारत्वमात्रावच्छिन्नविषयताक एव शक्तिग्रहोऽपेक्ष्येत नत्वधोदेशसंयोगावच्छिन्नव्यापारत्वावच्छिन्नविषयताकोऽपीति वक्तुंशक्यते गौरवेणेदृशकार्यकारणभावानभ्युपगमात् किन्तु तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकत्वेनैव शक्तिग्रहस्यकारणत्वं लाघवादुपेयम् अतएव श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्र स्मृत्यादिभिन्नप्रमाणशब्दत्वेन शक्तमपि श्रुतिपदं प्रमाणशब्दत्वेन श्रुतिस्मृती बोधयन्न लाक्षणिकम् अन्यथा श्रुतिपदस्य वेदमात्रपरत्वे तज्जन्यशाब्दत्वेन मुक्तिहेतुत्वे नियमादृष्टकल्पनापत्तेरिति मिश्रैरप्युक्तमिति चेन्मैवम् तथासतिमूषिकादेरपि पश्वादिपदशक्यतापत्तेः पशुपदस्य लोमवल्लाङ्गूलविशिष्टे शक्तावपि मूषिके लोमवल्लाङ्गूलविरहेऽपिच केवललाङ्गूलस्य सत्त्वादतोविशिष्टशक्तिस्थले एकदेशमात्रस्य भानं लक्षणयैव सम्पादनीयम् अतएव कुसुमाञ्जलिप्रकाशे कृताकृतविभागेनेतिकारिकाव्याख्याने वर्धमानोपाध्यायैः "ननु शक्यैकदेशे प्रयोगो न लाक्षणिकः उपस्थित्यर्थंहिलक्षणा विशिष्टशक्तपदाद्विशिष्टोपस्थितौ विशेषणमप्युपस्थितमेवेत्ययोग्यतया विशेष्यांशमपहाय विशेषणान्वयस्य मुख्यवृत्त्यैवोपपत्तेः मैवम् तस्य धर्म्यन्तरान्वितत्वेनोपस्थितस्येतरधर्म्यनाकाङ्क्षिततया स्वतन्त्रतदुपस्थित्यर्थं लक्षणाया न्याय्यत्वात्" इत्युक्तम् अतएवच तत्त्वमसीत्यादौ सर्वज्ञत्वप्रयोजकीभूतमायावच्छिन्नचैतन्यस्यतत्पदार्थतया ऽल्पज्ञत्वप्रयोजकीभूतान्तःकरणविशिष्टचैतन्यस्य च त्वंपदार्थतया तयोरभेदासम्भवाद्विशेषणद्वयपरित्यागेन केवलचैतन्यविषयकः शाब्दात्मको निर्विकल्पकबोधो भागत्यागलक्षणयैव स्वीकृतः शङ्करभगवत्पादैरित्यवगन्तव्यम् । अधिकरणानवच्छिन्नत्वमिति फलविशेष्य कद्वितीयोपस्थाप्याधेयत्वप्रकारकान्वयबोधंप्रतिस्वप्रकृत्यर्थरूपाधिकरणानवच्छिन्नफलनिष्ठविषयताकोपस्थितित्वेन कारणत्वमित्यर्थः अत्र स्वप्रकृत्यर्थेत्यस्यानुपादाने लोष्टमुत्क्षिपतीत्यादावूर्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारस्योत्क्षिपत्यर्थतया तद्घटकसंयोगे द्वितीयार्थाधेयत्वान्वयानुपपत्तिः तस्योर्ध्वदेशावच्छिन्नतयैवोपस्थितेरतएतदुक्तम् तथाच तत्रनलोष्टाव-

तादृशविषयताशालिसंयोगाद्युपस्थित्यादिघटितसामग्र्या एव संयोगविशेष्यकद्वितीयोपस्थाप्याधेयत्वान्वयबोधप्रयोजकत्वोपगमान्नातिप्रसङ्गः। न चैवमपि फलावच्छिन्नव्यापारबोधकतया पतेःसकर्मकत्वव्यवहारापत्तिर्दुर्वारेतिवाच्यम् आश्रयानवच्छिन्न फलावच्छिन्नव्यापारबोधकत्वस्यैव तादृशव्यवहारनियामकत्वात्। उत्तरदेशानवच्छिन्नसंयोगः फलं गम्यर्थतावच्छेदकमिति नानुपपत्तिः। अत एवाग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता। आश्रयानवच्छिन्नावच्छेदकताश्रयफलवत्त्वविरहात्। संयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात्। न चाग्निविशेषितसंयोगस्य धात्वर्थतावच्छेदकत्वेऽग्नौ घृतं जुहोतीत्यत्रानन्वयप्रसङ्गः, उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम् तत्र संयोगनिष्ठायामुद्देश्यतायां वन्हेराधेयतासंसर्गेणावच्छे-

---

च्छिन्नत्वेन संयोगोपस्थितिरतोन दोषः। तादृशविषयतेति अधिकरणानवच्छिन्नविषयतेत्यर्थः। नातिप्रसङ्गः नभूमिंपततीतिप्रयोगापत्तिः पत्धातोरधः संयोगावच्छिन्नव्यापारार्थकतया तज्जन्योपस्थितिविषयतावच्छेदकतायां संयोगनिष्ठायामधोदेशावच्छिन्नत्वेनाधिकरणानवच्छिन्नत्वाभावादिति। न चैवमपीति फलेऽधिकरणानवच्छिन्नत्वविशेषणप्रक्षेपेणोक्तप्रयोगवारणेऽपीत्यर्थः। ननु गमधातोरप्युत्तरदेशसंयोगानुकूलव्यापारार्थकतया तदीयसंयोगरूपफलेऽधिकरणावच्छिन्नत्वमेवेति ग्रामंगच्छतीत्यादौग्रामादेः कर्मत्वस्य गम्यादेः सकर्मकत्वस्यचानुपपत्तिरतआह उत्तरदेशानवच्छिन्नेति संयोगानुकूल व्यापारएव गम्याद्यर्थइतिभावः। अग्निसंयोगेत्यादि अग्निसंयोगावच्छिन्नक्रिया घृतादेः पतनरूपा तदनुकुलोव्यापारो मन्त्रकरणकहविःप्रक्षेपरूपः पुरुषनिष्ठः। अत्र जुहोतेः संयोगानुकूलव्यापारानुकूलव्यापारमात्रार्थकत्वे नयति जुहोत्योः समानार्थकत्वंस्यादतोऽग्निसंयोगावच्छिन्नेत्युक्तम् एवञ्चाग्निंघृतं नयतीतिवत् अग्निंघृतंजुहोतीति न प्रयोगोऽपितु अग्नौघृतं जुहोतीति। नचैवं जलेऽन्नाहुतिद्वयं जुहुयादित्यादावनुपपत्तिस्तत्रत्यसंयोगस्याग्न्यविशेषितत्वादितिवाच्यम तत्राधारावच्छिन्नसंयोगानुकूलव्यापारानुकूलव्यापारे हुधातोर्लक्षणोपगमादिति। ननु-यदि अग्नौघृतं जुहोतीत्यादौ अग्निवृत्तित्वं धात्वर्थतावच्छेदकघटकं तदा तद्विशिष्टसंयोगे सप्तम्यन्तार्थस्याग्निवृत्तित्वस्यान्वयोन सम्भवति उद्देश्यतावच्छेदकविधेययोरैक्यात् यदिच सप्तम्यर्थाधेयत्वस्य संसर्गविधयैवभानं तदा विनिगमकाभावात् धात्वर्थघटकाग्निसंयोगोऽप्याधेयत्वसम्बन्धेनाग्निविशिष्टसंयोगएव विवक्षणीयस्तथाचोद्देश्यतावच्छेदकस्य विधेयस्य चाग्नेरैक्यादन्वयबोधानुपपत्तिरित्याशंकते नचाग्निविशेषितेति। धात्वर्थतावच्छेदककोटौ लाघवेनाधेयत्वसम्बन्धेनाग्निसंयोगस्य प्रवेशः राज्ञः पुरुष इत्यत्र प्रदर्शितयुक्त्या सप्तम्यर्थाधेयत्वस्यतु प्रकारतयैवप्रवेशइत्याशयेनाह तत्रसंयोगनिष्ठायामिति ननु व्यापारे एव सप्तम्यर्थाधेयत्वान्वयस्य पूर्वमुक्तत्वादत्र संयोगेऽन्वयाभिधानमयुक्तमिति चेन्न द्विती-

दकतया सप्तम्यर्थस्याग्निवृत्तित्वस्य च विधेयतया उद्देश्यतावच्छेदकविधेययोरैक्यानवकाशात्। वस्तुतस्तु तत्र वह्नेरनन्वयेऽपि न क्षतिः व्युत्पन्नानां तादृशप्रयोगस्याप्रामाणिकत्वात्। संस्कृते वह्नौ जुहुयादित्यादिस्थले च विधेयांशेऽधिकावगाहनान्नास्त्येवानुपपत्तिः घृतादेश्चाश्रयानवच्छिन्नधात्वर्थतावच्छेदकक्रियारूपफलाश्रयत्वात् कर्मत्वोपपत्तिः। यत्तु धात्वर्थतावच्छेदकत्वं धातुवृत्तिग्रहविशेष्यांशे साक्षात्प्रकारत्वं तच्च क्रियायामेव न संयोगांशेऽपीति नाग्नेर्जुहोतिकर्मतापत्तिरिति। तदसत्। अजां ग्रामं नयतीत्यादौ संयोगावच्छिन्नक्रियानुकूलव्यापारादिरूपे धात्वर्थे संयोगादेः साक्षादप्रकारतया तदाश्रयीभूतग्रामादेः कर्मत्वानुपपत्त्या नीवहादेर्द्विकर्मकत्वव्याघातात्। अथात्र ग्रामादेः प्रधानकर्मत्वं नास्त्येवापितु गौणकर्मत्वमेव। अतएव तादृशकर्मत्वमाख्यातेन नाभिधीयते "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम." इत्यनुशासनादिति। अजांग्रामोनीयते इत्यादिको न प्रयोग इति

---

यार्थाधेयत्वस्य फलेऽन्वयबोधंप्रति स्वप्रकृत्यर्थरूपाधिकरणानवच्छिन्नफलनिष्ठविषयताकोपस्थितित्वेन कारणत्वस्यप्रदर्शितत्वेऽपिसप्तमीघटितस्यैवप्रयोगस्या अप्रामाणिकतया तदुपपत्तयेसप्तम्यर्थाधेयत्वस्य फलेऽन्वयबोधंप्रति स्वप्रकृत्यर्थरूपाधिकरणावच्छिन्नफलनिष्ठविषयताकोपस्थितित्वेन कारणत्वस्य कल्पनीयतयाऽग्नौघृतं जुहोतीत्यत्राग्निसंयोगेऽन्वयेऽनुपपत्तिविरहात् इत्थञ्च धात्वर्थतावच्छेदकफलांशे इत्यादि पूर्वग्रन्थे प्रथमेवकारेण व्यापारे द्वितीयार्थाधेयत्वान्वयस्य व्यवच्छेदः द्वितीयैवकारेण च व्यापारे विभक्त्यर्थान्वये द्वितीयासमभिव्याहारघटितकारणकलापस्य सामग्रीत्वव्यवच्छेदः तथाच सप्तम्यधिकरणेचेतिसूत्रस्य यद् व्यापारनिष्ठाधेयत्वं यच्चाधिकरणावच्छिन्नफलनिष्ठाधेयत्वं तदन्यतरान्वयित्वेन तात्पर्यविषये प्रकृत्यर्थे सप्तमीभवतीत्यर्थ इति नकाचिदनुपपत्तिरिति॥ संयोगनिष्ठायां धातुशक्यतानिरूपितावच्छेदकतायामाश्रयावच्छिन्नत्वेऽपि व्यापारात्मकफलनिष्ठावच्छेदकतायां साक्षादाश्रयावच्छिन्नत्वविरहेण व्यापारात्मकफलाश्रयत्वात् घृतादेः कर्मत्वन्नानुपपन्नमित्याह घृतादेश्चेति। विशेष्यांशइति मुख्यविशेष्यांश इत्यर्थः। संयोगावच्छिन्नक्रियेति अनुकूलत्वसम्बन्धेन संयोगविशिष्टव्यापारेत्यर्थः॥ तदाश्रयीभूतेति धात्वर्थतावच्छेदकघटकसंयोगाश्रयीभूतेत्यर्थः। व्याघातादिति एतेन भूमौपततीत्यादौ भूम्यादावपि कर्मत्वापत्तिः वृत्तिग्रहमुख्यविशेष्यांशे साक्षात्प्रकारीभूतस्य संयोगस्य तत्रसत्वात् यदिचोक्तदोषवारणायाधिकरणानवच्छिन्नत्वं साक्षात्प्रकारांशे विशेषणमुपादीयते तदोक्तप्रयासवैफल्यम् अग्नौघृतं जुहोतीत्यादावग्न्यादेः कर्मत्वस्य ततएववारणादित्यपि सूचितम्। गौणकर्मत्वेति तथाचोक्तरीत्यनुसरणं मुख्यकर्मत्वस्थलएवेत्यतो ग्रामादौ गौणकर्मणि १ तदभावेऽपि नक्षतिरितिभावः। लादीनाहुर्द्विकर्मणामिति एतदग्रे अप्रधाने दुहा-

चेत्तर्हि तत्र ग्रामादेरिवात्रापि धात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन गौणकर्मत्वापत्त्या वह्निं घृतं जुहोतीति प्रयोगापत्तिर्दुर्वारैवेति। अस्मन्मते चाश्रयानवच्छिन्नसंयोगविषयताशालिधातुजन्योपस्थितिघटितसामग्र्या एव संयोगे द्वितीयार्थान्वयबोधप्रयोजकतया नैतादृशप्रयोगापत्तिः। यत्तु अधःसंयोगावच्छिन्नस्पन्दो न पतत्यर्थः अपि तु गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्न एव । अतएव फलावच्छिन्नव्यापाराबोधकत्वान्न सकर्मकत्वमिति तन्न फलस्य धात्वर्थाघटकत्वे स्पन्द एव सप्तम्यर्थान्वयस्योपगन्तव्यतया पर्णादिनिष्ठस्यतस्य भूतलावृत्तितया भूतले पततीति प्रयोगानुपपत्तिः । पर्णादिगतस्पन्दस्य परम्परया भूतलादिवृत्तित्वमिति चेत्तर्हि वृक्षात्पततीतिवत् वृक्षे पततीत्यपि स्यात् । अस्मन्मते चान्यत्र व्यापारे सप्तम्यर्थान्वयेऽपि अत्र व्युत्पत्तिवैचित्र्यादधःसंयोगरूपधात्वर्थतावच्छेदकएव तदन्वय इत्यदोषः । अन्येतु भूम्यादेः कर्मत्वविवक्षायां भूमिं पततीति प्रयोग इष्ट एव । अतएव द्वितीयाश्रितेत्यादिसूत्रेण नरकं पतित इत्यादिस्थले द्वितीयासमासविधानमुपपद्यते धात्वर्थतावच्छेदकतावच्छेदकफले द्वितीयार्थान्वयएवाश्रयानवच्छिन्नफलोपस्थितेरपेक्षा अग्निंजुहोतीतिवारणाय स्वीक्रियत इतिवदन्ति । तदपि न शोभनम् तथा सति भूम्यादिपदोत्तरं कदाचित्सप्तमी कदाचिद्द्वितीयेत्यत्र नियामकाभावप्रसङ्गात् । व्यापारांशे आधेयत्वविवक्षायां सप्तमी फलांशे तद्विवक्षायां द्वितीयेत्यस्योक्तयुक्त्या फलांशएव सप्तम्यर्थान्वयस्यावश्यं स्वीकरणीयतया वक्तुमशक्यत्वादिति ॥ ब्राह्मणाय धनं ददातीत्यादौ

---

दीनांण्यन्तेकर्तुश्चकर्मण इत्यस्तिपाठः । जातिविशेषेति पतनत्वेत्यर्थः । तस्येति स्पन्दस्येत्यर्थः । परम्परयेति स्वाश्रयप्रतियोगिकसंयोगवत्त्वसम्बन्धेनेत्यर्थः । इत्यपिस्यादिति स्वाश्रयप्रतियोगिकविभागवत्त्वरूपपरम्परासम्बन्धेन पर्णवृत्तिव्यापारस्यवृक्षेऽपिसत्त्वादितिभावः।अन्यत्रेति गृहेपचतीत्यादौ । अपेक्षेति तथा चाधोदेशसंयोगस्य पत्धात्वर्थतावच्छेदकतावच्छेदकत्वाभावात्तत्रनभूम्यादिवृत्तित्वान्वये किञ्चिद्बाधकमितिभावः।नरकपदेनात्रदुःखविशेषभोगाधिकरणंस्थानमुच्यते । उक्तयुक्त्येति पर्णादिनिष्ठस्यतस्यभूतलावृत्तितयेत्यनुपदोक्तयुक्त्येत्यर्थः। वक्तुमशक्यत्वादिति।अथैवमपिनरकंपतितइतिप्रयोगस्यकथमुपपत्तिःनरकस्याधिकरणानवच्छिन्नधात्वर्थतावच्छेदकफलाश्रयत्वाभावात्नच तत्रनरकेपतितइत्येवप्रयोगइतिवाच्यंतथासतिद्वितीयाश्रितेत्यादिसूत्रे पतितशब्दोपादानानुपपत्तेरिति चेदत्राहुः अधःसंयोगावच्छिन्नक्रियार्थकपत्धातुसमभिव्याहृतात् सुखासम्भिन्नदुःखभोगावच्छेदकप्रदेशविशे-

स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः तादृशस्वत्वरूपधात्वर्थतावच्छेदकफलएव द्वितीयार्थान्वयः उपेक्षायामतिप्रसङ्गवारणाय परस्वत्वनिवेशः। दानं च न संप्रदानस्वत्वजनकमपि तु तत्स्वीकार एवेति मते तु स्वस्वत्वध्वंसानुकूला परस्वत्वप्रकारिका इच्छैव ददात्यर्थः । तत्र स्वस्वत्वध्वंसरूपफलाश्रयत्वाद्धनस्य कर्मता । धनं प्रतिगृह्णातीत्यादौ स्वस्वत्वजनकेच्छारूपस्वीकारविशेषो धातोरर्थः स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः तण्डुलंपचतीत्यादौ रूपादिपरावृत्तिजनकतेजःसंयोगो धातोरर्थः । रूपादिपरावृत्तिफले च तण्डुलादिवृत्तित्वान्वयः। ओदनं पचतीत्यादौ ओदनादिपदस्य तन्निष्पादकतण्डुलादौ लक्षणा । अवयविविनि पाकानभ्युपगमे च तण्डुलं पचतीत्यादौ तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा । ओदनं भुङ्क्ते इत्यादौ गलाधोनयनं धात्वर्थः । तच्च गलाधः संयोगावच्छिन्नक्रियानुकूलव्यापारः । तादृशक्रियारूपफलएव ओदनवृत्तित्वान्वयः । उक्तयुक्त्या गलाधोदेशस्य न कर्मत्वम् । एवमन्यसकर्मकधातूनामप्यर्थाः स्वयमूह्याः ।

---

षार्थकनरकपदाद्द्वितीया नेष्यतएव तत्रसप्तम्याएवेष्टत्वात् किंतु भोगानुकूलपातित्यार्थकपत्धातुसमभिव्याहृतात् सुखासम्भिन्नदुःखार्थकनरपदादेव विषयत्वरूप कर्मत्वार्थिका द्वितीयाइष्यते तस्यचविषयत्वस्य भोगेऽन्वयात नरकंपतितइत्यतो दुःखविशेषविषयकभोगानुकूलपातित्यवानित्यर्थः प्रतीयते एतादृशार्थे एवच द्वितीयाश्रितेत्यादिसूत्रेणसमासो विधीयते इति ॥ स्वस्वत्वध्वंसेति स्वत्वञ्च यथेष्टविनियोगार्हत्वम् यत्र स्वधनस्य परसाधारणीकरणं तत्रापि परस्वत्वानुकूलेच्छायाः सत्त्वाद्दानव्यवहारापत्तिरतः स्वस्वत्वध्वंसविशिष्टेत्युक्तम् तथाचतत्र स्वस्वत्वस्य विद्यमानत्वान्नापत्तिः।उपेक्षायामितिउपेक्षाच ममेदम्माभूदित्याद्याकारिकास्वस्वत्वनिवृत्त्यनुकूलेच्छेव ॥ यमुद्दिश्य ददाति सयदि स्वीकरोति तदा तत्स्वीकारेणतदीयं स्वत्वमुत्पद्यते नान्यथेतिपक्षे परस्वत्वानुकूलेच्छा ददात्यर्थोनसम्भवतीत्यतस्तत्पक्षेप्याह दानञ्चेत्यादि । स्वस्वत्वध्वसेति अत्रचैत्रस्यधनंभवत्वितीच्छायांपरसाधारण्यप्रयोजिकायामतिप्रसङ्गवारणायैतदुक्तम्उपेक्षायामतिप्रसंगवारणायचपरस्वत्वप्रकारकेत्युक्तम् अथ गौर्ममास्तुहिरण्यंचत्रस्यभवत्वितीच्छाया उपेक्षात्मिकाया गोनिष्ठस्वस्वत्वध्वंसानुकूलाया हिरण्यधर्मिकस्वत्वप्रकारिकायाःसत्वे चैत्राय गांददातीतिप्रयोगापत्तिरिति चेन्न स्वत्वप्रकारकत्वविशिष्टेच्छायां स्वत्वध्वंसस्यानुकूलत्वेन शाब्दबोधे भाने सामानाधिकरण्यसम्बन्धेन स्वत्वेऽपिस्वत्वध्वंसस्य भानोपगमात् प्रकृतेगोनिष्ठस्वस्वत्वध्वंससमानाधिकरणंयत्स्वत्वं तत्प्रकारकेच्छाविरहेणोक्तदोषासम्भवादिति। स्वीकारविशेषइति यत्र क्रयणादिस्थले इदं धनम्मेभवत्वितीच्छा तत्रातिप्रसङ्गवारणाय विशेषपदोपादानम् तथाच दानप्रयोज्या या स्वत्वजनिकेच्छा सैवप्रतिग्रहपदार्थइति लभ्यतेऽतोनदोषः । रूपादीति आदिपदात् रसादिपरिग्रहः । उक्तयुक्त्येति अधिकरणानवच्छिन्नफलाश्रय

गांदोग्धिपय इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । कारकाधिकारीयेणाकथितंचेति सूत्रेणापादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाभिधानात् । गवां पयो दोग्धीत्यादौ धातुप्रतिपाद्यान्वयिगवादिसंबन्धो न विवक्षितः, अपि तु क्षीराद्यन्वयी स इति कर्मत्वाविवक्षया द्वितीयानवकाशः, किन्तु शैषिकी षष्ठ्येवेति अत्र धातुप्रतिपाद्यत्वं तदर्थतावच्छेदककोटिप्रविष्टसाधारणम् । गां दोग्धीत्यादौ धात्वर्थतावच्छेदककोटिप्रविष्टएव द्वितीयार्थान्वयात् । तथाहि । क्षरणानुकूलव्यापारो दुहेरर्थः । द्वितीयार्थश्च जनकत्वसंबन्धेन क्षरणान्वयी विभागः । विभागे चाधेयतया प्रकृत्यर्थगवादेरन्वयः । एवं च धात्वर्थतावच्छेदकक्षरणरूपफले प्रधानकर्मक्षीराद्यन्वितद्वितीयार्थवृत्त्यन्वय इति गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्ता मैत्र इति गांपयोदोग्धिमैत्र इति वाक्याधीनो बोधः न च विभागोऽपादानत्वमेवेति तद्विवक्षायां द्वितीयानवकाशेति वाच्यम् । धातुवृत्तिग्रहविशेष्यान्वयिनो विभागस्यैवापादानत्वरूपत्वात् । वृक्षात्पर्णं पततीत्यादौ स्पन्दरूपविशेष्यांशे एव पञ्चम्यर्थविभागान्वयात् । वस्तुतो विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः । गोपदोत्तरद्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव । न चैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वमेवात्रापि प्रतीयते इति नाकथितं चेत्यस्य विषय इति वाच्यम् । धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वात् । यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितं क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्रापादानत्वबोधिका पञ्चमी । एतेन कदाचिद्गां दोग्धि पयः, कदाचिच्च गोभ्योदोग्धिपय इत्यत्रनानियमः । अथवा गोभ्योदोग्धिपय इत्यत्रापि विभागो धात्वर्थतावच्छेदककोटिप्रविष्ट एव वृक्षा-

---

स्यव कर्मत्वव्यवस्थापनेनेत्यर्थः । अन्यदेवकर्मत्वमिति गौणकर्मत्वमेवेत्यर्थः । अपादानत्वादिभिन्नेति अपादानत्वादिभिन्नं यद्धातुप्रतिपाद्यान्वयि धर्मान्तरं तदवच्छिन्नस्येत्यर्थः । तदर्थतावच्छेदकेति धात्वर्थतावच्छेदकेत्यर्थः । क्षरणेति क्षरणत्वञ्च द्रवत्वजन्यतावच्छेदिका क्षीरादिक्रियावृत्तिर्जातिः । पयोनिष्ठक्षरणेति तथाच गवि धात्वर्थतावच्छेदकीभूतक्षरणरूपफलाभावात् युक्तमुक्तमन्यदेवकर्मत्वं बोधयतीति । धातुवृत्तिग्रहेति पवञ्चप्रकृते क्षरणरूपे फले एवद्वितीयार्थविभागोऽन्वेति नतुधातुवृत्तिग्रहमुख्यविशेष्ये क्षरणानुकूलव्यापारेऽतोनपञ्चमीप्रसक्तिरिति । द्वितीयायाआधेयत्वमर्थइहापिसम्भवत्येवेत्यभिप्रेत्याह । वस्तुतइति । विभागावच्छिन्नेति विभागजनकेत्यर्थः । एकरूपेणसर्वत्रदुह्यर्थतामाह अथवेति । ननुप-

द्विभजते इत्यत्रैवावधित्वरूपापादानत्वविवक्षायां पञ्चमी, आश्रयत्वविवक्षायां च द्वितीया, अवधित्वं चाश्रयत्वादन्यदेव संबन्धविशेषः । अत्र क्षरणान्वयिनः परसमवेतत्वस्य द्वितीयार्थत्वात् पयोनिष्ठक्षरणस्य पयोनिष्ठविभागजनकत्वेऽपि न पयः पयो दोग्धीति प्रयोगः । परत्वं विभागान्वयितावच्छेदकावच्छिन्नापेक्षया बोध्यम् । दुह्यते गौः क्षीरमित्यादौ क्षरणजन्यविभागाश्रयत्वं गवादिनिष्ठमप्रधानकर्मत्वमाख्यातार्थः । अप्रधाने दुहादीनामित्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः । अथवा विभागक्षरणव्यापारेषु विशकलितेषु धातोः शक्तित्रयं; विशिष्टलाभोऽन्वयबलात् । कर्माख्यातस्थले चाकाङ्क्षावैचित्र्येण तेषां विशेष्यविशेषणभाववैपरीत्यात् व्यापारजन्यक्षरणजन्यविभागपर्यन्तस्य धातुत एव लाभः आश्रयत्वमेवाख्यातार्थः । एवं च क्षरणविभागयोर्न द्विधा भानम् । गौणकर्मासमभिव्याहृते दुह्यन्ते क्षीराणीत्यादौ आत्मनेपदेन केवलेन धातुसहितेन वा विभागावच्छिन्नक्षरणाश्रयत्वरूपप्रधानकर्मत्वस्य बोधनेऽपि एकदा उभयविधकर्मत्वबोधनस्याव्युत्पन्नतया दुह्यन्ते क्षीराणि गौरित्यादयो न प्रयोगाः ।

पौरवं गां याचते विप्र इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः । प्रधानकर्मगवाद्यन्वितद्वितीयार्थः विषयत्वं धात्वर्थतावच्छेदकदानेऽन्वेति । सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम् अतएव घटो जिज्ञास्यते इत्यादौ घटादेःसन्नन्तकर्मता । अथैवं यद्वस्तुविषयकं दान-

---

योनिष्ठविभागजनकं यत्पयोनिष्ठक्षरणं तदनुकूलव्यापारस्य चैत्रादौसत्त्वात्चैत्रःपयः पयोदोग्धीतिप्रयोगापत्तिरतआह अत्रक्षरणान्वयिनइति । परत्वमित्यादि तथा च पयःपयोदोग्धीत्यादौ पयोभिन्नवृत्तिपयोवृत्तिक्षरणस्याप्रसिद्ध्या नोक्तप्रयोगप्रसङ्ग इतिभावः । शक्तित्रयमिति अयमेवपक्षोयुक्तः दुहादयः त्र्यर्थाः द्व्यर्थःपचिरिति-फणिभाष्यस्वारस्यादिति । नद्विधाभानमिति तथा च गौर्दुह्यतेक्षीरमित्यत्र-चैत्रवृत्तिव्यापारजन्यंयत्क्षीरवृत्तिक्षरणं तज्जन्यविभागाश्रयो गौरितिबोधः । स्वोद्देश्यकेति स्वनिरूपितस्वत्वप्रकारकत्वविशिष्टा यापरस्वत्वनिवृत्त्यनुकूलेच्छा तद्विषयिणीच्छेत्यर्थः स्वपदार्थःयाचकः ।सविषयकेत्यादि सविषयकोज्ञानादिरूपोयोविषयस्तदुपहितेच्छेत्यर्थः।ज्ञानादीति आदिपदादिच्छायत्नद्वेषभावनाख्यसंस्कारपरिग्रहः। प्रकृतेच दानविषयकेच्छाविषयीभूता या दानरूपेच्छा तद्विषयत्वमेव प्रधान-कर्मत्वम् । यद्गवादिविषयकंदानमप्रसिद्धं तद्गवादिविषयकदानविषयिणीच्छा

मप्रसिद्धं तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसः का गतिरिति चेद् या गतिर्गगनं दिदृक्षते इत्यादिकस्य भ्रान्तपुरुषीयगगनादिप्रकारकदर्शनेच्छाबोधकवाक्यस्य, गगनविषयकत्वप्रकारकदर्शनेच्छाबोधस्तत्रेति चेदिहापि गोविषयिताप्रकारता निरूपितस्वत्वेच्छानिष्ठविषयताशालीच्छाबोधः तद्वाक्यस्यविशेषादर्शिविषयता च समा । विवेचनीयं चेदमग्रे । पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः । तस्या दानेऽन्वयः । पौरवस्य तादृशदानाश्रयत्वमेवाप्रधानकर्मत्वम् । न चैवमिच्छाविशेषरूपदानस्याश्रयत्वं कर्तृत्वमेवेतिवाच्यम । धातुजन्यप्रतिपत्तिविशेष्यीभूतदानाश्रयत्वस्यैव तत्कर्तृत्वरूपत्वात् । अत्र च दानस्य तादृशप्रतिपत्ताविच्छारूपधात्वर्थे विशेषणत्वात् । चैत्रेण पौरवो गां याच्यत इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयबोधो बोध्यः । यद्यपि निरुक्तयाञ्चा भिक्षैवेति दुहियाचिरुधिप्रच्छिभिक्षिचिञामित्यत्रार्थपरभिक्ष्युपादानेनैवचरितार्थतया याचेरुपादानमनर्थकं तथापि याचमानः शिवं सुरानित्यादौ याचतेर्न निरुक्तभिक्षार्थकतेति तदुपादानम्। तत्र हि व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः । इच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्यान्वयः तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रय इत्यन्वयबोधः । गां व्रजं

---

नयाचधातुना बोधयितुंशक्यतेइत्याशंकते अथेति।कर्मसमभिव्याहृतेति कर्मवाचकपदसमभिव्याहृतेत्यर्थः। गगनविषयकत्वप्रकारकेति अस्येच्छया सम्बन्धः गगनविषयकदर्शनस्याप्रसिद्ध्या तादृशविशिष्टविषयकदर्शनेच्छाया असम्भवेऽपि गगनविषयकंदर्शनं भवत्वितीच्छायां दर्शनविशेष्यिकायां गगनविषयकत्वप्रकारिकायां बाधकाभावात् यथा गगनंदिदृक्षतेचैत्रइत्यादौ गगनविषकंदर्शनंभवत्वितीच्छावान् चैत्रइत्यन्वयबोधस्तथा तद्गांयाचतेचैत्रइत्यादौ तद्गोविषयकत्वप्रकारकस्वोद्देश्यकदानेच्छाश्रयश्चैत्रइत्यन्वयबोधइत्यतोनानुपपत्तिरितिभावः । यथा विशेषादर्शिनामेवगगनंदिदृक्षतेइतिप्रयोगोनतुविशेषदर्शिनांतथाप्रकृतेऽपीत्याह तद्वाक्यस्येति। अप्रधानकर्मत्वमिति नच दानस्यसाक्षाद्धात्वर्थतावच्छेदकत्वात्तदाश्रयतयापौरवस्यमुख्यकर्मत्वमेवयुक्तमितिवाच्यम् सविषयकधात्वर्थस्यविषयत्वमेवहि मुख्यकर्मत्वमिति । अत्रचेति पौरवंगांयाचतेविप्रइत्यादौ । तादृशप्रतिपत्ताविति धातुजन्यबोधइत्यर्थः। दानाश्रयइति पौरवइतिशेषः । अर्थपरेति तदुक्तंकौमुद्याम् अर्थनिबन्धनेयंसंज्ञेति। इदन्तु चिन्तनीयम् याचतेरर्थान्तरबोधकत्वेऽपि भिक्षसमानार्थकत्वस्याक्षतत्वात् पृथगुपादानसार्थक्यमुक्तरीत्यानसम्भवति किन्तु पर्यायग्रहणार्थमेव पृथगुपादानमिति । इच्छाश्रयइति इच्छा

रुणद्धीत्यादौ देशान्तरसंचारविरोधिव्यापारो धात्वर्थः संचारविरोधित्वं संचारानुत्पादप्रयोजकत्वम् । अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः । देशविशेषणभेदे व्रजमिति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः रुध्यते गां व्रजइत्यादावन्वयबोधः स्वयमूहनीयः ॥ गुरुं धर्मं पृच्छतीत्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थः । बोधे गुरुवृत्तित्वस्य जिज्ञासायां धर्मविषयकत्वस्यान्वयः । शिष्यं धर्मं ब्रूते इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थः । ज्ञाने धर्मविषयत्वस्य शिष्यवृत्तित्वस्याप्यन्वय इति तन्न चारुतरम् । तथा सति यत्र जिज्ञासाविषयकचैत्रज्ञानेच्छया प्रश्नस्तादृशशब्दाच्च सामग्रीवलेन मैत्रस्यापि पृच्छकजिज्ञासाज्ञानं तत्र मैत्रं पृच्छतीति प्रयोगस्य, एवं यत्र चैत्रज्ञानेच्छया ब्रूते दैववशाच्च मैत्रस्यापि ज्ञानं तत्र मैत्रं ब्रूते इति प्रयोगस्य चापत्तेः । साक्षाद्धात्वर्थविशेषणज्ञानरूपफलाश्रयतया तत्र गुर्वादीनां प्रधानकर्मतया अप्रधाने दुहादीनामित्यनुशासनविरोधेन पृच्छयते गुरुर्धर्मं " स पृष्टस्तेन कस्त्वं भो । शिष्यउच्यतेधर्ममित्यादिस्थले च लकारादिना तत्कर्मत्वाभिधानानुपपत्तेश्च । परं तु जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः । ज्ञाने गुरुवृत्तित्वस्यान्वयः । शब्दे च धर्मविषयकत्वस्यान्वयः । शब्दस्य च विषयता व्यापारानुबन्धिनी । ज्ञानस्य परम्परया शब्दरूपधात्वर्थविशेषणत्वात्

---

च सुरवृत्तिव्यापारजन्यंकल्याणंभवत्वित्याकारिका । देशविशेषणेति देशान्तरशब्दस्यहि अन्यदेशोऽर्थः । प्रतियोगित्वान्वयइति तथाच गोवृत्तिर्यो व्रजान्यदेशसञ्चारानुत्पादस्तत्प्रयोजकव्यापारानुकूलकृतिमानितिबोधः । स्वयमूहनीयइति चैत्रवृत्तिव्यापारप्रयोज्योयोगोवृत्तिसञ्चारानुत्पादस्तदधिकरणदेशभिन्नोव्रजइतिबोधइति ॥ गोकुलनाथोपाध्यायास्तु विभागानुत्पादः कर्मानुत्पादो व्यापारश्च रुधेरर्थः व्रजंगांरुणद्धिगोपालइत्यादौ द्वितीययोराधेयत्वमर्थः विभागानुत्पादः कर्मानुत्पादेऽन्वेति तथा च व्रजवृत्तिविभागानुत्पादप्रयोजकोयोगोवृत्तिकर्मानुत्पादस्तत्प्रयोजकव्यापारानुकूलकृतिमान गोपाल इतिबोधः व्रजपदोत्तरद्वितीयायाभेदोऽप्यर्थः तेनगांगांरुणद्धीति न प्रयोगइति पदवाक्यरत्नाकरेप्राहुः । धर्मविषयकत्वस्यान्वयइति तथा च गुरुवृत्तिर्योधर्मविषयक जिज्ञासाविषयकोबोधस्तज्जनकव्यापारानुकूलकृतिमान चैत्रइतिबोधः । चैत्रोमज्जिज्ञासाविषयकज्ञानवान्भवत्वितीच्छया यत्र प्रश्नस्तत्रदोषमाह तथासतियत्रेति। प्रधानकर्मतयेति इदन्तुचिन्तनीयम् सविषयकधात्वर्थस्य विषयतैव प्रधानकर्मत्वमतोगुर्वादीनांन प्रधानकर्मत्वं सम्भवति अतएव साक्षाद्धात्वर्थतावच्छेदकदानाश्रयत्वेऽपि पौरवस्य गौणकर्मत्वोक्तिः सङ्गच्छते इति । ननु शब्दोनसविषयकोऽतआह शब्दस्यचेति । व्यापारानुबन्धिनीति शब्दकार्यस्य बोधस्य

तदाश्रयीभूतगुरोर्गौणकर्मता । धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता ब्रूञश्च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दोर्थः ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः। अजां ग्रामं नयतीत्यादौ ग्रामं भारं वहतीत्यादौ च उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपं प्रापणं धातोरर्थः तत्र क्रियारूपे फले अजाभारादिवृत्तित्वस्यान्वयः । तथा च ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः । अजा ग्रामं नीयते, उह्यते भारो ग्रामं चैत्रेण इत्यादावुत्तरसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थस्तत्र च धात्वर्थस्य तादृशव्यापारस्य जन्यता संबन्धेन तस्य चाश्रयतासंबन्धेन अजाभारादिरूपप्रधानकर्मण्यन्वयः ग्रामादिवृत्तित्वान्वयस्तु संयोग एव एवं च चैत्रकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवानजादिरित्यन्वयबोधः । नच कारकविभक्त्यर्थस्य धात्वर्थएवान्वयनियमात्प्रत्ययोपस्थाप्यसंयोगे कथं ग्रामादिवृत्तित्वान्वय इति वाच्यम् । भूतले घट इत्यादौ घटादिपदार्थेप्यधिकरणसप्तम्यर्थान्वयात्तादृशनियमासिद्धेः । अस्तु वा धात्वर्थतावच्छेदकतावच्छेदकतया भासमाने संयोगएव तदन्वयः । फलव्यापारयोः पृथक्शक्तिमते चाश्रयत्वमेवात्मनेपदार्थः । संयोगावच्छिन्नक्रियारूपधात्वर्थं एव व्यापाररूपधात्वर्थविशेष्यतया आश्रयत्वविशेषणतया चान्वेति तदेकदेशे संयोगएव ग्रामादिवृत्तित्वान्वयः । चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयतावानजादिरित्याकारको बोधः॥ ज्ञानानुकूलशब्दश्च द्रव्यं निरूपयतीत्यादौ धातोरर्थः । तादृशविशिष्टैकार्थस्य एकदेशे ज्ञाने आधेयत्वान्वयबोधे च न द्वितीयायाः साकाङ्क्षता स्वीक्रियते, अपि तु विषयतया अन्वयबोधएवेति शिष्यं द्रव्यं निरूपयतीत्यादिर्नप्रयोगः । यत्तु धात्वर्थो ज्ञानमेव तदनुकूलव्यापारश्च णिजर्थं इति । तदसत् । धातोश्शुराद्यन्तर्गततया स्वार्थएव णिचोविधानात् । अन्यथा निरूपयतीत्यस्य ज्ञापयतीत्यादिसमशीलतया शिष्यं ज्ञापयतीत्यादिवच्छिष्यं निरूपयतीति प्रयोगस्य दुर्वारत्वात् । अजां ग्राम यापयति शिष्यं शास्त्रं ज्ञापयति ब्राह्मणमन्नं भोजयति यजमानं मन्त्रं पाठयति घटं जनयति नाशयतीत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजादिपदोत्तरद्वितीयायाः मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः । गतिबुद्धीत्यादिसूत्रेण कर्तुः

---

सविषयकत्वात् याचितमण्डनन्यायेन शब्दस्यापि सविषयकत्वमितिभावः । तादृशविशिष्टैकार्थस्येति ज्ञानानुकूलशब्दरूपस्य । मुख्यभाक्तसाधारणमिति मुख्यकर्मत्वंकृतिरूपं द्वितीयार्थ इतिभावः । कर्मसंज्ञाविधानादिति अत्रेदमवधे-

कर्मसंज्ञाविधानात् । गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वं चाश्रयत्वमेव गलाधः

यम् णिजन्तस्य सनाद्यन्ताधातवइत्यनेन धातुत्वेणिच् प्रकृतिधात्वर्थस्य फलतया तद्वतोऽजादेः कर्तुरीप्सितमित्यनेनैव कर्मसंज्ञासिद्धौ गतिबुद्धीतिसूत्रम् एषामेवणौकर्ता कर्मेति नियमार्थं तेन पाचयत्यन्नं यज्ञदत्तेन देवदत्तइत्यादौ यज्ञदत्तस्य न कर्मत्वम् तदुक्तं हरिणा 'गुणक्रियायां स्वातन्त्र्यात्प्रेरणेकर्मतांगतः । नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते, इति । गुणक्रियायाम्, णिच् प्रकृतिधात्वर्थे । स्वातन्त्र्यात्, साक्षादाश्रयत्वात्. स्वधर्मेण, स्वधर्मःस्वातन्त्र्यं तदभिधायकेन तृतीययेति यावत्, प्रेरणे णिजर्थे, कर्मतांगतः, कर्मतांगतोऽपिनियमात्, एषामेव णौ कर्त्ताकर्मेतिज्ञापनादिति तदेतत्प्राचीनमतम् । नवीनास्तु गतिबुद्धीति सूत्रं विधायकमेव अन्यथा परत्वात् णिज्विधायक हेतुमति चेतिसूत्रे हेतुपदेन कर्तृ प्रयोजकस्यैव विवक्षिततया कर्तृसंज्ञाम्विनाणिचोऽनुत्पत्त्या उपजीव्यत्वात् पूर्वप्राप्तिकत्वेनान्तरङ्गत्वाच्च कर्तृसंज्ञायावलवत्वात् शत्रूनगमयत्स्वर्गमित्यादौ शत्रवा दिपदोत्तरतृतीयापत्तेः तदुक्तमभियुक्तैः, परत्वादन्तरङ्गत्वादुपजीव्यतया तथा । प्रयोज्यस्यास्तुकर्मत्वंगत्यादेर्विधितोचिता, इति । कर्तृत्वमस्तु तथापि 'गत्यादेः, गतिबुद्धीतिसूत्रस्य विधिता विधायकता । गत्यादि सूत्रंहिकर्तृसंज्ञाऽपवादकमिति नचैवंशत्र्वादेः कर्मसंज्ञया कर्तृसंज्ञाया बाधे स्वर्गादेः कर्मेप्सिततया कर्तुरीप्सितत्वाभावात्कर्मसंज्ञा न स्यादिति वाच्यम् यतः कर्तुरितिसूत्रे कर्तृशब्दो धातूपात्तव्यापाराश्रयार्थकोनतु कर्तृसंज्ञाविशिष्टार्थकोऽतोनैषदोषः नच गतिबुद्धीतिसूत्रस्य विधायकत्वे पाचयत्योदनं देवदत्तेनेत्यादौ कर्तुरित्यनेन देवदत्तस्य कर्मत्वापत्तिरिति वाच्यम् परया कर्तृसंज्ञया कर्मसंज्ञायावाधात् नहि कर्तुरीप्सिततममितिसूत्रं गतिबुद्धीतिसुत्रस्येव कतृसंज्ञाऽपवादकमिति वदन्ति । अत्राहुर्विवेचकाः प्राचीनमतेऽपिपरया कर्तृसंज्ञाया न कर्मसंज्ञायावाधः प्रधानव्यापाराश्रयस्यैवकर्तृसंज्ञाविधानात् एवञ्चणिजन्तस्य धातुत्वेन प्रधानव्यापाराश्रयोनशत्र्वादिरतोनतस्य कर्तृसंज्ञाप्रसक्तिः गत्यादिसूत्रेच कर्तृशब्दो न कर्तृसंज्ञा विशिष्टार्थकः किन्तुधातूपात्तव्यापाराश्रयार्थकोऽतोन कर्मसंज्ञा कर्तृसंज्ञामुपजीवति एवं हेतुमतिचेति सूत्रस्य कर्तुः प्रयोजको हेतु रिति व्याख्यानेऽपि कर्तृशब्दो निरुक्त व्यापाराश्रयार्थक एव नतु कर्तृसंज्ञाविशिष्टार्थकोऽतोनणिजुत्पत्तौकर्तृसज्ञाऽपेक्ष्यतेऽतोन कर्मसंज्ञा कर्तृसंज्ञामुपजीवति एवं कर्तुरिति सूत्रे कर्तशब्दस्य कर्तृसंज्ञाविशिष्टार्थकत्वाभावादेवच न कर्तृसंज्ञाया अन्तरङ्गत्वमपीति नचैवं चैत्रेण पाचयति मैत्रइत्यादौ चैत्रस्य प्रधानव्यापारानाश्रयतया कर्तत्वाभावात्तृतीयाऽनुपपत्तिरितिवाच्यम् करणार्थकतृतीयोपपत्तेः भवतुवा प्रधानीभूतस्य धात्वर्थस्याश्रयः कर्त्ता तत्रधातुर्भूवादिरणिजन्तोणिजाद्यन्तश्च तथा चाणिजन्तधात्वर्थव्यापाराश्रय तयाप्रयोज्य कर्तृबोधक चैत्रादिपदात्ततीया नन्वेवंगत्यादि सूत्रस्य नियमार्थत्वेविधायकत्वाभावात् शत्रूनगमयत्स्वर्गमितिवत् शत्रूभिरगमयत्स्वर्गमित्यपि प्रयोगः स्यादिति चेन्न गत्यादिसूत्रस्य द्विविधनियमपरत्वात् तत्रैकः पूर्वोक्तएव नियमोऽपरस्तु गत्यादीनांणौकर्त्ताकर्मैवेत्यवधेयम् ॥ कर्तृत्वंपृथक्कृत्यदर्शयति गतिज्ञा-

संयोगानुकूलक्रियानुकूलव्यापाररूपभोजनकण्ठताल्वाद्यभिघातरूपपाठनिरूपितं च च तदनुकूलकृतिमत्त्वं नाशनिरूपितं च प्रतियोगत्वम् तस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः। नव्यमते च यत्राश्रयत्वं कर्तृत्वं तत्राधेयत्वं द्वितीयार्थः यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वं यत्र प्रतियोगित्वं तत्रानुयोगित्वं तेषां चाश्रयतासंबन्धेनैव धात्वर्थेन्वयः गत्यर्थादिभ्योऽन्यत्र च णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदाद् न द्वितीया,तादृशकर्त्तुः कर्मतातिदेशाविषयत्वात्। तेन पाचयत्योदनं सहायेनेत्यादय एव प्रयोगाः,न तु पाचयत्योदनं सहायमित्यादयः। केचित्तु पाकादिकर्त्तुः पाकादिकर्मत्वविरहेऽपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादेः पाचयत्योदनं सहायमित्यादयः प्रयोगा अपि साधवः। अतएवाजिग्रहत्तं जनको धनुस्तदित्यादयो भक्तिप्रयोगाः। गतिबुद्धीत्यादिसूत्रं च नियमपरतया गत्यर्थधातुयोगे कर्तृप्रत्ययासाधुत्वज्ञापकम्। तेन पाचयत्योदनं सहायेनेत्यादिवद् अजया ग्रामं यापयतीत्यादयो न प्रयोगा इत्याहुः। एषामयमाशयः। हेतुमति चेत्यनुशासनात् णिजर्थो हेतुकर्तृत्वम् तच्च स्वतन्त्रकर्तृप्रेरणा अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा, कर्तृत्वं कचित्प्रयत्नः क्वचिदाश्रयत्वादिकं, यादृशधातूत्तराख्यातेन यादृशकर्तृत्वं बोध्यते तदुत्तर णिच्प्रत्ययेन तादृश कर्तृत्वनिर्वाहकव्यापारो बोध्यते। अतएव पाचयतीत्यादौ पाकादिकृतिनिर्वाहकः, ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः; नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहको व्यापारः प्रतीयते। निर्वाहकत्वं च स्वरूपसंबन्धवि-

---

नेत्यादिता। तस्यच कर्तृत्वस्य च। निरूपकतासम्बन्धेनेति तथाच अजांग्रामं यापयतीत्यत्र अजानिष्ठकर्तृतानिरूपकोयोग्रामवृत्तिसंयोगजनकव्यापारस्तदनुकूलव्यापारवान् चैत्रइतिबोधः एवंघटं नाशयतीत्य घटनिष्ठकर्तृतानिरूपक नाशानुकूलव्यापारवानितिबोधः एवं सर्वत्रबोध्यम्। यत्रानुकूलकृतिमत्त्वमिति कर्तृत्वमितिशेषः। तत्रकृतिजन्यत्वमिति द्वितीयार्थ इति शेषः। प्रतियोगित्वमिति कर्तृत्वमिति शेषः। अनुयोगित्वमिति द्वितीयार्थइतिशेषः। तेषाञ्चेति आधेयत्वकृतिजन्यत्वानुयोगित्वानाञ्चेत्यर्थः। तथाच अजावृत्तिर्यो ग्राम वृत्तिसंयोगजनको व्यापारस्तदनुकूलव्यापारवानिति बोधः ब्राह्मणकृति जन्योयोग गलाधेः संयोगानुकूलव्यापारानुकूलव्यापारस्तदनुकूलव्यापार वानिति बोधः यदा सहाय वृत्तिर्यः पाकानुकूलव्यापार स्तदनुकूलव्यापार वानिति बोधस्तदा पाचयत्योदनं सहायमिति प्रयोगः यदातु सहायकर्तृकोयः पाकस्तदनुकूलोयो व्यापारस्तदनुकूलव्यापारबोधस्तदा पाचयत्योदनं

शेषः। नतु जनकत्वम्। अतो न नाशयतीत्यादावनुपपत्तिः। एवं च ण्यन्तधातु प्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव निर्वाह्यस्यैव फलत्वात्। तदाश्रयतया स्वतन्त्रस्य कर्तुः कर्मता, तादृशफलविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायमित्यादयः प्रयोगाः यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितं तदा पाचयत्योदनं सहायेनेत्यादयः। अथ यत्र चैत्रमैत्रोभयकर्तृकएक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्ते मैत्रेणायं पाचयतीति प्रयोगापत्तिरिति, तत्रापि णिजर्थविशेषणधात्वर्थकर्तृत्वएवतृतीयान्तार्थमैत्रादिवृत्तित्वस्यान्वयोवाच्यः। एवंच मैत्रंपाचयतीत्यादिवाक्यजन्यबोधावैलक्षण्याद् द्वितीयातृतीययोस्तात्पर्यभेदेन व्यवस्थाया न संगतिरिति चेन्न। अगत्या तत्र पाकादिविशेषणकृतेः पारतन्त्र्येण व्यापारविशेषणीभूतणिजर्थकृतावभेदान्वयमुपगम्योक्तातिप्रसङ्गस्य वारणीयत्वात्। पदार्थैकदेशे कृतौ पाकादेरिव कृतेरप्यन्वयो व्युत्पत्तिवैचित्र्यात्। वस्तुतः कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः विशिष्टलाभोऽन्वयबलात्। केचितु, अनुकूलव्यापार एव णिजर्थः, तदन्वयिनी गमनभोजनक्रियैव धात्वर्थतावच्छेदकं फलं, तत्सं बन्धिनस्तादृशक्रियाकर्तुर्ण्यन्तकर्मता। तादृशक्रियासंबन्धश्चाश्रयत्वकृतिमत्त्वान्यतरो ग्राह्यः। अतो गमनादिसंबन्धिकालादौ नातिप्रसंग इत्याहुः। अत्र च तादृशर्मतावाचकपदात् कदाचिद्द्वितीया कदाचित्तृतीया इत्यत्र नियामकाभावः। तादृशपदोत्तरयोस्तयोस्तुल्यार्थकतया विवक्षाभेदरूपनि-

---

सहायेनेतिप्रयोग इत्याह तादृशफलविशेषणतयेत्यादिना। अर्थेति पाकादि विशेषणतया सहायादिकर्तृत्वस्य विवक्षितत्वे इति शेषः। प्रयोगापत्तिरिति मैत्रकर्तृकोयः पाकस्तदनुकूलाया चैत्रनिष्ठाकृतिस्तन्निर्वाहकरूपव्यापारस्य यज्ञदत्ते सत्वात तत्पाकस्योभयकर्तृकत्वादित्यर्थः। तत्रापीति इतः पूर्वम् अतस्त द्वारणायेति पुरणीयम। अन्वयोवाच्यइति तथाच मैत्रवृत्तिर्यापाकानुकूलाकृति स्तन्निर्वाहकव्यापार एव प्रतीयेत तस्यच प्रकृते वाधितत्वान्नापत्तिरिति भावः तथाच मैत्रेणपाचयतीत्यादौ मैत्रं पाचयतीत्यादौच मैत्र वृत्तिर्यापाकानुकूला कृतिस्तन्निर्वाहकव्यापारस्यैव प्रतीत्याऽर्थभेदाभावात् द्वितीयातृतीययोर व्यवस्था प्रसङ्गइत्यर्थः। इदन्तु चिन्तनीयम् मैत्रंपाचयतीत्यादि प्रयोगएवनभ वति किन्तु मैत्रेण पाचयतीप्येव गतिबुद्धीतिसूत्रस्य दर्शितद्विविधनियमपरत्वा दिति। अगत्येत्यादि तथाच मैत्रकर्तृकोयः पाकस्तदनु कूलाकृतिर्मैत्रनीयैवग्राह्या न तु चैत्रीया मैत्रकृति चैत्रकृत्योर्भेदादिति। पदार्थैकदेश इति कर्तृत्वनिर्वाहक व्यापाररूपणिजर्थघटकेहुत्यर्थः। अन्वयवलादिति तथाचनपाकादेरेकदे शान्वय

यामकाभावादिति तु चिन्तनीयम् । अजा ग्रामं याप्यते चैत्रेणेत्यादौ चैत्रकर्तृक-व्यापारनिर्वाह्यं यद्ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयोऽजा इति बोधः । तत्र संयोगावच्छिन्नक्रिया धातुलभ्या, संयोगे ग्राममित्यादिद्वितीयान्तार्थग्रामादि-वृत्तित्वान्वयबलात् ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते तादृश्या णिजर्थक-र्तृत्वेऽन्वयः । कर्माख्यातादिसमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रिया-न्वितकर्तृत्वं तृतीयान्तार्थचैत्रादि कर्तृत्वविशेषित व्यापाररूपापरणिजर्थे निर्वाह्य-त्वसंबन्धेन विशेषितम् अजादिरूपकर्मीभूतकर्तृ विशेषणीभवदाख्याताश्रयत्वे वि-शेषणतया भासते । ये तु गतिबुद्धीत्यादिसूत्रस्य संज्ञाविधायकत्वं वर्णयन्ति तेषा-मयमाशयः । व्यापार एव णिजर्थः तत्र धात्वर्थक्रियायाः स्वकर्तृत्वनिर्वाहकत्वं संसर्गः । अतो न कर्त्तुः कर्मत्वं सूत्रान्तरप्राप्तम् । याप्यते ग्राममजा इत्यादौ खनि-र्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापार विशेषितधात्वर्थः कर्तृत्वेऽन्वेति तच्चाश्रय त्वसंबन्धेन अजादौ विशेषणतया भासते । तादृशव्यापारे तृतीयान्तार्थस्य चैत्रा-दिकर्तृत्वस्य धात्वर्थैकदेशे संयोगादिफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य वि-शेषणतया भानं ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः । तत्रच तस्य वृत्तिः क्लृ प्तैव । तच्चा उक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते । न च यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्यान्वयबोधोपगमे गम्यते चैत्र इत्यतोऽपि गमनकर्त्ता चैत इत्यन्वयबोधः स्यादिति वाच्यम् । ण्यन्तोत्तरस्य-क्समभिव्याहृताख्यातस्यैव कर्तृत्वान्वयबोधनियामकत्वात् । अथवमजा याप्यते इत्यादौ कर्तृत्वस्याख्यातबोध्यत्वे कर्त्तरिशबित्यपवादविषयतया यकोऽसाधुतापत्तिः न च यादृशधातुत्तरं यत्सार्वधातुकं विहितं तादृशधात्वर्थनिरूपितकर्तृत्वस्य तेन विवक्षाभेव कर्त्तरि शबित्यादेः शबादिविधायकत्वात् , प्रकृते ण्यन्तसमुदायस्य उत्तरमेवाख्यातं तेन तदर्थनिरूपितकर्तृत्वं च न बोध्यते अपि तु ण्यर्थमिशेमिन-धात्वर्थान्वितकर्तृत्वमेवेति न तादृशापवादविषयतेति वाच्यम् । कर्माख्यातस्थले विशेष्य विशेषणभाववैपरीत्येन व्यापार विशेषितक्रियाया अपि ण्यन्तधात्वर्थ त्वात् । मैवम् । लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव कर्त्तरिशबित्यस्य

---

इतिभावः । अतोनेति धात्वर्थतावच्छेदकफलशालिन एवकर्तुरिति सूत्रेण कर्मसंज्ञाविधानान्नतस्य प्राप्तिस्तथाच कर्तरितृजीयायाअपवादकं गतिबुद्धीति सूत्रं विधायकमेवेति भावः । तत्रचतस्येति कर्तृत्वार्थे आख्यातस्य चेत्यर्थः ।

शब्दविधायकता, अत्र कर्मत्वसमशीले कर्तृत्वे आत्मनेपदत्वेन शक्तिः। वस्तुतः फलव्यापारयोः पृथक् धात्वर्थतामते गच्छतीत्यादाविव गम्यते इत्यादावपि लकारेणाश्रयत्वरूपकर्तृत्वाभिधाने यगनुपपन्न इति, परस्मैपदसमभिव्याहृतधातुना यादृशविशिष्टोऽर्थः प्रत्याय्यते, तादृशविशिष्टार्थान्वितकर्तृत्वाभिधानमेव शक्तिविषयः। एवंच प्रकृतेऽपि नानुपपत्तिरिति ध्येयम्। ग्रामो याप्यते, अर्थी बोध्यते, इत्यादौ भावनाविशेष्यतया ग्रामादेर्भानेऽपि गमतादिकर्तुः कर्मत्वविवक्षायां तस्यैवाख्याता र्थविशेष्यतया बोधोऽव्युत्पन्नः। ण्यन्ते कर्तुश्च कर्मण इत्यनुशासनादतोऽजां ग्रामो याप्यते शिष्यमर्थी बोध्यते इत्यादयो न प्रयोगाः। ग्रामो याप्यते, अर्थी बोध्यते, इत्यादौ फलविषयत्वादिरूपं मुख्यभाक्तसाधारणं कर्मत्वमेवाख्यातार्थः। फलव्यापारयोः पृथक्धात्वर्थतामते आश्रयत्वमेवाख्यातार्थः। धात्वर्थव्यापारविशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानेऽपि, ण्यर्थव्यापारस्य जन्यतासंबन्धेनैव धात्वर्थक्रियाज्ञानादिविशेषणत्वं पूर्ववदेव। अजां ग्रामो याप्यते इत्यादिकस्तु न प्रयोगः द्वितीयया कर्मत्वबोधने धात्वर्थव्यापारविशेष्यतया ण्यर्थबोधस्य सामग्र्याः प्रयोजकत्वात्। यवादिसमभिव्याहृतस्थले च धात्वर्थविशेषणतयैव ण्यर्थस्य बोधात्, ण्यन्तधातोः सकर्मकत्वे तदुत्तरभावाख्यातस्य भावे चाकर्मकेभ्य इत्यनुशासनेनासाधुत्वाच्च न तादृशप्रयोगः। ग्रामं याप्यते इति भावाख्याते प्रयोगस्त्विष्ट एव ण्यन्तकर्मासमभिव्याहारात्। एकदा कर्तृत्वकर्मत्वबोधकताया आख्यातस्याव्युत्पन्नतया अजा ग्रामो याप्यते इत्यादयो प्रयोगाः। एवं तण्डुलः सहायेन पाच्यते, चैत्रेणेत्यादौ धात्वर्थे सहायादिकर्तृत्वस्य तद्विशेषणण्यर्थव्यापारे तृतीयान्तार्थस्यबोधः। शेषं पूर्ववदिति दिक्। ग्रामं गच्छतीतिवत्स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थ इष्यते। तस्य च धात्वर्थेऽन्वयः। परत्वे चैकदेशेऽपि आकाङ्क्षावैचित्र्यात् प्रकृत्यर्थस्य प्रतियोगितयान्वयः। एवं

---

तच्चेति कर्तृत्वञ्च। प्रथमान्तार्थस्येत्यादि तथाच चैत्रकर्तृकव्यापारविशिष्टग्रामवृत्तिसंयोगजनकव्यापार कर्तृत्वाश्रयोऽजेति बोधः। यगनुपपन्नइति पतदग्रेऽत इतिपूरणीयम्। ननुगमनादिक्रियाजन्यफलस्य संयोगादिरूपस्य ग्रामादाविव स्वस्मिन्नपिसत्त्वात् स्वंगच्छतीतिकुतोन प्रयोग इत्यत आह ग्रामंगच्छतीतिवदिति। परत्वेचेति परत्वं भेदः। एकदेशेऽपीति परसमवेतत्वघटकेऽपीत्यर्थः। ननु शब्दस्यसर्वेऽर्थाः सर्वत्रभासन्ते इतिन नियमः नहि हर्यादिशब्दस्य सूर्याश्वादयः सर्वेऽर्थाः सर्वत्र प्रतीयन्ते किन्तु कश्चिद्विवक्षित एकएवार्थः प्रतीयते तथाच द्वितीयाया आधेयत्वपरसमवेतत्वयोरर्थयोर्मध्येऽयोग्यतया परसमवे

च ग्रामं गच्छति चैत्र इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः । स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वस्य बाधात्स्वं गच्छतीति न प्रयोगः। यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेऽपि तादृशक्रियाश्रयतायाः स्वस्मिन् बाधाद् मल्लः स्वं गच्छतीति न प्रयोगः। नच स्वनिष्ठसंयोगनकस्वसमवेतक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यतया तदभानेप्यबाधितं स्वनिष्ठसंयोगजनकत्वं विषयीकृत्य शाब्दबोधसंभवात् तदर्थमात्रतात्पर्येण स्वं गच्छतीति प्रयोगो दुर्वार एवेति वाच्यम् । परसमवेतत्वाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तद्बोधे तद्भासकसामग्र्या अप्यपेक्षणीयत्वात् । अथ स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् स्वं गच्छतीति प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव भेदेऽन्वयो वाच्यः तथा च चैत्रो द्रव्यं गच्छति, मल्लो मल्लं गच्छतीत्यादिवाक्यस्याप्रमाणतापत्तिः। चैत्रमल्लादिनिष्ठक्रियायां प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नासमवेतत्वात्। तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेनान्वयोपगमासंभवात् । उक्तयुक्त्या संबन्धघटकोपस्थितेरपि शाब्दबोधेऽपेक्षितत्वात् । एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंस-

---

तत्वस्याभानेऽपि आधेयत्वस्यभाने बाधकाभावात् स्वंगच्छतीतिप्रयोगापत्तिस्तदवस्थेत्याशंकते नचेति । तद्बोधे द्वितीयया फलस्याधेयत्वस्य वा बोधे। तद्भासकसामग्र्याइति परसमवेतत्वभासकसामग्र्याः योग्यताज्ञानादिघटिताया इत्यर्थः। अपेक्षणीयत्वादिति एवञ्च परसमवेतत्वभासकयोग्यताज्ञानादिघटितायाः सामग्र्या अभावान्न परसमवेतत्वाविषयकस्य तादृशबोधस्य प्रसङ्ग इतिभावः । नन्वेतद्दोषवारणाय द्वितीयाप्रकृत्यर्थस्य स्ववृत्तितत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयोऽस्तु तथाचोक्तस्थले गमनकर्मीभूतद्रव्यव्यक्तिचैत्रव्यक्त्योरेवंगमनकर्ममल्लव्यक्तिगमनकर्तृमल्लव्यक्त्योश्च भेदान्नानुपपत्तिरत आह तत्तद्व्यक्तित्वेत्यादि ननु सम्बन्धस्य तद्घटकस्य चानुपस्थितस्यापिभानान्न तद्व्यक्तित्वोपस्थितेरपेक्षेत्यतआह उक्तयुक्त्येत्यादि तात्पर्यज्ञानस्य तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मावच्छिन्नप्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यताकबोधविषयकत्वेनैव हेतुत्वम्वाच्यं तत्र सम्बन्धस्यापि विशेषणतया भानात्तस्य तद्घटकस्य चोपस्थितिरवश्यमपेक्ष्यते इत्याशयः ॥ नन्वपूर्ववाक्यार्थस्थले वाक्यार्थ

गत्वे मानाभावात् प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात् अन्वयितानवच्छेदकावच्छिन्नप्रतियोगितायाः संबन्धत्वासंभवाच्चेति चेत्तर्हि, क्रियान्वयि भेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थोऽस्तु । भेदे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वय इति न काचिदनुपपत्तिः न चैवमपि विहगो भूमिं प्रयातीतिवद्विहगो विहगं गच्छतीति प्रयोगो दुर्वारः विहगनिष्ठभूमिसंयोगजनकतत्क्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया विहगनिष्ठभेदप्रतियोगितावच्छेदक-

---

विषयकज्ञानस्य पूर्वमजननात् निरूप्यनिरूपकभावापन्नविषयत्वग्राहकानुव्यवसायस्यासम्भवेन तद्विषयतानिरूपितापरविषयत्वोपस्थितेरभावाद्विशिष्टवशिष्ट्यावगाहितात्पर्यज्ञानं न सम्भवति अपितु तत्तत्पदार्थज्ञानजन्यानुव्यवसायगृहीत तत्तद्विषयत्वोपस्थितिमूलकं विशेष्येविशेषणंतत्रापिचविशेषणान्तरमितिरीत्यैववक्तव्यम् एवमपि यद्धर्मावच्छिन्नप्रतियोगिताकाभावज्ञानं यस्य पूर्वनजातं तस्य-तद्धर्मावच्छिन्नप्रतियोगित्वाग्रहेण विशेष्ये विशेषणमितिरीत्याऽपि तात्पर्यज्ञानस्य हेतुता निर्वक्तुमशक्या किंतु इदम्वाक्यमेतद्विषयताविशिष्टबोधपरमित्याकारकमेव तात्पर्यज्ञानं कारणम्वाच्यम् वैशिष्ट्यश्च स्वनिरूपितसंसर्गतानिरूपिततत्तद्धर्मावच्छिन्नविषयताकत्वसम्बन्धेन एवञ्च संसर्गस्यानुपस्थितस्यापिभानान्न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्योपस्थित्यपेक्षेत्यत आह एकधर्मावच्छिन्नेत्यादि । मानाभावादिति अतएव घटवतितत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन घटविशिष्टाभावस्य सत्त्वेऽपि तत्र घटोनास्तीति बुद्धेर्न प्रामाण्यम् एवञ्च प्रकृते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिता न द्रव्यत्वावच्छिन्नस्य संसर्गो भवितुमर्हतीति भावः ॥ नन्वस्तु द्रव्यत्वाद्युपलक्षितस्यैव भेदे विशेषणतयाभानं तथा च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितायाअपिसंसर्गत्वं सम्भवत्येवेत्यत आह प्रतियोगिविशेषितेति । अन्वयितानवच्छेदकेति एवञ्च द्रव्यंगच्छतीत्यादौ अन्वयितानवच्छेदकं यत्तत्तद्व्यक्तित्वं तत्तदवच्छिन्नप्रतियोगितायानसंसर्गत्वमितिभावः॥ ननु नञभिलप्यमानाभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमेऽपि द्वितीयार्थभेदबुद्धेरुपलक्षितवैशिष्ट्यावगाहित्वमेवोपेयमतो द्रव्यंगच्छतीत्यादौ तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया अपि संसर्गत्वमुपपद्यत एवेतिचेन्न तथासति स्वंगच्छतीतयस्यापि प्रामाण्यापत्तेः स्वस्मिन्नपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदस्य सत्त्वादतो द्वितीयार्थभेदबुद्धेरपि विशिष्टवैशिष्ट्यावगाहित्वमत्रोपेयम् । क्रियान्वयीति एतच्च अवच्छेदकत्वस्यपरिचायकम् । भेदप्रतियोगितेति तथाच चैत्रसंयोगानुकूलव्यापारवद्भेदासत्त्वात्चैत्रवृत्तिव्यापारे न चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वमतः चैत्रः स्वंगच्छतीत्यस्य नापत्तिर्नवा चैत्रोद्रव्यंगच्छतीत्यादेरनुपपत्तिरिति । संयोगस्येति अस्य अन्वयोपगमादित्यनेनान्वयः। स्वाश्रयनिष्ठेति स्वपदेन संयोगोग्राह्यः।

विहगवृत्तिसंयोगजनकक्रियाश्रयत्वस्याबाधितत्वादितिवाच्यम् । विहगो विहगं गच्छतीत्यादौ विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगस्य क्रियायां जनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेनाऽन्वयोपगमात्, विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वेन तज्जनकतासंबन्धेन तत्संयोगवत्त्वेऽपि विहगवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावान्नोक्तोभयसंबन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसङ्गात् । एवं सति परसमवेतत्वं संबन्धघटकमेव न तु द्वितीयार्थं इति चेत् का क्षतिः । विहगो विहगेन गम्यते इत्यादावपि जन्यत्वस्वावच्छिन्नभेदसामानाधिकरण्योभयसंबन्धेन क्रियायाः संयोगेऽन्वय इष्यते तत्तत्क्रियावच्छिन्नभेदवति भूम्यादावेव तादृशभेदसामानाधिकरण्यसंबन्धेन तत्तत्क्रियाविशिष्टसंयोगादिमत्त्वोपगमात्, तत्र तत्क्रियाश्रयविहगे तद्बाधेन नातिप्रसङ्ग इति ध्येयम् ।

ज्ञानादिरूपसविषयकवस्त्वभिधायकधातुसमभिव्याहृतद्वितीयायाः प्राचीनमते निरूपकतासंबन्धेन धात्वर्थान्वयि विषयत्वमर्थः । तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया घटं जानाति पटं नेत्यादावनुपपत्तेस्तत्र विषयित्वार्थकत्वमेव नवीना उपवर्णयन्ति । तत्र च प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन तस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः । घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव । विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिरिति सांप्रदायिकाः । वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षया

---

ज्ञानादिरूपसविषयकेति आदिपदादिच्छाप्रयत्नद्वेषभावनाख्यसंस्काराः परिगृह्यन्ते । अनुपपत्तेरिति निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपटवृत्तिविषयत्वाभावविशिष्टं निरूपकत्वसम्बन्धेन घटवृत्तिविषयताविशिष्टंयज्ज्ञानं तदाश्रयएव प्रकृतवाक्याद्बोधनीयः सच न सम्भवति निरूपकत्वस्य वृत्त्यनियामकतया. तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेरित्यर्थः । विषयित्वार्थकत्वमेवेति यथा विषयत्वं स्वरूपसम्बन्धविशेषोऽखण्डोपाधिर्वा तथा विषयित्वमपि एवं यथाप्रकारत्वविशेष्यत्वावच्छेदकत्वसंसर्गत्वविधेयत्वोद्देश्यत्वविशेषणत्वानि विषयताविशेषास्तथाप्रकारित्वादीन्यपि । नच विषयतादिनिरूपकत्वमेव विषयित्वादिर्कामति कुतोनोपेयत इतिवाच्यं विषयित्वादिनिरूपकत्वमेव विषयत्वादिकंकुतोनोपेयमिति पर्यनुयोगस्य तुल्यत्वादित्यवधेयम् । तत्रच विषयित्वेच । तस्यच विषयित्वस्यच । अन्वयइति तथाच चैत्रोघटं जानातीत्यादौ

आधेयतात्वाद्यपेक्षया चागुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमकं दुर्लभम्। एकस्मिन् प्रयोगे भूयस्त्वमप्यशक्यनिर्णयमिति तत्रापि शक्तिः सिद्ध्यतीत्यवधेयम्। चैत्रेण ज्ञायते घट इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते। चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयित्वं, तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः उपनीतसौरभादिविषयकसुरभिचन्दनमित्याद्याकारकचाक्षुषादिदशायां सौरभं पश्यतीति, सौरभं दृश्यते इत्याद्यप्रयोगात्। अथैवं पुष्पं जिघ्रतीत्यादिप्रयोगानुपपत्तिः घ्राणजप्रत्यक्षस्य पुष्पाद्यंशे लौकिकत्वविरहात्। तादृशधातुयोगे विषयित्वादिसामान्यस्य कर्मप्रत्ययार्थत्वे गन्धसाक्षात्कारे उपनयमर्यादयाकाशादिभाने आकाशं जिघ्रतीतिप्रयोगप्रसगेन तत्रापि लौकिकविषयिताया एव कर्मप्रत्ययार्थतयोपगन्तव्यत्वादिति चेन्न। घ्राधातोर्हि गन्धलौकिकप्रत्यक्षत्वं शक्यतावच्छेदकं, घ्रा गन्धोपादान इत्यनुशासनात् तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वमेवार्थस्तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैकदेशेनान्वयः। एवं च पुष्पं जिघ्रतीत्यादितः पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानित्याकारक एव शाब्दबोधो न तु पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इत्याकारक इति नानुपपत्तिः। न चैवं सविषयार्थबोधकधातुसमभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमभङ्गप्रसङ्ग इति वाच्यम्। विषयानवच्छिन्नतादृशवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्यैव तदर्थकत्वनियमात्। अस्य च गन्धात्मकविषयावच्छिन्नप्रत्यक्षवाचकतया तादृशनियमस्याबाधितत्वात्। न च घ्राधातुसमभिव्याहृतद्वितीयाया गन्धान्विताधेयत्वार्थकत्वे आमोद-

---

घटनिरूपितविषयितावज्ज्ञानाश्रयश्चैत्रइतिबोधः। अगुरुतयेति संयोगत्वं यथा जातिरूपतयाऽखण्डानुगतोधर्मस्तथा विषयितात्वमप्यखण्डोपाधिरूपतयाऽनुगत एकएव धर्मइतिभावः। उपनीतेति ज्ञानलक्षणाप्रत्यासत्तिरुपनयस्तज्जन्यज्ञानविषयउपनीतः। त्वक्चक्षुर्मनसामेवेन्द्रियाणां द्रव्यग्राहकतया पुष्पस्य घ्राणेन्द्रियागोचरत्वादाह लौकिकत्वविरहादिति पुष्पस्यचाक्षुषंगन्धस्यघ्राणजंत्वेकम्प्रत्यक्षं न सम्भवति चाक्षुषत्वघ्राणजत्वयोः सांकर्यप्रसङ्गात् किंतु पुष्पस्यचाक्षुषप्रत्यक्षात्मकज्ञानलक्षण प्रत्यासत्तिकालेगन्धस्यघ्राणेन्द्रियसन्निकर्षे पुष्पांशेऽलौकिकं गधांशे लौकिकंप्रत्यक्षमुत्पद्यते इतिभावः। उपनयमर्यादया ज्ञानलक्षणप्रत्यासत्या। व्युत्पत्तिवैचित्र्येणेति एकदेशानन्वयनियमे घ्राधातुजन्योपस्थितिविषयीभूतगंधातिरिक्तत्वनिवेशेनेत्यर्थः। कर्मप्रत्ययस्येति द्वितीयायाइत्यर्थः। विषयानवच्छिन्नेति विषयाविशिष्टेत्यर्थः। तादृशवस्त्वभिधायकेति सविषयकवस्त्वभिधायकेत्यर्थः। तदर्थकत्वनियमात्

मुपजिघ्रतीत्यादेरनुपपत्तिः गन्धविशेषरूपामोदपदार्थाधेयत्वस्य गन्धे बाधादिति वाच्यम् । विषयावच्छिन्नप्रत्यक्षार्थकघ्राधातुसमभिव्याहृतद्वितीयाया एव आधेयतार्थकत्वनियमात् । तत्र विषयानवच्छिन्नस्यैव प्रत्यक्षविशेषस्य लक्षणया धात्वर्थतोपगमेन विषयिताया एव तदर्थत्वात् । वस्तुतस्तुपुष्पं जिघ्रतीत्यादौ समवायावच्छिन्नाधेयत्वसंसर्गावच्छिन्नप्रकारतैव द्वितीयार्थस्तस्याश्च गन्धनिष्ठलौकिकविषयताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयतायां निरूपितत्वसंबन्धेनान्वयः । तेन इदानींपुष्पेगन्ध इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वेऽपि तादृशप्रत्यक्षदशायां न कालं जिघ्रतीत्यादिप्रयोगः । तादृशज्ञानीयगन्धादिविषयतायां तादृशकालादिप्रकारतानिरूपितत्वविरहात् । अत एव " तदाननं मृत्सुरभि क्षितीश्वरो रहः समाघ्राय न तृप्तिमाययौ " । " आघ्रातवान् गन्धवहं सुगन्धमि" त्यादौ च उपाधिनिष्ठगन्धग्रहतात्पर्येणैव जिघ्रतेः प्रयोगात् । तादृशगन्धे च आननगन्धवहादि-

---

विषयित्वार्थकत्वनियमात् । समवायावच्छिन्नेत्यादि समवायसम्बन्धावच्छिन्नं यदाधेत्वं तत्सम्बन्धावच्छिन्नप्रकारतेत्यर्थः । कालंजिघ्रतीत्यादीति द्वितीयायाः केवलाधेयत्वार्थकत्वे घ्राधातोर्गन्धलौकिकप्रत्यक्षार्थकत्वे च कालवृत्तिगन्धलौकिकप्रत्यक्षवानिति प्रतीतिः स्यात् तस्या अबाधितविषयकत्वेन तज्जनकस्य कालंजिघ्रतीतिवाक्यस्य प्रामाण्यापत्तिरिति भावः । तादृशकालादीति कालवृत्तिर्या समवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारता तन्निरूपितत्वविरहादित्यर्थः । द्वितीयायाश्चाधेयत्वार्थकत्वे घ्राधातोर्गन्धविषयकलौकिकप्रत्यक्षार्थकत्वेच भक्षितमृत्समवेतगन्धस्यानने गन्धमात्रस्यचवायौ समवायेन वृत्तित्वविरहात् आननवृत्तितादृशगन्धविषयकलौकिकप्रत्यक्षबोधने तदाननमित्यादिवाक्यस्य वायुवृत्तिगन्धलौकिकप्रत्यक्षबोधने आघ्रातवानित्यादिवाक्यस्य चाप्रामाण्यापत्तिरित्याह अतएवेत्यादि वस्तुतस्त्वित्याद्युक्तपक्षेतु आननेऽयंगन्धः वायौगन्ध इत्यौपाधिक गन्धविषयकभ्रमात्मकप्रतीतेर्जायमानत्वेन आननवाय्वादिनिष्ठा या समवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारता तन्निरूपितत्वं गन्धनिष्ठविषयतायामस्त्येवेति न काचिदनुपपत्तिरित्यर्थः ॥ ननु वाय्वानीतचम्पकावयवसमवेत गन्धस्थले वायौगन्ध इतिभ्रमात्मकप्रत्यक्षं यत्र जातं तत्र पूर्वोक्तपक्षे चम्पकंजिघ्रतीतिप्रयोगस्य चम्पकसमवेतगन्धप्रत्यक्षवानितिप्रमात्मकशाब्दबोधोत्पादकत्वेन प्रामाण्यमुपपद्यते वस्ततस्त्वित्याद्युक्तपक्षेतु वायौगन्धइतिप्रत्यक्षनिरूपितायाः समवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतायाः चम्पकेऽसत्वात् चम्पकवृत्तितथाविधप्रकारतानिरूपितगन्धविषयताशालिप्रत्यक्षवानित्यन्वयबोधजन-

वृत्तित्वस्य बाधेऽपि न क्षतिः ताद्दशगन्धस्याननाद्यवृत्तित्वेऽपि आनने गन्धइत्याकारकबोधीयगन्धविषयताया आननादिप्रकारतानिरूपितत्वेन वाक्यार्थाबाधात् वाय्वानीतचम्पकगन्धस्य यत्र वाय्वादिवृत्तित्वेनैव ग्रहः, तत्र चम्पकं जिघ्रतीत्यादिप्रयोगोनेष्यतएव। यत्तु आधेयतामात्रं द्वितीयार्थः न तु समवायावच्छिन्नत्वविशेषितमाधेयत्वम्। तथा च मुखादिसंसृष्टमृत्तिकादिगन्धे परंपरासंबन्धेन मुखादिवृत्तित्वस्य सत्त्वाद् न ताद्दशस्थलेऽनुपपत्तिरिति तदसत् तथा सति कालं जिघ्रतीति प्रयोगस्य दुर्वारत्वात्। पुष्पमाघ्रयते इत्यादौ च निरुक्तप्रकारत्वमाख्यातार्थः। आश्रयतासंबन्धेन पुष्पाद्यन्विते तस्मिन् धात्वर्थप्रत्यक्षस्य निरूपितत्वसंबन्धेन तद्विशेषणतापन्नगन्धविषयितायाश्च ताद्दशसंबन्धेनान्वयः। एकधर्मिविशेषणतयोपस्थितस्य स्वातन्त्र्येणान्यविशेषणतयान्वयबुद्धेरेवाव्युत्पन्नत्वात् अत्र च प्रत्यक्षपारतन्त्र्येणैव गन्धविषयिताया आख्यातार्थेऽन्वयेन व्युत्पत्तिविरोधविरहात्। अस्तु वा गन्धः लौकिकविषयिता प्रत्यक्षं च विशकलितमेव धातोरर्थः। कर्त्राख्यातादिसमभिव्याहारे गन्धविषयितायाः प्रत्यक्षविशेषणतया कर्माख्यातसमभिव्याहारस्थले च प्रत्यक्षविशेष्यतयाऽन्वय इति न कश्चिद्दोषः। जिघ्रत्यर्थगन्धविषयतानिरूपितनिरुक्तप्रकारताश्रयत्वमेव पुष्पादिनिष्ठं जिघ्रतिकर्मत्वमिति दिक्। अथ दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयिता

---

कस्योक्तवाक्यस्य नप्रामाण्यंसम्भवतीत्यतआह वाय्वानीतेत्यादि। नेष्यत एवेति किन्तु वायुंजिघ्रतीत्येवतत्रप्रयोग इतिभावः। दुर्वारत्वादिति कालनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वस्य गन्धेसत्त्वादितिभावः। निरुक्तप्रकारत्वम् समवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारत्वम्। तस्मिन् उक्तप्रकारत्वे। तद्विशेषणतापन्नगन्धेत्यादि घ्राधात्वर्थगन्धनिष्ठलौकिकविषयताशालिप्रत्यक्षविशेषणीभूता या गन्धनिष्ठविषयता तस्या इत्यर्थः। ताद्दशसम्बन्धेन निरूपितत्वसम्बन्धेन। अन्वयइति तथाच प्रत्यक्षनिरूपिता या गन्धनिष्ठविषयत्वनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारता तदाश्रयः पुष्पमिति बोधः। नन्वेकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयाऽन्वयस्याव्युत्पन्नतया कथं प्रत्यक्षविशेषणीभूतविषयतायाः प्रकारतायामन्वयइत्याशंकायां तन्नियमस्वरूपमन्यथाकृत्य दर्शयति। एकधर्मीति। प्रत्यक्षविशेषणतयेति अस्य अन्वयइत्यनेनान्वयः। प्रत्यक्षविशेष्यतयेति तथाच पुष्पमाघ्रायते इत्यत्र प्रत्यक्षविषयगन्धनिष्ठविषयतानिरूपितोक्ताधेयत्वसम्बन्धावच्छिन्नप्रकारत्वं पुष्पेबोध्यते। चाक्षुषत्वावच्छिन्नवाचकदृश्यादिसमभिव्याहृतेत्यादिकंयदुक्तं तत्रशंकते अथेति। चाक्षुषादौप्रतीयतेइति तथाच सौरभनिरूपितलौकिक-

र्थकत्वे सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयिताशालिचाक्षुषाद्यप्रसिद्ध्या आकाशं न पश्यतीत्यादौ चाकाशादिनिरूपितलौकिकविषयिताया एवाप्रसिद्ध्या तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धिः । नच सौरभं नपश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभावः चाक्षुषादौ प्रतीयते इतिवाच्यम् एवमप्याकाशं न पश्यतीत्यादावप्रतीकारात् । नच लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावः प्रतीयतइति वाच्यम् वृत्त्यनियामकसंबन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावस्याप्रसिद्धेः । एतेन निरूपकतासंबन्धेन चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्तत्राकाशादौ प्रतीयत इत्यपि निरस्तम् अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यकतायाः सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च चाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छिन्नस्य पदाद्वाक्याच्चानुपस्थितत्वात्तदभावस्याकाशादौ भानासम्भवाच्च । भावान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात् अभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानमयुक्तम् । अस्तु वा वृत्त्यनियामकोपि संबन्धोऽभावप्रतियोगितावच्छेदकस्तथापि निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न संभवति तथा सति आकाशं पश्यति चैत्र इत्याकारकवाक्यजन्यायोग्यताभ्रमदशायामाकाशंनपश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधप्रसङ्गात् आकाशं पश्यति मैत्र इत्यादिभ्रमदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधस्य दुरपह्नवतया लौकिकविषयितात्वसामानाधिकरण्येनैवहि तादृशाभावबोधकं तद्वाक्यमुपगन्तव्यम् । तादृशबोधश्च लौकिकविषयितात्वसामानाधिकरण्यमात्रेणाकाशादिनि-

---

विषयित्वाभाववच्चाक्षुषवानितिबोधः । इदन्त्वत्रचिन्तनीयम् ज्ञानसामान्यशून्यसुषुप्त्यादिदशायामपि चैत्रः सौरभंनपश्यतीत्यादिप्रयोगान्निरुक्तशाब्दबोधाभ्युपगमस्याशक्यत्वमिति । वृत्त्यनियामकस्यापितादात्म्यस्य भेदप्रतियोगितावच्छेदकत्वादाह संसर्गाभावेति । एतेन वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेन । प्रथमान्तार्थमुख्यविशेष्यकत्वनियमस्य पश्यमृगोधावतीत्यादौव्यभिचारित्वादाह चाक्षुषादिनिष्ठेति दृशधातोश्चाक्षुषत्वविशिष्टे एव शक्तिमत्तया चाक्षुषनिष्ठलौकिकप्रत्यक्षविषयितात्वावच्छिन्नस्योपस्थित्यसम्भवादितिभावः । तस्याः लौकिकविषयितायाः । भानमयुक्तमिति नञ्पदंविना यादृशसमभिव्याहारस्थले यत्रधर्मिणियेनसम्बन्धेन यस्यविशेषणतया भानमितिप्रदर्शितनियमादितिभावः । अयोग्यत्वभ्रमेति नञघटितवाक्यार्थविपरीतत्वेनायोग्यत्वंबोध्यम् । शाब्दबोधप्रसङ्गमुपपादयति आकाशंपश्यतीत्यादिना । दुरपह्नवतयेति एतदग्रे तदुपपत्यर्थमिति पूरणीयम् । उपगन्तव्यमिति आकाशं नपश्यतिचैत्र इत्यादिवाक्यजन्यबोधस्य लौकिकविषयितात्वावच्छेदेन निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावविषयकत्वं नोपगन्तुंशक्यं लौकिकविषयितात्वसामानाधिकरण्येनाकाशप्रका-

रूपितत्वावगाहिदर्शितायोग्यताज्ञानाप्रतिवध्य एव । नच चैत्रीयचाक्षुषादिनिष्ठ-लौकिकविषयितात्वावच्छेदेनैव तादृशाभावो दर्शितवाक्येन प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायामाकाशीयत्वाद्यवगाहि चैत्र आकाशं पश्यतीति वाक्यजन्यबोधः प्रतिवध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम् तादृशविषयितात्वेन विषयिताया अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनासंभवात् चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणं दर्शनांशे लौकिकविषयिता-विशेषणमिति रीत्यैव पदार्थानां ज्ञानात् चैत्रीयचाक्षुषादिनिरूपितविषयितात्वं नाकाशादिधर्मितावच्छेदकं, किन्तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिवन्धकतया निरुक्तधर्मा-वच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदप्रतिवध्यत्वाच्च । एतेन तत्राकाशादिपदस्याकाशादिनिरूपितत्वार्थकतां द्वितीयायाः खण्डशो निरूपितत्वलौकिकविषयितात्वोभयार्थकतां वा स्वीकृत्य लौकिकविषयितायामाश्रयतासंवन्धावच्छिन्नप्रतियोगिता-काकाशनिरूपितत्वाभावबोधोपगमेनापि न निस्तारः । घट आकाशं न पश्यतीत्यादौ नितरामेवागतिः । यत्तु नञर्थस्य द्विधा भानोपगमेन आकाशादिनिरूपितत्वाभाववलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वयबोध इति तदपि न । तथासति चैत्रोघटंनपश्यति मैत्र आकाशंनपश्यतीत्यादिवाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्यादनुपपत्तेः नहि तत्रापि तादृश एव शाब्दबोधः । तथा सति चैत्रो यदा घटादिकं न पश्यत्यपितु पटादिकमेव तदा घटाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य तत्र बाधात्

---

रकज्ञानस्य प्रतिवन्धकस्य सत्त्वात् अवच्छेदकावच्छेदेन तदभाववत्ताबुद्धिम्प्रति सामानाधिकरण्येन तद्वत्तानिश्चयस्यापि प्रतिवन्धकत्वादिति भावः । अप्रतिवध्यइति सामानाधिकरण्येन तदभाववत्ताबुद्धाववच्छेदकावच्छेदेनैव तद्वत्तानिश्चयस्य प्रतिवन्धकत्वादितिभावः । प्रतिवध्नात्येवेति चैत्रीयचाक्षुषनिष्ठलौकिकविषयितात्वावच्छेदेनाकाशाभावबुद्धौ चैत्रीयचाक्षुषनिष्ठलौकिकविषयितात्वसामानाधिकरण्येन तादृशविषयितात्वा वच्छेदेन चाकाशावगाहि निश्चयस्य प्रतिवन्धकत्वादितिभावः । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वपक्षे उपपादयताम्मतं खण्डयितुमाह एतेनेति उक्तरीत्या शाब्दबोधप्रसंगेनेत्यर्थः। नितरामेवेति चाक्षुषाश्रयत्वस्य घटादावचेतनेवाधितत्वेन आकाशाभाववल्लौकिकविषयितावच्चाक्षुषाश्रयोघटइति बोधस्योपगन्तुमशक्यत्वादितिभावः । तादृशवाक्यात् घट आकाशंनपश्यतीतवाक्यात् । अनुभवसिद्धइति प्रतिवन्धक-

चैत्रो घटं न पश्यतीति प्रयोगानुपपत्तेः। यदा च भावमात्रं पश्यति तदा भावानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावसत्त्वात् भावं न पश्यति चैत्र इत्यादिप्रयोगापत्तेः। एवमाकाशं न पश्यति घट इत्यादौ आकाशाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाऽऽकाशाद्यतिरिक्तपटादिविषयकचाक्षुषाश्रयत्वनिश्चयो घटादौ तदा तादृशनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृशवाक्यजन्यशाब्दबोधानुपपत्तिः। यथा चैत्रो घटं पश्यतीत्यादिनिश्चयदशायां पटं न पश्यति चैत्र इत्यादिवाक्यजन्यशाब्दबोधोत्पादोऽनुभवसिद्धः, तथैवोक्तभ्रमदशायामाकाशं न पश्यति घट इत्यादिवाक्यजन्यबोधोत्पादोऽपीति न तत्रेष्टापत्तिः संभवति। यच्च अलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेनाकाशादिविषयकत्वघटादिवृत्तित्वोभयाभावो घट आकाशं न पश्यतीतिवाक्यात्प्रतीयते, उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वचैत्रादिवृत्तित्वोभयसत्त्वेन चैत्रआकाशं न पश्यतीत्यादिप्रयोगानुपपत्तिः घटादौ तादृशचाक्षुषाद्याश्रयत्वभ्रमदशायां घट आकाशं न पश्यतीतिवाक्याच्छाब्दबोधानुपपत्तिश्चेत्यलौकिकविषयिताशून्यत्वेन चाक्षुषादिकं विशेषितम्। आकाशविषयकचाक्षुषाद्युपनीतभानस्यापीतरांशे लौकिकत्वात् तादृशानुपपत्तितादवस्थ्यम् अतो लौकिकत्वविशेषणमुपेक्षितम्। अत्रालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य घटआकाशंनपश्यतीत्यादौ शक्त्या धात्वर्थत्वासंभवेऽपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते, विषयितासामान्यमेव तत्र द्वितीयार्थः आश्रयत्वं द्वित्वं निरूपकत्वं चाख्यातार्थः। आश्रयत्वे व्युत्पत्तिवैचित्र्यात्प्रथमान्तपदार्थघटादेः तस्य निरूपकत्वे विशेष-

---

विरहादितिशेषः। उक्तभ्रमदशायामिति पटविषयकचाक्षुषाश्रयोघटइतिभ्रमदशायाम्। निश्चयोघटादाविति भ्रमात्मक इतिशेषः। यच्चेति तदपिनेत्यनेन सम्बन्धः। चाक्षुषत्वावच्छेदेनेति चाक्षुषत्वव्यापक इत्यर्थः। अलौकिकविषयिताशून्यत्वविशेषणस्य फलमाह उपनीताकाशादीत्यादिना। तादृशचाक्षुषेति उपनीताकाशादिविषयकचाक्षुषेत्यर्थः। ननु लाघवाल्लौकिकविषयिताशालिचाक्षुषत्वावच्छेदेनोक्तोभयाभावभानंकिमिति नोपेयत इत्यतआह आकाशादिविषयकचाक्षुषादीति। लौकिकत्वादिति तथाचलौकिकचाक्षुषे तस्मिन्नुभयस्यैवसत्त्वादुक्तचाक्षुषत्वावच्छेदेनोक्तोभयाभावबोधो नसम्भवतीत्यतोऽलौकिकविषयिताशून्यत्वनिवेशः एवंच तादृशसमूहालम्बनचाक्षुषेऽलौकिकविषयिताशून्यत्वविरहान्नानुपपत्तिरिति।

णतयाऽन्वयः । तादृशनिरूपकत्वद्वितीयान्तार्थाकाशादिविषयकत्वयोश्च प्रकारतया द्वित्वान्वयः द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंबन्धेन तादृशोभयस्य नञर्थाभावे तस्यान्वयितावच्छेदकनिरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः । धात्वर्थस्य प्रकृते मुख्यविशेष्यतयैव भानम् । अथवा स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतासंबन्धेन धात्वर्थस्य तादृशोभयाभावेन्वयः तस्य चाख्यातार्थनिरूपकत्वे, तस्य च प्रथमान्तपदार्थे घटादौ, घटादेः प्रतियोगितावच्छेदकघटकतया तादृशाभावनिरूपकत्वात् । एवं चान्वयबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न क्षतिरिति तदपि न घटादिविषयकचाक्षुषादेः कालिकादिसंबन्धेन पटादिवृत्तितया पटोघटंनपश्यतीति प्रयोगानुपपत्तेः । आकाशादिविषयकत्वावच्छिन्ने चाक्षुषे कालिकादिसंबन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशं न पश्यतीतिवाक्याच्छाब्दबोधानुपपत्तेश्च । समवायेन घटादिवृत्तित्वाकाशादिविषयकत्वोभयाभावस्यैव स्वीकरणीयतया अभावआकाशंनपश्यतीत्यादौ अभावसमवेतत्वाप्रसिद्ध्या वाक्यार्थाप्रसिद्धेर्दुर्वारत्वात् । चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेऽपि समयविशेषे चैत्रो घटं न पश्यतीतिप्रयोगाद्वर्तमानतादृशचाक्षुषत्वाद्यवच्छेदेन उभ-

---

तादृशनिरूपकत्वेति घटनिष्ठाश्रयतानिरूपकत्वेत्यर्थः एतन्निरूपकत्वञ्च घटवृत्तित्वरूपमेव । निरुक्तधर्मावच्छेदेन अलौकिकविषयिताशून्यचाक्षुषत्वावच्छेदेन । भानमिति तथाच घटनिष्ठाश्रयतानिरूपकत्वाकाशविषयकत्वोभयाभाववदलौकिकविषयिताशून्यंचाक्षुषमितिबोधः सम्पन्नः । ननु सम्भवति प्रथमान्तार्थस्य मुख्यविशेष्यत्वे तत्परित्यागोनोचितोऽतआह अथवेति । स्वनिष्ठान्योन्याभावेति यद्यपि स्वाश्रयनिष्ठान्योन्याभावघटितं व्यापकत्वलक्षणं तथापि यत्र तादात्म्यं व्याप्यतावच्छेदकसम्बन्धस्तत्र तादात्म्येन स्वाश्रयः स्वयमेवेत्यतः स्वनिष्ठान्योन्याभावघटितमेवलक्षणं पर्यवसन्नमिति । घटादाविति अन्वयइति पूर्वेणसम्बन्धः एवञ्चालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षव्यापकघटवृत्तित्वाकाशविषयकत्वोभयाभावनिरूपको घट इत्युक्तवाक्यात्प्रतीयते । प्रतियोगितावच्छेदकघटकतयेति तथाच निरुक्तोभयाभावप्रतियोगितानिरूपितवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वमेवात्रनिरूपकत्वं पर्यवसितमिति । समयविशेषे यदा घटप्रत्यक्षं नास्ति तदा । उभयाभावसत्त्वादिति नचोक्तवर्तमानचाक्षुषेऽलौकिकविषयिताशून्यत्वमेवाप्रसिद्धमितिवाच्यम् यत्रहि घटविषयकं कियदंशेऽलौकिकप्रत्यासत्तिजन्यमेकम पटादिविषयकञ्च केवललौकिकप्रत्यासत्तिजन्यमपरं ज्ञानं वर्त्तते तत्रेयमापत्तिर्बोध्या । ननु नव्यं

याभावभानस्य प्रतियोगिकोटौ वर्तमानत्वमन्तर्भाव्य त्रित्वावच्छिन्नाभावभानस्य वा स्वीकरणीयतया यदा किंचिदंशेऽलौकिकमेव घटादिचाक्षुषं तस्य वर्त्तते तदा चैत्रो घटं न पश्यतीत्यादिप्रयोगापत्तेर्दुर्वारत्वात् । वर्तमानालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन चैत्रवृत्तित्वघटविषयकत्वोभयाभावसत्त्वात् । समानेन्द्रियजन्योपनीतभानादौ लौकिकप्रत्यक्षसामग्र्या विरोधित्वस्याप्रामाणिकतया ऽलौकिकविषयितानियामकोपनायकज्ञानादिसमवहिततल्लौकिकसन्निकर्षाद्, घटादिनिरूपितलौकिकालौकिकोभयविषयिताशालिचा-

---

सामान्यतो वर्त्तमानालौकिकविषयिताशून्यचाक्षुषत्वावच्छेदेन निरुक्तोभयाभाव भानमङ्गीकुर्मः किंतु वर्त्तमानंयद् घटादिनिरूपितालौकिकविषयिताशून्यचाक्षुषं तत्त्वावच्छेदेन निरुक्तोभयाभावभानमित्यश्च प्रकृते घटविषयकचाक्षुषे निरुक्तोभयस्यैव सत्त्वान्नोक्तदोषः सम्भवतीत्याशंकायामाह समानेन्द्रियजन्येति एतदारभ्य अनिस्ताराद्देतत्पर्यन्तस्यायमभिप्रायः यत्र घटविषयकं चाक्षुषप्रत्यक्षम् आकाशादिविषयकंस्मृत्यादिकं घटांशे चक्षुः सन्निकर्षश्चास्ति तदानीमुत्पद्यमानाया मुपनीतभानात्मिकायामाकाशेघटोऽस्तीत्यादिविशिष्टबुद्धौ यथा चक्षुः सन्निकर्षो घट निरूपितां लौकिकविषयितां प्रयोजयति तथा घटप्रत्यक्षोत्तरजामानत्वेनोक्तप्रत्यक्षरूपज्ञानलक्षणप्रत्यासत्तिर्घटनिरूपितामलौकिकविषयितामपि प्रयोजयतीत्युक्तोपनीतभानात्मकचाक्षुषप्रत्यक्षे घटनिरूपिताया लौकिकविषयिताया इव तन्निरूपितायाअलौकिकविषयिताया अपिसत्त्वात् वर्त्तमानघटनिरूपितालौकिकविषयिताशून्यचाक्षुषत्वेन नैतदुपनीतभानंग्रहीतुं शक्यते किन्तुप्रत्यक्षान्तरमेव तत्र चैत्रवृत्तित्व घटविषयकत्वोभयाभावसत्त्वात्. चैत्रोघटंनपश्यतीति प्रयोगापत्तिः एवं यत्राकाशनिरूपितालौकिकविषयिताशालिघटनिरूपितलौकिकविषयिताशालिप्रत्यक्षधर्मिकः 'एतत्प्रत्यक्षं घटवृत्ति आकाशनिरूपितलौकिकविषयितावच्च, इति भ्रमः तत्रत्यप्रत्यक्षे आकाशनिरूपितालौकिकविषयिताया एवसत्त्वात् अलौकिक विषयिताशून्यप्रत्यक्षं तदन्यदेव तत्र घटवृत्तित्वाकाशविषयकत्वोभयाभावसत्त्वान्निरुक्तप्रत्यक्षे निरुक्तभ्रमदशायामपि घटआकाशंनपश्यतीति प्रयोगापत्तिरिति॥ अत्र सुरभिचंदनमित्यादौ चन्दनखण्डांशस्य चाक्षुषप्रत्यक्षदशायामपि तदंशे चक्षुःसन्निकर्षसत्त्वे जायमाने सुरभिचन्दनमित्युपनीतभाने सौरभांशे एवालौकिकविषयत्वं नतुचन्दनखण्डांशे इत्यनुभवसिद्धम् तदुपपत्तये समानेन्द्रियजन्योपनीतभाने लौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम् तथाच प्रकृते घटचाक्षुषात्मकालौकिकघटचक्षुःसंयोगरूपलौकिकयोः सन्निकर्षयोःसत्त्वेऽपि न घटांशे उपनीतभानमतोन घटांशेऽलौकिकविषयत्वमित्याशंकापि विरोधित्वस्याप्रामाणिकतयेत्यन्तेन परिहृता। उपनायकज्ञानादीति उपनीतभानजनकज्ञानादीत्यर्थः। तत्तल्लौकिकसन्निकर्षादित् घटादिविषयकलौकिकसन्निकर्षात् । आ-

क्षुषादेरुत्पत्त्या तादृशचाक्षुषादिदशायामुक्तप्रयोगापत्तेः । आकाशादिनिरूपिता लौकिकविषयिताशालिवर्तमानचाक्षुषाद्यंशे घटादिवृत्तित्वस्य आकाशीयत्वादिना लौकिकविषयितायाश्च भ्रमदशायां घट आकाशं न पश्यतीत्यादिवाक्याच्छाब्द बोधापत्तेर्दुर्वारत्वाच्च । घटादिनिरूपितालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छे-देन घटादिविषयित्वघटितोभयाभावभानोपगमेऽप्यनिस्तारात् । एतेनाख्यातार्थं वर्तमानत्वाद्यवच्छिन्नसमवायावच्छिन्नाश्रयत्वत्वाद्यवच्छिन्ने आकाशादिविषयक प्रतियोगिकत्वलौकिकान्यविषयिताशून्यचाक्षुषप्रतियोगिकत्वघटाद्यनुयोगिकत्वैत-त्रितयत्वावच्छिन्नाभावो भासतेऽतोऽभाव आकाशं न पश्यतीत्यादौ नानुपपत्तिः तत्र विषयितावत्प्रतियोगिकत्वं द्वितीयार्थः निरुक्तचाक्षुषप्रतियोगिकत्वं त्रित्वं च धातोरर्थः । अभावाद्यनुयोगित्वं च प्रथमान्तार्थं इत्यपि निरस्तमिति चेत् । अगत्या घटआकाशंनपश्यतीत्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ॥ इति प्रथमखण्डम् ॥ अनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थः तेन वह्न्यादिपक्षकानुमितिपरस्य वह्निमनुमिनोमीत्यादिवाक्यस्य न प्रामाण्यम् । यदि च वह्निसाध्यकपर्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्वतमनुमिनो-मीत्यादिवाक्यस्यापि प्रामाण्यं मन्यते तदा तादृशधातुयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थः तस्य च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वविशिष्टेऽन्वयः अतो

---

ख्यातार्थवर्त्तमानत्वादीति आख्यातार्थो यो वर्त्तमानत्वादिस्तदवच्छिन्नं समवायसम्बन्धावच्छिन्नंयत् आश्रयत्वत्वावच्छिन्नं तस्मिन्नित्यर्थः । विषयितावत्प्रतियोगिकत्वमिति विषयिताश्रयप्रतियोगिकत्वमित्यर्थः । नत्वत्रसादृश्यार्थकोऽवतिप्रत्ययः । निरुक्तचाक्षुषेति लौकिकान्यविषयिताशून्यचाक्षुषेत्यर्थः ॥ इति प्रथमखण्डम् ॥ विधेयत्वमिति प्रकारत्वन्तु नोक्तम् वह्निव्याप्यधूमः पर्वते इति परामर्शोत्तर जायमानायां पर्वतेवह्निरित्यनुमितौ विशेष्यीभूतस्यापि वह्ने-रेव विधेयत्वात् विधेयतात्वस्य प्रकारतात्वविशेष्यतात्वाभ्यां वैलक्षण्यात तथाचोक्तानुमितिपरस्य वह्निमनुमिनोमीतिवाक्यस्याप्रामाण्यापत्तेरिति । ननु विधेत्वस्य द्वितीयार्थत्वे वह्निनानुमिनोमीत्यादौ निरूपकत्वसम्बन्धावच्छिन्न प्रतियोगिताकवह्निनिष्ठविधेयत्वाभाववदनुमितिविषयक एव शाब्दबोधः स्यात् सच वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वपक्षे नोप पद्यतेऽत आह विधेयित्वम्वेति । तादृशधातुयोगइति वह्न्यादिविधेयकत्वबो-धकतृतीयान्तसमभिव्याहृतानुपूर्वकमाधातुयोगे इत्यर्थः । अन्वयइति तथाच

वह्निमत्त्वेनेत्याद्यसमभिव्याहारेण तत्र पर्वतमनुमिनोमीत्यादयो न प्रयोगाः। विधेयत्वाद्यर्थे तृतीयानुशासनविरहात् तृतीयान्तेन वह्न्यादिविधेयकत्वं कथमुपस्थापनीयमिति न शङ्क्यम्। वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वात् विधेयतादेरपि वैशिष्ट्यरूपत्वात्। अत एव रजतत्वेनशुक्तिंजानातीत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वस्य घटत्वेन वह्निर्नास्तीत्यादौ सौंदडमते अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तृतीयान्ततो बोधः। तृतीयान्तार्थरजतत्वादिप्रकारकत्वद्धितीयान्तार्थशुक्त्यादिविषयकत्वयोः विशिष्टवैशिष्ट्यबोधमर्यादयाऽवच्छेद्यावच्छेदकभावभानम् रजतत्वेनशुक्तिंजानातीत्यादौ नियतं केवलमेकत्रद्वयमितिरीत्या तदुभयबोधस्य तत्राव्युत्पन्नत्वात्। अत इमे शुक्तिरजते इत्यादिप्रमापरस्य तादृशवाक्यस्य न प्रामाण्यम्। घटत्वाद्यवच्छिन्नवह्न्यभावनिष्ठेन वह्न्यादिनिरूपितानुयोगिताविशेषरूपवह्न्याद्यभावत्वेन तदभावनिष्ठघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्यावच्छेद्यावच्छेदकभावः स्वीक्रियते। घटत्वेन वह्निर्नास्तीत्यादौ च तद्बोधस्योक्तरीत्याऽऽ

---

पर्वतनिरूपितोद्देश्यितावती या वह्निविधेयकानुमितिस्तद्वानितिबोधः। वह्निमत्त्वेनेत्यत्र तृतीयाया वैशिष्ट्यार्थकत्वे वह्निमत्त्वविशिष्टोयः पर्वतस्तदुद्देश्यकानुमितिविषयकबोध एवोक्तवाक्यादुपगन्तव्यः तथासति वह्निमत्त्वेनेत्येतत्पदासमभिव्याहारेऽपि पर्वतमनुमिनोमीत्यस्य प्रामाण्यमापद्येत वह्नित्वेन वह्निमनुमिनोमि वह्निमनुमिनोमीत्युभयविधप्रयोगदर्शनाद्वैशिष्ट्यार्थकतृतीयासमभिव्याहारस्य द्वितीयान्तसमभिव्याहृतोक्तधातुजन्यबोधेऽनपेक्षणादित्याह अतो वह्निमत्त्वेनेत्यादि। नन्वेवं रजतेरजतत्वं शुक्तौशुक्तित्वमवगाहमानस्य यथार्थ ज्ञानस्यानन्तरमपि रजतत्वेनशुक्तिंजानातीति प्रयोगापत्तिः रजतत्वप्रकार कत्वविशिष्टं यच्छुक्तिविशेष्यकत्वं तस्य तज्ज्ञाने सत्त्वादित्याशंक्याह तृतीयान्ताथत्यादि। नियतमिति भानमिति पूर्वेणान्वयः। तादृशवाक्यस्य रजतत्वेनशुक्तिंजानातीतिवाक्यस्य। नप्रामाण्यमिति रजतत्वप्रकारकत्वावच्छिन्नशुक्तिविशेष्यकत्वंहि रजतत्वेनशुक्त्यवगाहिभ्रम एवास्ति नतु प्रमायामितिभावः। ननु घटत्वेन वह्न्यभावस्य वह्नित्वेनघटाभावस्य च समनियताभावानामैक्यपक्षे ऐक्यात् घटत्वेनवह्न्यभावे घटाभावत्वस्य घटत्वाव च्छिन्नप्रतियोगिताकत्वस्य च सत्त्वेन घटत्वेनवह्न्यभावाभिप्रायेण घटत्वेन घटोनास्तीतिवाक्यस्य प्रामाण्यंस्यादत आह घटत्वाद्यवच्छिन्नेत्यादि। वह्न्याद्यभावत्वेनेति सहेतिशेषः। अवच्छेद्यावच्छेदकभावइति परस्परमितिशेषः। स्वीक्रियतइति तथाच घटत्वावच्छिन्नप्रतियोगिताकत्वावच्छिन्नंयद्वह्निनिरू-

वश्यकत्वमिति घटत्वावच्छिन्नवह्न्याद्यभावस्य वह्नित्वावच्छिन्नघटाद्यभावसम नियतत्वेन तद्भिन्नतयातत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वघटाद्यभावत्वसत्त्वेऽपि तादृशाभावपरस्य घटत्वेन घटोनास्ति, वन्हित्वेनवन्हिर्नास्तीत्यादिवाक्यस्य न प्रामाण्यम्। उक्तस्थले च तृतीयान्ताद्यर्थस्य द्वितीयान्ताद्यथऽवच्छेद्यावच्छेदकभावसंबन्धेनान्वय इत्यपि केचित्। तन्न। विभक्त्यर्थे विभक्त्यर्थान्वयस्याव्युत्पन्नत्वात्। नच रजतत्वेनेदंज्ञायते इत्यादौ आख्यातार्थविषयतायां तृतीयार्थप्रकारताया निरूपितत्वसंबन्धेनान्वयान्नोक्तव्युत्पत्तिकल्पनमिति वाच्यम्। तत्रापि रजतत्वादिप्रकारकत्वविशिष्टधात्वर्थज्ञाननिरूपितत्वस्याख्यातार्थभानस्वीकारेणैवातिप्रसङ्गभङ्गात्। न च तस्मात्पचति तस्माच्चैत्रस्येत्यादौ विभक्त्यर्थे कृतिसंबन्धादौ हेतुविभक्त्यर्थान्वयदर्शनान्नास्त्युक्तव्युत्पत्तिरिति वाच्यम्। हेतुविभक्त्यर्थातिरिक्त विभक्त्यर्थस्यानन्वयनियमात् न च रजतत्वेनेदं जानातीत्यादौ तृतीयायाः कारकविभक्तित्वाभावान्न तदर्थस्य क्रियायामन्वयसंभव इत्यगत्या द्वितीयार्थएव तदन्वय उपगन्तव्य इति वाच्यम्। मणिकारमते तस्माज्जानातीत्यादौ ज्ञानादिरूप धात्वर्थे हेतुविभक्त्यर्थस्य तस्मात्स्थीयते इत्यादौ च सर्वमतएव धात्वर्थस्थित्यादौ तस्यान्वयेन षष्ठ्यर्थसंबन्धस्यापि "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैरि"त्यादौ धात्वर्थेऽन्वयेन कर्मासमभिव्याहृते रजतत्वेन जानातीत्यादौ धात्वर्थे तृतीयार्थान्वयस्यावश्यकत्वेन कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वय इत्यनियमात्। एवं घटत्वेन वह्निर्नास्तीत्यादौ प्रथमार्थेनानुयोगित्वम् प्रथमायाः संख्यातिरिक्तार्थाबोधकत्वनियमादतो नञर्थाभावे संबन्धएव तत् तत्रच न तृतीयार्थान्वयसंभवः। ममतु अनुयोगितासंबन्धेन वह्न्यादिविशिष्टाभावे तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताकत्ववैशिष्टयभानाद्विशिष्य्यवैशिष्ठयबोधमर्यादया वह्न्याद्यनुयोगिकत्वस्थलीयस्यानुयोगितयासंवद्धवह्न्यादेस्तादृशप्रतियो-

---

पितानुयोगित्वं तदाश्रयोऽभावोघटत्वेनवह्निर्नास्तीत्यादिवाक्यादेव प्रतीयते नतु घटत्वेनघटोनास्तीत्यादिवाक्यात् अनेनतु घटत्वावच्छिन्नप्रतियोगिताकत्वावच्छिन्नंयद्घटनिरूपितानुयोगित्वं तदाश्रयस्यैवाभावस्य प्रतिपत्तेरित्यर्थः। उक्तस्थलेच रजतत्वेनशुक्तिं जानातीत्यादौ च। उक्तस्थलेरजतत्वादिप्रकारकत्वंज्ञाने एवान्वेतीत्याह तत्रापीति। अनुयोगितायाः प्रथमार्थत्वपक्षे वह्न्यनुयोगिताकत्वमितियल्लब्धं तत्स्थाने तस्याः प्रथमार्थत्वाभावपक्षेऽनुयोगितासम्बन्धेनवह्निरिति लभ्यते तदेतदाह वह्न्याद्यनुयोगिकत्वस्थलीयस्येति। तादृ-

ताकत्वेनावच्छेद्यावच्छेदकभावभानोपगमेन सामञ्जस्यात् । अनुयोगितायाः नञर्थं तावच्छेदकत्वे तत्रैव वह्न्यादेः प्रतियोगिनोऽन्वयः । अतस्तत्र तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताया निरूपकत्वेनान्वयं स्वीकृत्यातिप्रसङ्गवारणं सम्यक् प्रतिभाति । रङ्गेऽभेदेन रजतारोपस्थले रङ्गं रजतेन जानातीत्यप्रयोगात् । तादात्म्यभिन्नसंबन्धावच्छिन्नप्रकारतैव तृतीयार्थः । तत्रच रङ्गंरजतंजानातीति प्रयोगात्तादात्म्यसंबन्धावच्छिन्नप्रकारता कर्मत्वानुशिष्टद्वितीयादेरेवार्थः । तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानरूपक्रियायामन्वयः । तेन भेदारोपस्थले रङ्गे रजतत्वं जानातीतिवदभेदारोपस्थले रङ्गे रजतं जानातीति न प्रयोगः । उक्तस्थले च रङ्गरजताद्योः समानविभक्तिकपदोपस्थाप्ययोरभेदान्वयसाकाङ्क्षत्वेऽपि नायोग्यतया तादृशान्वयः । ननु एवंसति रङ्गरजतादिपदयोः सामानाधिकरण्यानुपपत्तिरिति चेत् का क्षतिः । न चैवं रजतगतैकत्वबहुत्वाविवक्षायां रङ्गानिरजतंजानातीति प्रयोगस्य स्त्रियं पण्डितं जानातीति प्रयोगस्य च प्रसङ्गः सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वादिति वाच्यम् । समानाधिकरणयोरिव यत्पदार्थविशेष्यकत्वविशिष्टेऽभेदसंबन्धावच्छिन्नयत्पदार्थप्रकारकत्वस्यान्वयस्तयो रपि समानलिङ्गवचनत्वनियमात् ।

यज्ञपतिमतानुयायिनस्तु रङ्गं रजतं जानातीत्यादौ सामानाधिकरण्यानुरोधाद् रजतादिपदस्य रजताभेदज्ञानविषये लक्षणा । अत एव भ्रान्तिज्ञविशेषदर्शिना प्रयुक्त-

---

शप्रतियोगिकत्वेनेति घटत्वावच्छिन्नप्रतियोगिकत्वेन सहेत्यर्थः । सामञ्जस्यादिति घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभावपरस्य घटत्वेनघटोनास्तीत्यादिवाक्यस्य न प्रामाण्यप्रसङ्गो नवा विभक्त्यर्थविभक्त्यर्थानन्वयनियमभङ्गइतिभावः । अभावत्वस्यानुयोगितारूपत्वपक्षेऽप्याह अनुयोगितायाइति । प्रतियोगिनोऽन्वयइति निरूपितत्वेनेतिशेषः । तत्रेति प्रतियोगितायाम् । अतिप्रसङ्गवारणमिति निरुक्तव्यधिकरणधर्मावच्छिन्नाभावपरस्य घटत्वेनघटोनास्तीत्यस्य प्रामाण्यप्रसङ्गवारणमित्यर्थः । तृतीयार्थः जानातीत्यादिसमभिव्याहृततृतीयार्थः । ज्ञानरूपक्रियायामिति तथाच रङ्गनिष्ठविशेष्यताविशिष्टंयद्रजतनिष्ठप्रकारताविशिष्टंज्ञानं तदाश्रय इतिबोधः । तत्रच विशिष्टवैशिष्ट्यवोधमर्यादया रङ्गविशेष्यत्वावच्छिन्नत्वं रजतप्रकारतायां लभ्यतेऽतोन इमेरङ्गरजते इत्यादिप्रमापरस्य रङ्गंरजतंजानातीत्यस्य प्रामाण्यमितिभावः । उक्तस्थले रङ्गं रजतंजानातीत्यादौ । लक्षणेति तथाचैतन्मते उक्तवाक्यात् रङ्गाभिन्नो यो रजताभेदज्ञानविषयस्तद्विष-

स्य लोहितवह्निं जानातीत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः न ह्यसमासस्थलइव लोहितवह्न्याद्योरभेदाविवक्षा, ज्ञानांशे लोहितादेः स्वातन्त्र्येणान्वयो वा संभवति, कर्मधारयस्य साधुतानुपपत्तेः लोहितपदोत्तरं प्रकारतावोधकविभक्तेरभावात् । धात्वर्थे साक्षान्नामार्थस्य भेदान्वयेऽव्युत्पत्तेः । द्वन्द्वस्थलवत्कर्मधारयोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः पूर्वपदार्थान्वितप्रकारतावोधकत्वायोगात् । न च द्वन्द्वसमास एवासौ, अल्पाचोवह्निपदस्य पूर्वनिपातप्रसङ्गात् । समाहारपक्षे पुंलिङ्गताया इतरेतरपक्षे च एकवचनस्यानुपपत्तेः । एतन्मते शुक्लो वह्निरित्यादिप्रमायां लोहिताभेदारोपविषयवह्निविषयकत्वेऽपि शुक्लो वह्निर्लोहिता जपेति समूहालम्बनप्रमाया लोहिताभेदावगाहिस्वविषयवह्निविषयकत्वेऽपि च तद्दशायां लोहितवह्निं लोहितं वह्निं वा जानातीति न प्रयोगः । तादृशपदोपस्थाप्यविषयताया धर्मिपारतन्त्र्येण द्वितीयार्थविषयतायामभेदसंवन्धेन विशेषणताया नियमोपगमात् । अथ वा लोहिताभेदविषयतानिरूपितविषयतापन्नस्य वह्न्यादेर्ज्ञानान्वयिविषयितानिरूपकत्वं भासते । समूहालम्बनादौ च तादृशविषयतानापन्नस्यैव विषयितानिरूपकत्वमिति नातिप्रसङ्गः । विषयतापन्नस्य निरूपकत्वमित्यस्य च विषयतावच्छिन्नं निरूपक-

---

यकज्ञानाश्रयः प्रतीयते । प्रामाण्यनिर्वाहइति वह्नौलौहित्यस्यौपाधिकतया तस्य तादात्म्येन वह्नावन्वये प्रामाण्यनिर्वाहोन सम्भवतीतिभावः । ननुयथा रङ्गंरजतं जानातीत्यादौ नाभेदान्वयबोधः किन्तु रङ्गविशेष्यकत्वविशिष्टे ज्ञाने रजत प्रकारकत्वस्यान्वय इत्यनुपदमुपपादितं तथाकुतोनान्वय इत्यतआह नह्यसमासस्थलइवेति । नन्वस्तु लोहितपदार्थस्य विषयितासम्बन्धेन साक्षादेवज्ञानान्वयित्वमतआह ज्ञानांशइति। द्वितीयशंकांनिराकरोति धात्वर्थेसाक्षादिति घटपटावित्यादि द्वन्द्वस्थले यथा घटपदपटपदोभयस्यैवविभक्तिप्रकृतित्वं पदार्थद्वयस्यैव विभक्त्यर्थेऽन्वितत्वात् तथान कर्मधारयादावित्याह द्वन्द्वस्थलवदित्यादि । अनुपपत्तेरिति इत्थश्चोक्तसमासस्थले लोहितपदस्य लोहिताभेदज्ञानविषये लक्षणाया आवश्यकत्वे लोहितं वह्निंजानातीत्यादावसमासस्थलेऽपि तत्तदभेदज्ञानविषये लक्षणयाऽभेदान्वयबोधोनिराबाधएवेत्याशयः । तादृशपदोपस्थाप्येति लोहितपदोपस्थाप्योयो लोहिताभेदज्ञानविषयताश्रयस्तद्घटकविषयतायाइत्यर्थः । ननु लोहिताभेदविषयतानिरूपितविषयताश्रयो यो लोहितोवह्निरित्याकारकज्ञानविषयो वह्निस्तन्निष्ठ निरूपकतानिरूपितविषयित्वस्य निरुक्तसमूहालम्बनादिज्ञानेऽक्षतत्वान्नोक्तप्रामाण्यवारणंसम्भवतीत्यतआह विषयतापन्नस्यनिरूपकत्वमित्यस्येति ननु विषयविधया भासमानधर्मएव ज्ञाननिष्ठविषयितानिरूपकतावच्छेदको भवति नहि भवति

तथासत्येकैकक्रियादिव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन व्यापकत्वरूपद्वितीयार्थस्य वाधापत्तेः । दिवसं स्वपितीत्यादौ च दिवसादिपदं सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणकूटपरमेवातो नैकदण्डादिमात्रस्वप्ने तथा प्रयोगः । अथ व्यापकत्वस्य द्वितीयार्थत्वएकमासादिव्यापकाध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मासत्वादिव्यापकताबा अध्ययने वाधेन मासमधीतइत्यादिप्रयोगानुपपत्तिः । नच मासपदेन यत्किंचित्त्रिंशद्दिनमात्रवृत्तिविशेषधर्मप्रकारेणानुपस्थानेऽपि तद्धर्मवत्स्वनिरूपिताधेयत्वसंबन्धेन मासपदार्थस्याभावेऽन्वयोपगमात् यत्किञ्चिन्मासनिष्ठाभावप्रतियोगितानवच्छेदकत्वमन्वयितावच्छेदके लभ्यतइति न काप्यनुपपत्तिरितिवाच्यम्, तत्तन्मासमात्रवृत्तिधर्मविशेषाणां संबन्धघटकत्वेऽपि शाब्दवोधे ससर्गतात्पर्यज्ञानस्य हेतुतया संसर्गविशेषोपस्थितेरपेक्षितत्वात् । संबन्धघटकतादृशधर्मान् विशिष्याविदुषः शाब्दवोधानुदयप्रसङ्गात् । नचेष्टापत्तिरनुभवविरोधात् । अनागतादिमासवृत्तितादृशधर्माणां विशिष्य ज्ञानसामग्र्या असर्वज्ञस्य दुर्लभतयास्मदादीनां सर्वेषामेव तादृशमासत्वव्यापकताबोधोच्छेदप्रसङ्गात् । नच तादृशवाक्यार्थतात्पर्यमेव संसर्गतात्पर्य मुक्तज्ञाने च वाक्यार्थघटकः संबन्धः संसर्गमर्यादयैव भासतइति विशेषरूपेणानुपस्थितस्यैवोक्तधर्मघटितसंबन्धस्य तात्पर्यज्ञाने बाधाभावबलाच्छाब्दबोधे च तात्पर्यज्ञानबलाद्भानमनपवादमेवेति वाच्यम् । एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थविशेषिततत्प्रतीतीच्छारूपतात्पर्यविषयकनिश्चयस्य प्राग्वाक्यार्थानिश्चयाद् दुर्घटतया

---

तथासतीति यस्मिन्क्षणेऽध्ययनं नजातं मासत्वाश्रयीभूततत्क्षणवृत्तिविरहप्रतियोगितावच्छेदकमेवाध्ययनत्वमतोऽध्ययनेमासव्यापकत्वानुपपत्तिरितिभावः। क्षणकूटपरमिति अखण्डकालपरत्वे तु एकदण्डादिमात्रस्वप्नेऽपि दिवसंस्वपितीति प्रयोगआपद्येत दण्डान्तरे स्वप्नविरहेऽपि दिवसत्वाश्रयाखण्डकालनिष्ठप्रतियोव्यधिकरणाभावपदेन स्वप्नाभावस्य परिग्रहासम्भवादितिभावः। अध्ययनेवाधेनेति मासत्वाश्रयीभूतापरमासनिष्ठाभावप्रतियोगित्वस्यवाध्ययने सत्त्वात् । तद्धर्मवत्स्वनिरूपिताधेयत्वेति यद्धर्मविशिष्टत्रिंशद्दिनात्मकमासेऽध्ययनान्वयोयोग्यस्तद्धर्मवत्स्वनिरूपिताधेयत्वसंसर्गेणेत्यर्थः । संसर्गतात्पर्यज्ञानस्येति एतदसकृद्विवेचितमुपरिष्टात् । उक्तज्ञानेचेति तात्पर्यज्ञानेचेत्यर्थः । उक्तधर्मघटितेति यद्धर्मविशिष्टत्रिंशद्दिनात्मकमासेऽध्ययनान्वयेयोग्यस्तद्धर्मघटितेत्यर्थः । उक्ततात्पर्यनिश्चयस्य हेतुत्वे योग्यताया निश्चयस्यैव सर्वत्र शाब्दबोधात्प्रागपेक्षिततया

तस्य शाब्दधीहेतुत्वे च योग्यतासंशयाच्छाब्दबोधानुपपत्तिर्विशकलिततत्तत्पदार्थतत्तत्संसर्गविषयकत्वविशेषितप्रतीतीच्छाज्ञानस्यैव शाब्दधीहेतुताया उपेयत्वात् तत्र च तादृशसंसर्गोपस्थितेरवश्यापेक्षणीयत्वादितिचेत् । सत्यम् । मासादिघटकतावद्दिनादिनिष्ठत्रिंशत्त्वादिरूपमासत्वादिर्मासादिभेदेन नानैव मासादिपदप्रवृत्तिनिमित्तता परमनुगतरूपेण अन्यथा शक्त्यानन्त्यप्रसङ्गात् सर्वोपसंहारेण व्युत्पत्तिं विना प्रागप्रतीतमासादेः शाब्दानुभवानिर्वाहाच्च । नच त्रिंशत्त्वादिकं बुद्धिविशेषविषयत्वरूपं वाच्यम् दिनादेर्द्रव्यानात्मकत्वेन तत्र गुणरूपसङ्ख्याया असम्भवात् द्रव्यात्मकत्वेऽपि क्रमिकेषु तेषु संख्योत्पत्तेरसम्भवात् तत्र बुद्धेरनतिप्रसक्तं वैलक्षण्यमनुगतं दुर्वचम् । जातिरूपस्य तस्य सङ्करप्रसङ्गनिरस्तत्वात् तत्तद्दिनविषयकत्वरूपस्यतत्तद्दिनाद्यननुगमेनाननुगतत्वादितिवाच्यम् तावत्कालस्थायिनोद्रव्य-

---

योग्यतासंशयाज्जायमानःशाब्दबोधोनोपपद्येतेत्याह तस्यशाब्दधीहेतुत्वेचेति । विशकलितेति तथाच नीलोघटइत्यादौ इदंस्वाक्यं नीलविषयताकाभेदविषयताकघटविषयताकबोधपरमित्याद्याकारकमेव तात्पर्यज्ञानं हेतुरितिभावः । परमिति त्वर्थकम्। अनुगतरूपेणेति मासत्वत्वेनेत्यर्थः एवञ्च मासपदान्मासत्वत्वरूपानुगतधर्मेण तत्तत्त्रिंशत्त्वविशिष्टोपस्थितौ तद्धर्मवत्त्वनिरूपिताधेयत्वेन योग्येन सम्बन्धेन मासादेरभावान्वयोभवतीति नव्यापकत्वानुपपत्तिरिति । सर्वोपसंहारेणव्युत्पत्तिम्विनेति निखिलमासवृत्त्येकरूपेणशक्तिग्रहम्विनेत्यर्थः । नचेति वाच्यमितिपरेणान्वयः। द्रव्यानात्मकत्वेनेति एकसूर्योदयमारभ्यापरसूर्योदयपर्यन्तस्थायिपदार्थस्यैव पूर्वदिनत्वमुक्तं सचद्रव्यरूपएवेत्यत्र विनिगमकाभावेन गुणादिरूपोपिवाच्य इति भावः । अस्तुवा द्रव्यरूपएव तथापि न संख्यारूपं त्रिंशत्वंसम्भवतीत्याह द्रव्यात्मकत्वेपीति द्रव्याकत्वेऽपित्रिंशतामेकदास्थित्यभावेनाविद्यमानसमवायिकारणकगुणोत्पत्तेरसम्भवात् त्रिंशत्त्वं संख्यात्मकं न तेषु सम्भवतीतिभावः । न चापेक्षाबुद्धित्वमेवानुगतम् अपेक्षाबुद्धेः कदाचित् प्रत्यक्षरूपायाः कदाचिदनुमितिरूपायाश्च सम्भवात् प्रत्यक्षत्वादिना सांकर्येणापेक्षाबुद्धित्वस्य जातित्वाभावात् प्रत्यक्षत्वादिव्याप्यनानापेक्षाबुद्धित्वस्वीकारे सांकर्यविरहेऽपि तासांजातीनां पुनरनुगमासम्भव इतिभाव. । तत्तद्दिनविषयकत्वरूपस्येति न च प्रागुक्तस्य सूर्योदयविशिष्टत्वरूपस्य दिनत्वस्यानुगतत्वेन तत्तद्दिनविषयकापेक्षाबुद्धित्वमनुगतमेवेति वाच्यम तादृशापेक्षाबुद्धित्वस्य एकदिनादिविषयकबुद्धावपिसत्वात्तत्रापि त्रिंशत्त्वव्यवहारापत्तेः तादृशत्रिंशद्दिनानि धर्मीकृत्य प्रत्येकमेकत्वप्रकारकबुद्धिविशेष्यत्वमेव त्रिंशत्त्वमिति तदैवसम्भवति यदात्रिंशत्त्वमनुगतं स्यादितिबोध्यम् । तावत्कालस्थायिनइति यथा सूर्योदयक्षण-

स्यापि दिनादिरूपत्वसम्भवात्। मीमांसकानुयायिभिः सङ्ख्यायाः पदार्थान्तरत्वोपगमादगत्या तन्मतस्यैवाश्रयणीयत्वात् सङ्ख्यादिरूपनानादिनादिनिष्ठानुगतत्रिंशत्त्वादेः सुवचत्वाच्च। एवं मासमधीते चैत्र इत्यादावधिकरणतैव

---

विशिष्टस्यैकस्य दिनत्वं तथा त्रिंशद्दिनस्थायिन एकद्रव्यस्य मासत्वं तद्गतैकत्वस्यैव च मासपदार्थतावच्छेदकत्वमित्याशयः। नचैकद्रव्यस्य मासपदार्थत्वे एकदिनाध्ययनस्थले मासमधीत इति प्रयोगापत्तिः व्यापकत्वस्य प्रतियोगिवैधिकरण्यघटितस्यैव द्वितीयार्थत्वस्योक्तत्वादितिवाच्यम् व्यापकत्वघटकाभावे प्रतियोगिवैयधिकरण्यस्थाने मासत्वसमानाधिकरणंयन्निरुक्तसूर्योदयक्षणोत्पन्नापरसूर्योदयप्राक्क्षणस्थायिद्रव्यरूपदिनावच्छेद्याधिकरणत्वं तन्निरूपकत्वस्यविशेषणत्वात् तथाच यत्किञ्चिद्दिनाध्ययनस्थले मासत्वाधिकरणं यदध्ययनानधिकरणं दिनं तदवच्छेद्याधिकरणतानिरूपकत्वस्याध्ययनाभावे सत्वान्नोक्तप्रयोगापत्तिरिति। प्रकारान्तरेणसमाधत्ते मीमांसकानुयायिभिरिति नचैतत्पक्षेऽपि त्रिंशत्त्वत्वेन त्रिंशत्त्वस्य मासपदार्थतावच्छेदकत्वेऽतिप्रसङ्गः तत्तत्त्रिंशत्त्वत्वेन प्रवेशेचाननुगम इतिवाच्यम् सूर्योदयक्षणविशिष्टवृत्तित्रिंशत्त्वत्वेन तस्यमासपदार्थतावच्छेदकत्वात् वैशिष्ट्यञ्च स्ववृत्तित्वादिघटितानुपदोक्तचतुष्टयसम्बन्धेन तथाच क्रमेणैकसूर्योदयक्षणोत्पन्नापरसूर्योदयप्राक्क्षणस्थायिषु पदार्थेषु सूर्योदयक्षणविशिष्टेषु यत् त्रिंशत्त्वं तदेवमासपदप्रवृत्तिनिमित्तमतोनानुपपत्तिः नचैवमपि एकसूर्योदयक्षणोत्पन्नापरसूर्योदयप्राक्क्षणपर्यन्तस्थायिनोयावन्तः पदार्थाः तेषुसर्वेष्वेव विनिगमकाभावाद्दिनत्वमभ्युपेयम् तेषाञ्चैककालोत्पत्तिस्थितिमतां सर्वेषामेव सूर्योदयक्षणविशिष्टत्वेन तेषु त्रिंशत्पदार्थानादाय तद्गतत्रिंशत्त्वस्य वस्तुतएकदिवसेऽपि सत्त्वेनैकदिनाध्ययनस्थलेऽपि मासमधीते इतिप्रयोगापत्तिरितिवाच्यम् एकसूर्योदयक्षणविशिष्टवस्तुद्वयावृत्तित्वेनापि निरुक्तत्रिंशत्त्वस्य विशेषणीयत्वात्। अथैवमप्यन्तव्यवहितेष्वपि त्रिंशत्सुदिनेषु निरुक्तसूर्योदयक्षणविशिष्टत्वस्य सत्वात्तत्र मासव्यवहारस्यानिष्टत्वे मासमधीते इतिप्रयोगापत्तिरितिवाच्यम् स्वाश्रयाव्यवहितोत्तरत्वशून्यस्वाश्रयोत्तरावृत्तित्वेनापि त्रिंशत्वस्य विशेषणीयत्वात् तथाच निरुक्तातिव्यवहितदिनवृत्ति त्रिंशत्त्वे स्वाश्रयाव्यवहितोत्तरत्वशून्यंयत् स्वाश्रयोत्तरं तद्वृत्तित्वस्यैवसत्त्वान्नातिप्रसङ्गः नन्वेवमप्येकमासपर्यन्तस्थायिनो य ऊनत्रिंशत्पदार्थाः यश्चैकदिवसस्थायी निरुक्तसूर्योदयक्षणविशिष्ट एकः पदार्थस्तावद्गतत्रिंशत्त्वमादायैकदिनाध्ययनस्थले मासमधीते इतिप्रयोगापत्तितादवस्थ्यमिति चेन्न सूर्योदयक्षणविशिष्टत्वव्याप्यत्रिंशत्त्वस्यं मासपदार्थतावच्छेदकत्वात् एवञ्च प्रकृते सूर्योदयक्षणविशिष्टातिरिक्तमासपर्यन्तस्थायिपदार्थेऽपि त्रिंशत्त्वस्य सत्त्वान्न तस्योक्तव्याप्यत्वमतोनकश्चिद्दोष इत्यवगन्तव्यम्। लाघवमनुसृत्याह एवमिति। द्वितीयार्थइति तथाच तत्र प्रकृत्यर्थस्याधेयतयाऽन्वयः। एकदिनाध्ययनस्थलेऽपि मासनिष्ठाधिकरणतानिरूपकत्वस्य सत्वात्तत्र मासमधीते

द्वितीयार्थः । मासादिपदार्थतावच्छेदकदिनपर्याप्तत्रिंशत्त्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणतायां चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नं स्वरूपसंबन्धरूपमवच्छेद्यत्वं संसर्गतया भासतइत्युपगमेन सामञ्जस्यात् । यत्किञ्चिदेकमासं व्याप्य यत्राधीतं तत्राध्ययनाधारतानामवच्छेद्यतावच्छेदकाधारतावृत्त्यन्यतमत्वविशेषादिरूपोक्तधर्मावच्छिन्नानतिप्रसक्तत्वेन तद्वृत्तित्रिंशत्त्वेनावच्छेदात् न्यूनकालाध्ययनस्थले च अतिप्रसक्ततया तादृशस्य मासत्वस्योक्तरूपावच्छिन्नाधारतानवच्छेदकत्वाच्चाप्रसङ्गातिप्रसङ्गयोरनवकाशात् मासादिपदप्रवृत्तिनिमित्तधर्मे चैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दादलाभेऽप्यर्थतस्तल्लाभादितिद्वितीयाया अत्यन्तसंयोगार्थपरत्वमिति नानुशासनविरोधः । नच भूतलेघटः भूतलं घटवदितिप्रत्ययबलादतिप्रसक्तोऽपि धर्मं आधेयत्वाधारत्वयोरवच्छेदकइति वाच्यम् । तादृशप्रत्ययेऽवच्छेदकत्वभानानुपगमात् । आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे साध्यसामानाधिकरण्यावच्छेदकधर्मात्मकव्याप्तिशरीरे मिश्रादीनां स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्य व्यभिचारिण्यतिव्याप्त्या नह्यतिप्रसक्तमवच्छेदकमिति तत्स्थलीयचिन्तामणिफक्किकाविरोधेनचासंभवदुक्तिकतापत्तेः। आधारताया अतिप्रसक्तधर्मावच्छेद्यत्वे यद्धर्मविशिष्टहेत्वधिकरणत्वं साध्याधिकरणतावच्छेदकमिति तल्लक्षणव्याख्यापक्षे स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशं व्यभिचारिण्यतिव्याप्त्याऽदूषयित्वा विरुद्धदिक्कालावच्छिन्नवृत्तिकस्येत्या-

---

इतिप्रयोगापत्तिरतो धर्मिपारतन्त्र्येण मासत्वमप्यधिकरणतायामन्वेतीत्याह मासादिपदार्थतावच्छेदकेत्यादि। एतदारभ्याप्रसङ्गातिप्रसङ्गयोरनवकाशादेतत्पर्यन्तस्यायमाशयः द्वितीयार्थाधिकरणतायां प्रकृत्यर्थतावच्छेदकमासत्वस्यावच्छेद्यत्वसम्बन्धेनान्वयः तच्चावच्छेद्यत्वं स्वरूपसम्बन्धविशेषः तथाचैकदिनाध्ययनस्थले मासमधीते इत्यस्य नापत्तिः अवच्छेद्यतासम्बन्धेन मासत्वस्यतत्रासत्त्वात् अधिकदेशवृत्तितया मासत्वस्याधिकरणतानवच्छेदकत्वात् अथैवं मासदिनाध्ययनस्थलेऽपि मासमधीते इतिप्रयोगानुपपत्तिः तत्तद्दिननिष्ठाधिकरणतायास्तत्तद्दिनभेदेनभिन्नतया मासत्वस्य तत्तदधिकरणताधिकदेशवृत्तित्वादितिचेन्न प्रकृतावच्छेद्यतायाः स्वरूपविचारे एतच्छंकाया अनवतारात् तथाहि चैत्रकर्तृकाध्ययनाधारतात्वव्याप्यधर्मावच्छिन्नंयदाधारतानिष्ठमवच्छेद्यत्वं तदेव सम्बन्धः नतु सामान्यतोऽवच्छेद्यत्वमात्रम् उक्तव्याप्यश्चधर्मः चैत्रकर्तृकाध्ययनाद्याधारतानिष्ठान्यतमत्वरूपः एवञ्च मासदिनाध्ययनस्थले चैत्रकर्तृकाध्ययनाधारतात्वस्य मासघटकयावद्दिवसनिष्ठाध्ययनाधारतायां सत्त्वेनोक्तान्यतमत्वव्यापकत्वात्

दिदूषणान्तरेण तत्परित्यज्य दीधितिकृतामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया असङ्गत्यापत्तेः। अस्तुवाऽव्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्यापि दर्शितप्रतीतिवलादाधाराधेयभावावच्छेदकत्वम्। व्यासज्यवृत्तेस्त्वतिप्रसक्तस्य तदवच्छेदकत्वमप्रसक्तम्, क्षितिजलोभयं गन्धवत् स्नेहगन्धोभयं क्षितावित्याद्यप्रतीतेः। अथवा द्वितीयाद्यर्थेऽध्ययनाधारत्वे तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतापन्न तत्तन्मासत्वादिव्यक्तीनां व्यापकतासंबन्धेन पारतन्त्र्येण विशेषणमुपेयते। तादृशंच व्यापकत्वं, स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धेनस्वावच्छिन्नस्ययो भेदस्तदाश्रयधर्मवत्त्वं, तादृशधर्मश्च चैत्रोऽधीतइत्यादौ चैत्रीयाध्यायनाद्यधारतात्वं विशिष्यैव संबन्धेऽन्तर्भावनीयम्। मासान्तरनिष्ठतादृशाभावप्रति-

चैत्रकर्तृकाध्ययनाधारतात्वव्याप्यं यत्तावदन्यतमत्वं तदवच्छिन्नायाऽवच्छेद्यता तस्या एकस्याः स्वरूपसम्बन्धविशेषरूपाया उक्तत्रिंशदधिकरणतानिष्ठायास्त्रिंशद्घनिरूपितत्वसम्भवान्नदोषः। एकदिनाध्ययनस्थलेच चैत्रकर्तृकाध्ययनाधारता एकदिननिष्ठैव तन्निष्ठावच्छेद्यताच नोक्तत्रिंशदाधारतावृत्यन्यतमत्वावच्छिन्ना किंतु तद्व्यक्तित्वाद्यवच्छिन्नैव साच नत्रिंशत्स्वनिरूपितेति नातिप्रसङ्ग इति। व्याप्येति ल्यबन्तमेतत् मासपर्यन्तं यत्राध्ययनमितित्स मुदितार्थः। आधारतानामिति अस्यावच्छेद्यतया सह अवच्छेदादित्यनेनच सहान्वयः। उक्ताध्ययनाधारतानिष्ठा या अवच्छेद्यता तदवच्छदको य आधरतावृत्त्यन्यतमत्वादिरूपश्चैत्रकर्तृकाध्ययनाधारतात्वव्याप्योधर्मस्तदवच्छिन्नाः तदाश्रयाः, या अधिकरणताः तदनतिप्रसक्तत्वेनेत्यर्थः। तद्वृत्तित्रिंशत्त्वेन मासवृत्तित्रिंशत्वेन। तादृशस्यमासत्वस्येत्यादि तत्तद्दिनवृत्तित्रिंशत्स्वरूपमासत्वस्य चैत्रकर्तृकाध्ययनाधिकरणतानिष्ठायाऽन्यतमत्वानतिरिक्तवृत्त्यवच्छेद्यता तदवच्छेदकत्वाभावादित्यर्थः। ननुकालाध्वनोरितिसूत्रेऽत्यन्तसंयोगपदस्यात्यन्तिकसम्बन्धार्थकत्वात् व्यापकत्वस्य द्वितीयार्थत्वे यथोक्तसूत्रस्वारस्यं नतथाऽधिकरणतार्थकत्वे इत्यत आह मासादिपदेत्यादि। आधारतायाइति षष्ठ्यानिरूपितत्वमर्थः। शब्दादलाभेऽपीति अयमाशयः मासत्वेऽध्ययनाधारताव्याप्यत्वं यद्यपि न कस्यचिच्छब्दस्यार्थस्तथाप्यधिकरणतायां मासत्वस्यावच्छेद्यत्वसम्बन्धेनान्वये मासत्वे तद्व्याप्यत्वमपिसमायातमेव यस्ययन्निष्ठावच्छेद्यत्वनिरूपकत्वं तस्य तद्व्याप्यत्वमितिसामान्यव्याप्तेः। अतिप्रसक्तोऽपीति. प्रकृते तद्घटमात्रनिष्ठाधेयताया घटत्वमेवं तद्भूतलमात्रनिष्ठाधिकरणतायाभूतलत्वमतिप्रसक्तमप्यत्रच्छेदकंभवतीत्यर्थः। साध्यसामानाधिकरण्येति यत्सम्बन्धितावच्छेकरूपवत्त्वं यस्य तस्य साव्याप्तिरितिचिन्तामणौपाठः तत्र प्रथमं यत्पदं साध्यपरम्। सम्बन्धितापदं सामानाधिकरण्यपरं द्वितीयंयत्पदहेतुपरंतथाच साध्यसा-

योगितावच्छेदकत्वस्य तादृशधर्मे सत्त्वेऽपि तत्तन्मासत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मे उक्तसंबन्धेन तत्तन्मासत्वाद्यवच्छिन्नस्य यो भेदस्तदाश्रयत्वमक्षतमेवेति यत्किञ्चिदेकमासादिमात्रव्यापकाध्ययनादिस्थलेऽपि तादृशप्रयोगनिर्वाहः । प्रतिमासमधीतइत्यादौ प्रत्यादिशब्दानां मासादिपदोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभा-

---

मानाधिकरण्यावच्छेदकरूपवत्त्वमितिपर्यवसितम् । मिश्रादीनाम् पक्षधर मिश्रादीनाम् । स्वरूपसम्बन्धरूपेत्यादि यदिहि अतिप्रसक्तोऽपिधर्मो आधेयतावच्छेदकः स्यात्तदा धूमवानवह्नेरित्यादौ धूमसामानाधिकरण्यावच्छेदकं वह्नित्वमपिस्यादेवेत्यतः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यप्रवेशो मिश्रादीनां नयुक्तः स्यात किंत्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यप्रवेशोयुक्तः स्यादितिभावः। अतिव्याप्त्येति असम्भवदुक्तिकृतापत्तेरित्यनेनान्वयः । आलोकविरोधमुक्त्वा चिन्तामणिविरोधमाह नह्यतिप्रसक्तमिति यद्यतिप्रसक्तोऽपिधर्मोऽवच्छेदकः स्यात्तदैतद्ग्रन्थविरोधः स्पष्टएव । आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे दोषमभिधाय आधारताया अपि तथात्वे दोषमाह आधारतायाइति । तल्लक्षणेति यत्सम्बन्धितेत्यादि चिन्तामण्युक्तलक्षणेत्यर्थः । विरुद्धदिक्कालेत्यादि भूगोलकमुदयगिरिमत् अस्ताचलवत्वात् । कपालमेतद्घटवत् एतद्घटध्वंसादित्यादौ हेतुतावच्छेदकधर्मावच्छिन्नाधिकरणतायां साध्याधिकरणतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वासम्भवादव्याप्तिरतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वंनिवेशितम् एवञ्चाधिकरणताया अतिप्रसक्तधर्मावच्छेद्यत्वं यदिस्यात्तदाऽत्र धूमवान्वह्नेरित्यत्र प्रसिद्धस्थलएव वह्नित्वावच्छिन्नाधिकरणताया धूमाधिकरणतावच्छेदकत्वसत्त्वादतिव्याप्तेरप्रसिद्धोक्तस्थलाव्याप्त्यपेक्षयोत्कृष्टदोषरूपायाः सत्त्वे तदभिधानमेव दीधितिकृतामुचितंस्यादितिभावः । अव्यासज्यवृत्तित्वमिति व्यासज्यवृत्तित्वञ्चैकत्वान्यसंख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम् । दर्शितप्रतीतिबलादिति भूतलेघटः भूतलंघटवदिति प्रतीतिबलात् । व्याप्यवृत्तीति एतदनुक्तौ तु मासत्वाधिकरणेद्दिने तत्तत्क्षणावच्छेदेनाध्ययनाधारत्वाभावस्य सत्त्वाद्व्यापकत्वंनोपपद्येत अतएतदुक्तम् । स्वावच्छिन्नस्ययोभेदइति उक्तसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदइत्यर्थः । स्वपदं तत्तन्मासत्वपरम् । ननु यत्र चैत्रेण पञ्चदशदिनपर्यन्तमेवाधीतमवशिष्टदिनेषु अन्येनाधीतं तत्रापि चैत्रो मासमधीते इतिप्रयोगः स्यादध्ययनाधारतायां तन्मासत्वव्यापकत्वस्य सत्त्वादत आह तादृशधर्मइति। सामान्यतो मासत्वव्यापकत्वमपहाय तत्तन्मासत्वव्यापकत्वोक्तेः प्रयोजनमाह मासान्तरनिष्ठेत्यादि । एकपदवैयर्थ्यमिति इदन्तुचिन्तनीयमुपलक्षिरचरि

वघटितव्यापकताबोधकतया यत्किञ्चिदेकमासव्यापकाध्ययनादिस्थले न तादृशः प्रयोगः। अथात्यन्तसंयोगार्थकद्वितीयाया एकादिपदं विनापि यत्किञ्चिदेकमासादिव्यापकताबोधकत्वे उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यत्र एकपदवैयर्थ्यमिति चेन्न। तत्र मासाधिककालव्यापकत्वेऽपि मासव्यापकतयाधिककालव्यापकस्य होमस्य शास्त्रार्थतावारणायैकपदोपादानात्। तथा सति तस्य केवलार्थतया मासमात्रव्यापकतालाभात्तादृशप्रयोजनोपपत्तेः। अतएवच यावज्जीवमग्निहोत्रं जुहोतीतिश्रुतिबोधिताग्निहोत्रानुवादेन सतिलव्रीहिचरुरूपद्रव्यस्य मासैकरूपकालस्यच विधाने वाक्यभेदः स्यादिति तादृशद्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्र-

---

त्वामासमग्निहोत्रंजुहुवति मासंदर्शपूर्णमासाभ्यां यजन्तइति बहुवचनान्त एकपदाघटितएव च पाठः शास्त्रदीपिकादौ दृश्यते क्वचित् जुहोति यजेत इत्येकवचनान्तपाठस्य दृष्टत्वेऽपि मासमेकमित्येकपदघटितस्तु नक्वचिन्मीमांसाद्विग्रन्थे दृश्यते इति। मासाधिककालेऽपिक्रियमाणस्य होमस्य मासव्यापकत्वंसम्भवति तादृशश्च होमोनैतद्विध्यर्थोऽतस्तद्वारणायैकपदोपादानमित्याह मासाधिकेत्यादि। अतएव मासमात्रव्यापकत्वलाभादेव। अस्य पूर्वपक्षोनिरस्त इत्यनेनान्वयः। यावज्जीवमित्यादि मीमांसाद्वितीयाध्यायतृतीयपादस्य चतुर्विंशसूत्रे एतदधिकरणंविवेचितं तदिह संक्षेपतः प्रदर्श्यते कुण्डपायिनामयनेश्रूयते 'उपसद्भिश्चरित्वामासमग्निहोत्रं जुह्वति मासंदर्शपूर्णमासाभ्यां यजन्तइति, तत्र यावज्जीवमग्निहोत्रं जुहोतीति विधिप्राप्तमग्निहोत्रमनूद्य मासलक्षणोगुणोऽप्राप्तत्वादेतद्विधिना विधीयते नत्वग्निहोत्रनामकं कर्मान्तरमितिपूर्वपक्षे- एवंसिद्धान्तितम् किम्मासएवगुणोनित्याग्निहोत्रमनूद्य विधीयते अथवा उपसद्भिश्चरित्वेत्युक्तत्वात् उपसन्मासोभयम् तत्रनाद्यः उपसद्विधानस्य वैयर्थ्यप्रसङ्गात् नद्वितीयः प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदप्रसङ्गात् नच मासस्य पुरुषकृत्या सम्पादयितुमशक्यत्वादनुपादेयस्य तस्य नविधेयत्वं सम्भवतीति वाच्यम्। उपादेयमनुपादेयम्वा यदप्राप्तं तदेवहि विधेयंभवति अप्राप्तपक्षपातित्वाद्विधेः अतोमासस्याप्यप्राप्तस्य विधेयतया विधेयभेदेन वाक्यभेदो दुर्वार एव एवञ्चास्य वाक्यस्य कुण्डपायिनामयनरूपकर्मान्तरस्य प्रकरणेपठितत्वात् नित्याग्निहोत्रप्रकरणस्यासन्निहितत्वान्न तदुद्देशेन गुणविधानम् किन्तूपसन्मासाभ्यांविशिष्टं कर्मान्तरमेव विधीयते अग्निहोत्रशब्देन कीर्त्तनन्तु नित्याग्निहोत्रधर्मप्राप्त्यर्थमिति. अत्रचाहुतिविशेषरूपायाउपसद अव्यवहितोत्तरत्वसम्बन्धेनैवविधेयता एवञ्च सतिलव्रीहचरुरूपद्रव्यस्येतिउपसच्चरुकरणकत्वविशिष्टेति अथतादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्येत्यादिक ञ्चन सम्यक् प्रतिभाति उक्तवाक्योदितहोमेऽग्निहोत्रशब्दोत्थापितातिदैशिकदध्यादिरूपद्रव्यस्यैवप्राप्तेः उपसद्इतिहि न सतिलव्रीहिचरुरूपद्रव्यस्यनाम किन्त्वाहुतेर्नाम

पदप्रतिपाद्यस्य कर्मान्तरस्यैव विधायिका तादृशी श्रुतिरिति सिद्धान्ते यावज्जीवकालान्तर्गतमासरूपकालांशेऽप्यनुवादकतासम्भवात्प्राप्ताग्निहोत्रानुवादेन द्रव्यस्यैव विधानमुचितमिति पूर्वपक्षो निरस्तः। यावज्जीवमित्यादिश्रुत्या यावज्जीवव्यापकत्वे बोधितेऽर्थतो मासैकव्यापकतालाभेपि उपसच्चरुकरणकत्वविशिष्टहोमे तन्मात्रव्यापकताया अलाभेन तस्यापि विधेयतया वाक्यभेदस्य प्राप्ताग्निहोत्रानुवादेन द्रव्यविधिपक्षे दुर्वारत्वात्। अथ तादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्य विधायकत्वेऽपि न कथं वाक्यभेदः। विधेयभेदस्यैतावताप्यपरिहारात्। प्रत्युत धर्मिणोऽप्यधिकस्य विधानात्। एवंच 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत' इत्यपि निर्युक्तिकमिति चेन्न। यत्र विधेयांशे युगपदनेकधर्माणां विशेषणतया भानं तत्र विधेयविशेषणभेदेऽपि विशिष्टनिष्ठविधेयत्वाभेदेन वाक्यभेदविरहात्। अन्यथा भूतलं नीलघटवदित्यादावपि नीलवद्घटवदित्यादाविव वाक्यभेदप्रसङ्गात्। अनुवाद्यांशे विशेषणतया यत्रानेकेषां विधानं तत्र तेषां विधेयता भिन्नैवेति वाक्यभेदः। यद्यपि तत्रोपसच्चरुकरणकहोमाधिकरणतात्वेन अधिकारिविशेषकृततादृशहोमाधिकरणतात्वेन वा मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव, तत्तत्पुरुषकर्तृकतादृशहोमाधिकरणतात्वेन व्यापकतायाः श्रुतितात्पर्यविषयत्वे च विधेयानन्त्यम्, तथापि विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तितादृशचरुहोमाधिकरणतामात्रवृत्तिधर्मत्वेनानुगतीकृत्य तत्तत्पुरुषकर्तृकतादृशचरुहोमाधिकरणतात्वावच्छिन्नव्यापकतानां

---

तदुक्तम् आपस्तम्बश्रौतसूत्रे। ११ प्रश्ने। ३ खण्डे १२ सूत्रे स्रुवेणोपसदंजुहोतीति सूत्रव्याख्यायाम् उपसदित्याहुतिसमाख्या तामाज्यस्थाल्यामाज्येनजुहोतीति। तैत्तरीयसंहितायाम् १ काण्डे २ प्रपाठके १२ अनुवाकभाष्ये वैरिदुर्गोपसदनकारित्वेनैता आहुतयउपसद उच्यन्ते। तत्रैव उपसदामाज्यहविष्ट्वेनेत्यप्युक्तम्॥ तैरेतैस्त्रिभिर्मन्त्रैस्त्रिषुदिनेषु क्रमेणोपसदाख्या आहुतयो होतव्या इतिसायणभाष्यम्-तृतीयाध्याय तृतीयपादस्य त्रयोदशाधिकरणे अधिकरणमालायाम् दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्त्तव्याहोमाउपसदइत्युक्तमिति। कर्मान्तरस्येति यावज्जीवमग्निहोत्रं जुहोतीतिश्रुतिविहितमुख्याग्निहोत्रभिन्नस्येत्यर्थः। वाक्यभेदस्येति दुर्वारत्वादित्यनेनसम्बन्धः। यत्राप्राप्तकर्मस्थले कर्मण एकमनेकस्याविशेषणं तत्रं तत्तद्विशेषणविशिष्टस्यैवं कर्मणोविधानात् विशिष्टनिष्ठैकैव विधेयता नतु विशेषणभेदेनभिन्नेत्याह यत्रेत्यादि। भिन्नैवेति अनुवा-

संसर्गविधया विवक्षितत्वान्न दोषः। तादृशाधिकरणताद्वयावृत्तित्वं च, स्ववृत्तित्व-स्वनिरूपकहोमकर्तृनिष्ठभेदप्रतियोगिकर्तृकहोमाधिकरणतावृत्तित्वोभयसम्बन्धेनाधिकरणताविशिष्टान्यत्वरूपमनुगतं बोध्यम्। मासमधीतइत्यादावपि चैत्रादिकर्तृकाध्ययनाधिकरणतात्वरूपव्यापकतावच्छेदकधर्मस्योक्तानुगतरूपेणैवानुगमःकार्यः अतो मासमधीयानो दृष्ट इत्यादौ विशिष्य चैत्रत्वाद्यनुपस्थितावपि नान्वयबोधानुपपत्तिः। अन्यत्स्वयमूहनीयम्।

दण्डं विना न घट उत्पद्यते, रासभं विनापि घट उत्पद्यत, इत्यादौ विनापदार्थोऽभाववान्। तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयि प्रतियोगित्वमनुयोगित्वं वार्थः। अभाववतश्चोत्पत्तावाधारत्वेनान्वयः, तथाच दण्डाभाववद्वृत्त्युत्पत्तिकत्वाभाववान् घटो, रासभाभाववद्वृत्त्युत्पत्तिको घट इत्याकारको बोधः। यद्यपि निपातार्थे नामार्थस्य साक्षादपि भेदेनान्वयः तथापि संभवति सार्थकत्वे विभक्तेर्निरर्थकत्वमनुचितमिति द्वितीयायाः सार्थकत्वमुपेयते। भूतले न घटश्चन्द्रइव मुखमित्यादौ प्रथमायाः प्रतियोगिताद्यर्थकत्वे प्रथमैव न साधुः स्यात्। प्रातिपदिकार्थान्वयिनोन्यपदेनाभिधानस्थलएव प्रातिपदिकार्थेत्यादिसूत्रेण प्रथमाविधानादिति तत्र प्रतियोगित्वादिः संबन्धविधयैव भासतइत्युपेयते। दण्डं विना न घटोत्पत्तिरित्यादौ च विनान्तार्थे घटोत्पत्त्याद्यभावान्वयेऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते। द्रव्ये न गन्ध इत्यप्रयोगात् उपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इतिव्युत्पत्तेरिति रासभंविना न घटोत्पत्तिरिति न प्रयोगः। अतिप्रसक्ततया रासभाभावस्य घटोत्पत्त्याद्यभावानुयोगितावच्छेदकताविरहात्। अथवा अभाव एव विनार्थः दण्डं विना न घट इत्यादौ च विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासंबन्धेनैवा-

---

द्यस्य सिद्धत्वेनापूर्वत्वाभावात्तदंशे विधेयताविरहेण विशेषणांशे एवविधेयतायाः सत्त्वादितिभावः। प्रतियोगित्वमिति एतत्पक्षे निरूपकत्वसम्बन्धेन अनुयोगित्वपक्षेतु स्वरूपसम्बन्धेनाभावेऽन्वयः अनुयोगित्वेच प्रतियोगिनो निरूपकत्वसम्बन्धेनान्वयः। नन्वेवमन्यत्रापि गतिः सम्भवतीति भेदानन्वयनियमेनिपातातिरिक्तत्वं किमिति निवेशनीयमतआह भूतले न घटइति। अन्यपदेनेति अत्रशक्तिमत्त्वं पदत्वमिति नाभिप्रेतम् किंतु वैयाकरणपारिभाषिकमेवातोनानुपपत्तिः। विनान्तार्थे दण्डाभाववति। उक्तावच्छेकत्वभाने युक्तिमाह द्रव्येनगन्धइति। धर्मावच्छिन्ने धर्माश्रये। इतिव्युत्पत्तेरिति यदिहि उपलक्षणीभूतधर्मा-

न्वयः। अतएव रासभं विना न घट इत्यादयो न प्रयोगाः। अतएव दण्डाद्यभाववति घटादेर्वृत्तावपि जायते इत्यस्याध्याहारं विनैव दण्डं विना न घट इति प्रयोगोपपत्तिः। रासभं विना घट इत्यादौ च विनार्थस्याभावस्य सामानाधिकरण्यसंबन्धेन घटादावन्वयः। दीधितिकृताप्यविनाभावो व्याप्तिरित्यत्र साध्यं विना साध्याभाववति योभाव इति यद्व्याख्यातं तत्र सप्तम्यन्तेन संसर्गविधया भासमानं तदधिकरणनिष्ठत्वमेवोपात्तं नतु विनार्थत्वेनाधिकरणम्। अभावाधिकरणपर्यन्तस्यविनापदार्थत्वेऽपि सप्तम्याधेयत्वरूपापदार्थविवरणरूपताया आवश्यकत्वात्। नच विनापदोत्तरलुप्तसप्तम्यर्थ एवाभाववतीति सप्तम्या विवृत इति वाच्यम् निपातोत्तरविभक्तेर्निरर्थकत्वात्। अतएव सर्वत्र निपातोत्तरं साधुत्वार्थं प्रथमैवेति शाब्दिकाः। पृथिव्यामेव गन्ध इत्यादावेवकारप्रकृतिकसप्तम्या यदाधेयत्वबोधकत्वमङ्गीकृतं दीधितिकृद्भिस्तत्रापि तेषां न निर्भरः। अस्तु वा तत्र प्रतियोगितया पृथिव्यन्यवृत्तित्वभानानुरोधेनैवकारस्यान्यवृत्तित्वार्थकत्वं गौरवादुपेक्ष्य तत्राधेयत्ववाचकत्वेन क्लृप्तायाः सप्तम्याः कल्पनम्। प्रकृते चाधेयत्वस्य संसर्गतयैवोपपत्तौ विनापदसाकाङ्क्षाधेयत्वार्थकसप्तमीकल्पनं दुष्कल्पनमेव। एवकारस्थलेचाभावरूपएवार्थंन्यरूपतदर्थान्तरस्याधेयतासम्बन्ध इति न सम्भवति आधेयतादेस्तद्वत्येव संबन्धत्वात्। नतु तदभावे। नच तत्राधेयत्वाभावो न प्रतीयत अपितु तत्सम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्याद्यन्याभाव इत्युपेयम् तादृशप्रतियोगिताकत्वमेवाभावेऽन्यस्य सम्बन्धोस्त्विति वाच्यम्। आधेयतासंबन्धस्य प्रतियागिन आधारस्यानुयोगिन्या-

---

श्रयेऽपि नञर्थान्वयः स्यात्तदा द्रव्येनगन्ध इति प्रयोग आपद्येत गन्धाभावे द्रव्यत्वसामानाधिकरण्यस्य सत्वात् द्रव्यत्वस्य विशेषणत्वेतु विशिष्टान्वयमहिम्ना लब्धस्य द्रव्यत्वावच्छेदेन गन्धाभावान्वयस्यानुपपत्त्या न तादृश प्रयोगः। अतिप्रसक्ततयेति रासभाभावस्य घटोत्पत्तिमद्देशेऽपिसत्वात्॥ व्याप्तिवादचिन्तामणौ पूर्वपक्षग्रन्थे नाप्यविनाभाव इत्युक्तम् तद्व्याख्यायां दीधतौ साध्यपदमध्याहृत्य साध्यंविना साध्याभाववति यो भावोवृत्तिस्तद्विरह इत्युक्तम तत्राधिकरणपर्यन्तस्य विनार्थकुत्वोक्तिर्विरुध्यते इत्यत आह दीधितिकृताऽपीति ननुपृथिव्यामेव गन्ध इत्यादौ सप्तम्यर्थः प्रतियोगित्वम अन्योऽभावश्चैवकारार्थः एवकारोत्तरलुप्तसप्तम्या वृत्तित्वमर्थस्तस्य प्रतियोगितासम्बन्धेनाभावेऽन्वयः तथाच पृथिव्यन्यवृत्तित्वाभाववान्गन्धइतियोधो दीधितिकृत्सम्मतः सचनिपातोत्तरविभक्तेर्निरर्थकत्वोपगमे नोपपद्यते इत्यतआह पृथिव्यामेवगन्धइत्यादाविति। अस्तुवेति सप्तम्याः कल्पनमित्यनेनान्वयः

थेये वृत्त्यनियामकत्वेभावप्रतियोगितानवच्छेदकत्वात् । चैत्रः पचतीत्यादौ कृत्यादिसंबन्धस्यापदार्थत्वेऽपि पाककृतिमानित्यादौ मतुवादिपदेन विवरणवत् उक्तस्थले सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमासादयति । विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेरित्यलमसदावेशेन। विना वातं वृक्षः पतित इत्यादौ विनापदार्थस्याभावस्याश्रयतासंबन्धेन वृक्षेऽन्वयाद्वाताभावविशिष्टो वृक्षः पतित इति शब्दतो लभ्यते पतनेऽनुभवसिद्धो वातजन्यत्वाभावलाभश्चार्थः, जन्यतायाः पदानुपस्थाप्यत्वात् तदभावस्य तस्यवृत्त्यनियामकसंबन्धत्वात्तदवच्छिन्नवाताभावस्य च शब्देन बोधयितुमशक्यत्वात् । पुत्रं विना गत इत्यादौ पुत्रादिपदं लक्षणया पुत्रगमनादिपरम । विनापदबोध्यतदभावश्च समानकालीनत्वादिसंबन्धेन गमनेऽन्वेति। समानकालीनत्वघटकं कालनिष्ठं स्वाधिकरणत्वमनवच्छिन्नं बोध्यमतो गमनादिकाले तदनधिकरणदेशावच्छेदेन गमनाद्यभावसत्त्वेऽपि नातिप्रसङ्गः । केचित्तु उक्तस्थलेऽसाहित्यमेव विनापदार्थः तस्य च गमनादिकर्तर्य्यन्वयः असाहित्यं च स्वकर्तृकसमभिव्याहृतगमनादिक्रियासमानकालीनतादृशक्रियाकर्तृत्वरूपसाहित्याभावः, क्रियान्वयिस्वकर्तृकतादृशक्रियासमानकालीनत्वाभाव एव वा विनार्थः । कर्तृत्वे पुत्रादेराधेयत्वेनान्वयः विभक्तिः साधुत्वार्थैव अस्तुवाधेयत्वं द्वितीयार्थः सप्तम्या अधेयत्वार्थकत्वेऽपि नात्र सप्तमीप्रसक्तिस्तस्याः कारकविभ-

---

। एवार्थे एवकारार्थे। तदर्थान्तरस्य एवकारार्थान्तरस्य । तत्सम्बन्धेति आधेयत्वसम्बन्धेत्यर्थः। इत्युपेयमिति पदग्रे तथाचेतिशेषः। उक्तस्थले अविनाभावो व्याप्तिरित्यत्र । आर्थइति प्रमाणान्तरजन्यज्ञानविषय इत्यर्थः । गमनेऽन्वेतीति तथाचोक्तवाक्यात् पुत्रकर्तृकगमनाभावसमानकालीनगमनाश्रयः प्रतीयते । स्वाधिकरणत्वमिति स्वंगमनाभावः । स्वकर्तृकसमभिव्याहृतेति स्वकर्तृकाया समभिव्याहृतगमनादिक्रिया तत्समानकालीनाया गमनादिक्रिया तत्कर्तृत्वेत्यर्थः। ननु पुत्रंविनागत इत्यादौ स्वपदेन पितुर्ग्रहणे द्वितीयाप्रकृत्यर्थंपुत्रस्याग्रिमे तादृशक्रियाकर्तृत्वे आधेयतासम्बन्धेनान्वया वाच्यस्तथाच पुत्रनिष्ठंयत्पितृकर्तृकगमनसमानकालीनगमनकर्तृत्वं तदभाववान् गमनानुकूलकृतिमान् पितेत्यन्वयबोधोऽङ्गीकरणीयस्तथाच यत्र पुत्रेणसाकंपितागच्छति तत्रापि पुत्रंविनापितागत इतिप्रयोगापत्तिः पुत्रनिष्ठस्यकर्तृत्वस्य पुत्रएव सत्वात् स्वपदेन पुत्रस्यग्रहणे उक्तदोषवारणेऽपि द्वितीयाप्रकृत्यर्थस्य पुत्रस्यानन्वयोदुर्वारइतिचेन्न स्वपदार्थस्य हि द्वितीयाप्रकृत्यैव लाभेन स्वकर्तृकेत्यस्य कर्तृत्वनिरूपकेत्यत्रतात्पर्यात् प्रथमकर्तृत्वे आधेयत्वसम्बन्धेन द्वितीयाप्रकृत्यर्थस्य पुत्रादेरन्वयान्नानुपपत्तिः। लाघवा-

क्तित्वेन क्रियान्वयिस्वार्थबोधकत्वात् । अतःशेषषष्ठीप्रसक्त्या तामेवोपपदविभक्ति-र्द्वितीया बाधत इतिसर्वा उपपदविभक्तयः षष्ठ्यपवादिकाइत्यस्याविराध इति । विनासमानार्थकयोर्ऋतेऽन्तरेणेति निपातयोरपि दर्शितव रीतिः एवं विनायुक्त-तृतीयापञ्चमीस्थलेऽपि ॥ मर्यादाभिविध्यर्थकयावच्छब्दयोगेपि द्वितीया दृश्यते, तत्र मर्यादार्थको यावच्छब्दः आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेत्पर्वतराजपुत्रीमित्या-दौ मर्यादा सीमा कालरूपा देशरूपा च कालनिष्टं तत्त्वंच तत्कालनिष्ठं समभिव्या-हृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभि-व्याहृतक्रियानधिकरणत्वम् । एवंचोक्तस्थले यावच्छब्देन पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते । तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते । तन्निष्ठसीमात्वनिरूपकत्वंच तदवृत्तित्वे सति कृष्णनवमीप्राग-भावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम् । तावता षोडश-तिथ्यधिकरणकषोडशपूजारूपस्यैककर्मणो विधेयतया लाभः व्याप्यकालसमुदाये स्वसजातीयत्वविशेषणात्पूजायामुक्तविशेषणद्वयाक्रान्तदण्डादिसमुदायाव्यापकत्वेपि न बाधः । अन्वयितावच्छेदकरूपेण साजात्यस्य विवक्षणादुक्तस्थले च तिथिमि-त्यस्याध्याहारेण दशमीपदार्थतावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्व-यितावच्छेदकतया तिथित्वभानात्तेन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात् । तिथिश्चाखण्डकालविशेषरूपा, नतु चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयरूपा पूजायास्तावत्क्रियावृत्तित्वासम्भवात् । अत्रच प्रागभाव एव यावत्पदार्थः द्विती-यार्थः प्रतियोगित्वमनुयोगित्वं वा, तत्र तत्प्रकृत्यर्थदशम्या अन्वयः तावता दशमीप्रतियोगिकप्रागभावलाभः । तस्य स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासं-

---

दाह क्रियान्वयीति एतच्च परिचायकम्। तादृशक्रिया समभिव्याहृतगमनादिक्रिया। मर्यादाभिविध्यर्थेति तेनविना मर्यादा तत्सहितोऽभिविधिः । तत्त्वञ्च सीमात्वञ्च । समभिव्याहृतेत्यादि तथाच कृष्णनवमीप्रागभावानधिकरणरूपः शुक्लदशमीप्रागभावाधिकरणरूपः तिथित्वेनधर्मेण शुक्लदशमीसजातीयो यावान् स कृष्णनवमीमारभ्य शुक्लदशमीतः प्राक्कालएव नवमीतः प्राक्कालस्य नवमी-प्रागभावानधिकरणत्वाभावात् शुक्लदशम्यादिरूपकालस्यच तद्दशमीप्रागभावा-धिकरणत्वाभावात् एवञ्चोक्ततत्तत्तिथ्यात्मककालवृत्तिर्या समभिव्याहृतपूजारूपा क्रिया तदनधिकरणत्वं दशम्यामस्तीति तस्याः सीमात्वोपपत्तिः तदेतत्स्पष्टयति तन्निष्ठसीमात्वेति उक्तदशमीनिष्ठसीमात्वेत्यर्थः । तदवृत्तित्वेसतीति दशम्याः पूजाधिकरणत्वेऽप्युक्तव्यापकत्वंस्यादेवेत्यत एतदुक्तम् । यावत्पदार्थान्वयितेति

बन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः व्यापकत्वंच स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदकपूजाविशेषत्ववत्त्वम् । स्वाधिकरणत्वंच स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासंबन्धेन । एतेन कृष्ण नवमीप्रागभावाधिकरणप्रतियोगिकभेदस्याव्यावर्त्तकतया तत्सामान्यभेदनिवेशे भाविकृष्णनवमीप्रागभावाधिकरणत्वमादायाप्रसिद्धिरितिपरास्तम् । तथासत्यपि तत्तद्दशमीप्रागभावाधिकरणकालस्य स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वसंबन्धेन तत्तत्प्रागभावाधिकरणत्वाक्षतेः। नचैवमपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदघटितसंबन्धेनाव्यवहितपूर्वकृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात्तदधिकरणतिथिव्यापकत्वं पूजायां न संभवतीति वाच्यम् स्वावच्छिन्नकृष्णनवमीप्रागभावाधिकरणत्वसंबन्धेन स्वावच्छिन्नभेदस्यैव प्रागभावसंबन्धे निवेशनीयत्वात् । स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशावच्छे-

---

सीमारूपस्य यावत्पदार्थस्यान्वयितेत्यर्थः । अनुयोगित्वस्वेति तत्र दशम्यानिरूपितत्वसम्बन्धेनान्वयः तथाच दशमीनिरूपितानुयोगितावत्प्रागभावोर्थः तावताऽपिदशमीप्रतियोगिकप्रागभावएव लभ्यते । स्वाधिकरणेति स्वपदं दशमीप्रागभावपरम् एवमग्रेऽपि । स्वप्रतियोग्यवृत्तित्वेत्यादि स्वप्रतियोग्यवृत्तित्व स्वव्यापकत्वोभयसम्बन्धेनेत्यर्थः । ननु कालिकसम्बन्धेन दशमीप्रागभावाधिकरणत्वस्य विवक्षितकृष्णनवमीतः प्राक्कालेऽपिसत्त्वाद्व्यापकत्वानुपपत्तिरतआह स्वाधिकरणत्वञ्चेति अत्रभाविकृष्णनवमीव्युदासायकालिकपर्यन्तानुधावनम् । अव्यावर्तकतयेति कृष्णनवमीप्रागभावाधिकरणनिष्ठद्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदस्य कृष्णनवमीप्रागभावाधिकरणकालेऽपि सत्त्वात् । तत्सामान्यभेदनिवेशइति कृष्णनवमीप्रागभावत्वातिरिक्तधर्मानवच्छिन्नप्रागभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदस्य निवेश इत्यर्थः। तथासत्यपीति उक्तसामान्यभेदस्याप्रसिद्धत्वेऽपीत्यर्थः । अक्षतेरिति स्वपदस्य विशेषविश्रान्तत्वात् । ननु शुक्लदशमीप्रागभावस्य तादृशभेदविशिष्टकालिकसम्बन्धेनाधिकरणत्वमव्यवहितकृष्णनवमीतः प्राक्कालीनास्वपि तिथिषुवर्तते तत्पूर्वकृष्णनवमीप्रागभावस्य विनाशेन तस्यामपि तादृशकृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वादित्याशंकां निराकरोति नचैवमपीति दशमीप्रागभावावच्छिन्नत्वस्य कृष्णनवमीप्रागभावे निवेशेऽपीत्यर्थः। स्वावच्छिन्नेति स्वाश्रयेत्यर्थः । स्वावच्छिन्नभेदस्येति स्वावच्छिन्नप्रतियोगिताकभेदस्येत्यर्थः। स्वपदंशुक्लदशमीप्रागभावपरम्। निवेशनीयत्वादिति तथाचोक्त-

दकत्वसंबन्धेन स्वावच्छिन्नस्य भेदः। अतस्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किञ्चिद्दशमीप्रागभावाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वमादायासिद्धिवारणाय विशिष्य तत्तत्प्रागभावरूपस्वपदार्थस्य संबन्धमध्ये प्रवेश्यतयाननुगमइति निरस्तम्॥ देशरूपा सीमाच काशीतः कौशिकीं यावद् यातीत्यादौ। तत्र कौशिक्याः गमनसीमात्वं प्रतीयते। तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्वम् यावत्पदेन च कौशिक्यनधिकरणकत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते। तत्र द्वितीयार्थोऽवधित्वमवधिमत्वं वा प्रतीचीत्वाद्यन्वयि निष्कर्षः पूर्ववत्स्वयमूहनीयः॥ अभिविध्यर्थो

---

व्यवहिततिथिषु एतत्सम्बन्धेन स्वस्यैवसत्त्वान्नानुपपत्तिः। अत्रयद्यपि स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिताकभेदस्य न्यूनवारकेतरवारकपर्याप्तिघटितस्य प्रवेशेऽप्युक्तदोषोन सम्भवति स्वाश्रयीभूतयत्किञ्चित्कृष्णनवमीप्रागभावस्य सत्त्वे निरुक्तभेदविरहात्तथापि लाघवादिदमुक्तम्। स्वाधिकरणनिष्ठाभावेत्यादि एतदारभ्याननुगमम् एतत्पर्यन्तस्यायमभिप्रायः। अथनिरुक्तभेदविशिष्टकालिकविशेषणतया शुक्लदशमीप्रागभावाधिकरणत्वमुक्तपूजानधिकरणेष्वपि तिथिष्वस्तीत्यतोनपूजायाः शुक्लदशमीप्रागभावव्यापकत्वं संगच्छते यदिच यद्यद्दशमीपूर्ववर्तिनीं नवमीमारभ्योक्तपूजनं विहितं तत्तद्दशमी प्रागभावव्यापकत्वंविवक्ष्यतेतदाऽननुगमइतिचेन्न शुक्लदशमीप्रागभावावच्छिन्नप्रतियोगिताकभेद एव देवीपूजायां विवक्षितः भेदश्च स्वाधिकरणत्ववन्निष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकः। स्वाधिकरणत्वञ्च स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिताकभेदविशिष्टकालिकसम्बन्धेन एवञ्च दशमीप्रागभावत्वेन तत्तत्प्रागभावानामुपस्थितत्वेऽप्युक्तसम्बन्ध घटकस्वपदेनैकैकव्यक्तिरेवग्राह्येत्यतोन दोषः नचसंसर्गघटकतयाऽपिस्वत्वप्रवेशेऽननुगमएवेति वाच्यम् स्वत्वस्यात्र परिचायकतयैव प्रवेशात् तन्निरूपिताधिकरणत्वघटितसम्बन्धे तदन्याप्रतियोगिकत्वादिति। कौशिक्यनधिकरणकत्वेसतीति एतदन्तञ्च कौशिकीतोऽधिकगमनेऽपि काशीतः कौशिकींयावद्यातीति प्रयोगवारणायोक्तम्। कौशिकीसमीपगमनशून्येऽपि चैत्रादौ कौशिकींयावद्यातीति प्रयोगवारणाय विशेष्यदलम्। ननु कौशिकींयावद्गच्छतोऽपि केनचिदेकेनैवाध्वना गमनं भवतीति कथं तदीयगमनं काशीपूर्वकौशिकी पश्चिमसर्वदेशव्यापकमितिचेन्न दैशिकविशेषणत्व स्वाश्रयवत्त्वान्यतरसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात् स्वाश्रयवत्त्वञ्च स्वनिरूपितदक्षिणत्वोत्तरत्वान्यतर सम्बन्धेन। तथाच येन मार्गेण गच्छति तस्मिन् मार्गे दैशिकविशेषणतायाः तदतिरिक्तमार्गे स्वाश्रयवत्त्वस्यच सत्त्वान्नानुपपत्तिरिति। देशव्यापकत्वमिति देशनिष्ठा व्याप्यता तादात्म्यसम्बन्धावच्छिन्ना। निरूपकत्वस्य वृत्त्यनियामकतया

यावच्छब्दः कार्तिकमारभ्य चैत्रं यावच्छीतं भवतीत्यादौ काशीतः पाटलिपुत्रं यावद्वृष्टो देव इत्यादावभिविधिस्तत्पर्यन्ताभिव्याप्तिः । एवंच प्रथमे कार्तिकपूर्वकालोत्तरचैत्रोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने द्वितीये च काशीपश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावच्छब्देन प्रत्याय्यते । विशेषः पूर्ववत ॥ यावच्छब्दसमानार्थाकाङ्शब्दस्थलेऽपि दर्शितव रीतिरवसेया । तद्योगे च पञ्चमी साधुः ॥ यज्ञमनु प्रावर्षदित्यादावनुशब्दार्थः कारकत्वरूपं हेतुत्वम् अनुर्लक्षणइत्यत्र कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात् । तत्रच यज्ञान्वितस्याधेयत्वरूपद्वितीयार्थस्यान्वयः हेतुतायाश्च निरूपकत्वसम्बन्धेन वृष्टावन्वयः, जन्यत्वं वानुशब्दार्थः तत्र निरूपितत्वरूपद्वितीयार्थस्य

---

तस्याभावप्रतियोगितावच्छेदकसम्बन्धत्वाभावमभिसन्धायाह अवधिमत्त्वम्वेति । निःकर्षइति यावच्छब्दार्थे द्वितीयान्तार्थस्य कौशिकीनिरूपितावधिमत्त्वस्यान्वयः। यावच्छब्दार्थप्रतीचीत्वस्यच स्वावध्यवृत्तित्वस्वव्यापकत्वोभयसम्बन्धेन गमनादिक्रियायामन्वयः व्यापकत्वन्तु स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वम् अवच्छेकताच स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना स्वाधिकरणताच काशीनिरूपितपूर्वत्वविशिष्टस्वरूपसम्बन्धेन तत्र स्वावध्यवृत्तित्वविशेषणाद्भिविधिस्थलव्यावृत्तिः केवलस्वरूपसम्बन्धेन प्रतीचीत्वाधिकरणे प्रयागादौ गमनस्यासत्त्वाद्व्यापकत्वानुपपत्तिरतः काशीनिरूपितपूर्वत्वविशिष्टेत्युक्तम् । कार्त्तिकपूर्वकालेत्यादि आश्विनोत्तरत्वविशिष्टोयो वैशाखपूर्वत्वविशिष्टः कालस्तद्व्यापकत्वमित्यर्थः । चैत्रोत्तरकालावृत्तित्वेत्यादि एतच्च फाल्गुनं यावच्छीतमिति प्रयोगवारणाय तदुत्तरकालावृत्तित्वस्यापिभानोपगमादुक्तम् । काशीपश्चिमदेशेत्यादि काशीपश्चिमदेशात्पूर्वदेशोयः काश्यादिः यश्च पाटलिपुत्रपूर्वदेशातपश्चिमदेशः पाटलिपुत्रादिस्तद्व्यापकत्वमित्यर्थः पाटलिपुत्रात्पूर्वस्मिन्देशे वृष्टौजातायां काशीतः पाटलिपुत्रंयावद्वृष्टोमेघ इतिप्रयोग वारणायाह पाटलिपुत्रपूर्वदेशावृत्तित्वेति । विशेषः पूर्ववदिति यावच्छब्दस्या व्यवहितोत्तरक्षणपूर्वत्वमर्थः । द्वितीयान्तार्थस्य चैत्रनिरूपितत्वस्याव्यवहितोत्तरत्वेऽन्वयः उक्तपूर्वत्वरूपयावच्छब्दार्थस्य स्वानधिकरणकालावृत्तित्व स्वनिष्टावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपव्यापकत्वोभयसम्बन्धेन समभिव्याहृतशीतादिपदार्थेऽन्वयः स्वनिष्ठावच्छेदकताच कार्त्तिकाव्यवहितपूर्वक्षणप्रतियोगिकध्वंसाश्रयत्वविशेषितस्वाश्रयवृत्तिभेदप्रतियोगितावच्छेकत्वसम्बन्धेन तत्र विशेषितान्तेत्युक्त्या कार्त्तिकपूर्वकालव्यावृत्तिः स्वानधिकरणेत्यादिद्वितीयसम्बन्धनिवेशाच्चैत्रोत्तरकालव्यावृत्तिरिति । कारकत्वरूपम् क्रियाजनकत्वरूपम् तथाच

यज्ञान्वितस्यान्वयः, जन्यतायाश्चाश्रयत्वसम्बन्धेन वृष्टावन्वयः। अन्वर्जुनं योद्धार इत्यत्राप्रकर्षरूपं हीनत्वमनुशब्दार्थः अर्जुनावधिकत्वं द्वितीयान्तार्थस्तस्य चापकर्षेऽन्वयः। अवधित्वस्यापादानतारूपत्वेऽपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः अस्मादयं दीर्घ इत्यादौ भवतीत्यस्याध्याहारेणैव पञ्चम्युपपादनात्। अतः षष्ठ्यपवादतानिर्वाहः। वृक्षं प्रति विद्योतते विद्युत्, मातरं प्रति साधुः, यो मां प्रतिस्यात्, वृक्षं वृक्षं प्रतिसिञ्चतीत्यादौ लक्षणेत्थंभूतेत्यादिसूत्रानुशिष्टकर्मप्रवचनीयसञ्ज्ञकप्रत्यादिशब्देषु प्रथमे परिचायकत्वरूपं लक्षणत्वं परिचेयत्वरूपं वा लक्ष्यत्वं कर्मप्रवचनीयार्थः। वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता। द्वितीयार्थश्चाधेयत्वं निरूपितत्वं वा। द्वितीये साधुत्वं प्रियकारित्वं साधुत्वघटकप्रियान्वयी संबन्धः कर्मप्रवचनीयार्थः। संबन्धान्वयि प्रतियोगित्वं तन्निरूपकत्वं वा द्वितीयार्थः मातृसम्बन्धिप्रियकारीत्याकारको बोधः। तृतीये भागः स्वत्वाश्रयः प्रत्याद्यर्थः तदन्वयी सम्बन्धो द्वितीयार्थः इत्थंचास्मत्सबंन्धी यो भागः स्यादिति बोधः। चतुर्थे कर्मण्येव द्वितीया, षत्वबाध एव संज्ञाफलम् प्रतिश्च निरर्थकः गृहे गृहेऽश्वइत्यादाविव व्यापकताया द्विरुक्तिबललभ्यत्वात्प्रतिशब्दस्य व्यापकतार्थकत्वउक्तार्थकत्वेन गृहं व्याप्नुवतेऽश्वा इत्यादाविव द्विरुक्तिरेव न स्यात्। नच प्रतिशब्दस्यापि व्यापकतार्थकत्वं प्रतिदिनमधीतइत्यादौ क्लृप्तम् द्विरुक्तेरपि वृक्षं वृक्षं सिञ्चतीत्यादौ क्लृप्तमिति प्रकृते संभेदे नान्यतरवैयर्थ्यमितिन्यायाद्द्वयोरेव व्या-

---

यज्ञवृत्तिहेतुतानिरूपकवर्षणंप्रतीयते। वृत्त्यनियामकस्य प्रतियोगितावच्छेदकसम्बन्धत्वाभावादाह जन्यत्वम्वेति। नन्ववधित्वार्थे पञ्चम्यनुशासनाद्द्वितीयानुपपत्तिरत आह अवधित्वस्येति। अध्याहारेणैवेति नच भवतीत्यादेरध्याहारेऽपि अवधित्वनिरूपकत्वस्य दीर्घत्वएवान्वयो नतु भवनादाविति न तत्रापि क्रियान्वयित्वमितिवाच्यम् यतो भवनादाववधित्वस्यान्वयेऽपादानसंज्ञाविरहात् सम्बन्धसामान्ये षष्ठ्येवस्यादतो दीर्घभवनादावेवावधित्वान्वयः। परिचायकत्वरूपमिति तस्य निरूपकत्वसम्बन्धेन विद्युदादावन्वयाद्वृक्षनिष्ठपरिचायकतानिरूपिका विद्युत् प्रकाशनवतीत्यर्थः। लक्ष्यत्वपक्षेऽप्याह निरूपितत्वम्वेति। कर्मण्येवेति कर्मप्रवचनीययुक्तेद्वितीयेत्युपपदविभक्त्यपेक्षया कर्मणिद्वितीयेतिकारकविभक्तेर्बलीयस्त्वात्। षत्वबाधइति कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञायाबाधादुपसर्गात्सुनोतीतिसूत्रेण नषत्वम्। ननु प्रतेर्व्यापकत्वार्थकतया न निरर्थकत्वमत आह गृहेगृहइति। द्विरुक्तिरेवनस्यादिति उक्तार्थानामप्रयोगइति शाब्दिकसिद्धान्तादितिभावः। सम्भेदे नान्यतरवैयर्थ्यमिति एकार्थबोधकपदयोरेकत्रवाक्ये सम्भेदे सम्बन्धे

पकताबोधकत्वमवर्जनीयमिति वाच्यम्। प्रतिमासमधीतइत्यादावव्ययीभावे हि प्रथमातिरिक्तविभक्तेरसाधुत्वेन प्रतिशब्देन मासान्वितव्यापकत्वं क्रियायां बोध्यते विभक्तिः साधुत्वार्था। वृक्षं वृक्षं प्रति सिञ्चतीत्यत्रतु सेके द्वितीयार्थकर्मत्वावरुद्ध प्रकृत्यर्थवृक्षविशेषितव्यापकता बोधयितुं न शक्यते। एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधात्। कर्मत्वसंबन्धस्यैव च व्यापकताघटकत्वेन स्वीकरणीयतया वृत्त्यनियामकस्य तस्य तथात्वासंभवाच्च। तस्य सेककर्मत्वआश्रय-

---

'एकवाक्यघटकत्वेसति' अन्यतरस्य वैयर्थ्यं न भवति किन्तूभयोरेवतदर्थकत्वं विनिगमकाभवादित्यर्थः। प्रथमातिरिक्तेत्यादि एतदुक्तिः प्रतिशब्दस्य व्यापकत्वार्थकत्वदार्ढ्याय। साधुत्वार्थेति निरर्थिकाऽपि प्रथमा नकेवलाप्रकृतिः प्रयोक्तव्येत्यनुशासनाद्भवति। नशक्यतइति प्रतिशब्देनेति शेषः। अयमाशयः प्रतिशब्दस्यवृक्षादिव्यापकत्वार्थकत्वेशक्तेरानन्त्यंस्यादतःकेवलं व्यापकत्वमर्थो वाच्यस्तस्मिंश्च द्वितीयाप्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनान्वयइतितु न सम्भवति वृक्षस्य द्वितीयार्थाधेयत्वान्वितत्वेन प्रतिशब्दार्थव्यापकत्वेन सहान्वयासम्भवादिति। नन्वस्तूभाभ्यामेवसह वृक्षादेरन्वयोऽत आह एकविशेषणत्वेनेत्यादि अयम्भावः धर्मिपारतन्त्र्यं विनैकपदार्थनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकोपस्थितिविषयत्वस्य तदन्यपदार्थनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकत्वन्न भवति एवञ्च प्रकृतिप्रत्ययौ सहार्थंब्रूत इतिनियमात् प्रकृतिप्रत्यययोगृहीताकाङ्क्षत्वेन द्वितीयार्थकर्मत्वे प्रकृत्यर्थान्वयस्यावश्यकत्वात् वृक्षपदजन्योपस्थितीयविषयतायां कर्मत्वनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकत्वस्यावश्यकतया व्यापकत्वनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकत्वं न सम्भवति प्रत्ययार्थनिष्ठविशेष्यताकस्वार्थनिष्ठविशेषणताकबोधसामग्र्याः प्रत्ययार्थेतरनिष्ठविशेष्यताकस्वार्थनिष्ठप्रकारताकबोधं प्रति प्रतिबन्धकत्वादिति। नन्वस्तु द्वितीयाया न कश्चिदर्थः प्रतिशब्दस्य च व्यापकत्वमर्थः तच्च धात्वर्थसेकादौ कर्मत्वसम्बन्धेन वाच्यं द्वितीयाचोक्तार्थे तात्पर्यग्राहिकेत्यत आह कर्मत्वसम्बन्धस्यैवेति। व्याकताघटकत्वेन व्यापकतावच्छेदकत्वेन। तस्यतथात्वासम्भवात् कर्मत्वसम्बन्धस्यव्यापकतावच्छेदकत्वासम्भवात्। नन्वस्तुद्वितीयार्थः कर्मत्वं प्रत्यर्थो व्यापकत्वं तत्रानन्यलभ्यः शब्दार्थ इतिन्यायादभावप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थः अभावेचाधेयत्वसम्बन्धेन वृक्षादेरन्वयः व्यापकतावच्छेदकसम्बन्धश्च स्वरूपमेवेति नानुपपत्तिरतआह तस्येत्यादि। तस्य प्रतिशब्दस्य। सेककर्मत्व इति यद्यपि द्वितीयया कर्मतात्वेनैवोपस्थितिस्तथापि प्रतिशब्दसमभिव्याहारात् सेककर्मतात्वेन व्यापकत्वं लभ्यते तथाच वृक्षनिष्ठाभावप्रतियोगितानवच्छेदकसेककर्मतात्ववत्कर्म

तासंबन्धघटितव्यापकताप्रत्यायनमपि न युज्यते। प्रकृत्यर्थसुबर्थयोरन्तरा नञर्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वात्। नामूढस्येतरोत्पत्तेः नानुपमृद्य प्रादुर्भावादित्यादौ नञर्थमात्रस्य पञ्चम्यर्थहेतुताया विशेषणत्वेन प्रकृत्यर्थस्य च विशेष्यत्वेनान्वयात् तस्मात्प्रतिरनर्थक एव। द्विरुक्तान्वये तात्पर्यबलाच्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्गतयैव भासते। यदिच वृक्षंप्रतिषिञ्चतीत्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्या वा कश्चिदन्योऽर्थस्तदास्तु स एवात्रापि तदर्थः। अतएव तस्येवास्यापि प्रतिशब्दस्य प्रयोगो नानर्थकः। वस्तुतोऽनर्थकयोः कर्मप्रवचनीयाधिपरिशब्दयोः प्रयोगवत्तादृशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिश्चिन्त्या। प्रतेर्यत्र व्यापकतार्थकत्वं, तत्र प्रतिवृक्षं सिञ्चतीत्यव्ययीभावसमास एव नियतः। तदर्थकाव्ययस्याव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वादतोऽवीप्सया प्रतिवृक्षं सिञ्चतीतिवद्वृक्षं प्रतिसिञ्चतीति न प्रयोगः। यत्र व्यापकत्वा-

---

तानिरूपकसेकानुकूलकृतिः प्रतीयते। अन्तरा मध्ये। व्युत्पत्तिविरुद्धत्वादिति प्रकृत्यर्थान्वितस्वार्थबाधकत्वं प्रत्ययानामिति व्युत्पत्तिविरुद्धत्वात्। नञर्थस्य मध्येऽपिभानमुपपादयति नामूढस्येत्यादिना तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेरिति गौतमसूत्रम् ४।१।६। तेषां दोषाणाम्मध्येमोहो मिथ्याज्ञानं पापीयान् यतोऽमूढस्य मोहरहितस्य इतरयो रागद्वेषयोरुत्पत्तिर्न भवतीत्यर्थः। तथाच नञर्थाभावे उत्पत्तेरन्वयात्तादृशाभावस्य पञ्चम्यर्थहेतुत्वेऽन्वयात् प्रकृत्यर्थप्रत्ययार्थयोर्मध्ये एवनञर्थान्वयोऽतो नञर्थातिरिक्तेत्युक्तम्। अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावादिति च गौतमसूत्रम्। ४। १। १४। अस्यार्थस्तु बीजादिकमनुपमृद्य अविनाश्याङ्कुरस्य यतोनोत्पत्तिरतोऽभावात् 'अभावरूपोपादानात् भावस्य कार्यस्योत्पत्तिरिति अयन्तु शून्यतावादिनां पूर्वपक्षः अत्रापि प्रादुर्भावनञ्पदार्थयोरन्वयी नञर्थस्य च पञ्चम्यर्थहेतुत्वेन सहान्वयोऽतोन ञर्थातिरिक्तेत्युक्तम्। अनर्थकएवेति द्विरुक्तस्थल इतिशेषः। ननुतर्हि द्विरुक्तस्थले कथं वैलक्षण्यमतआह द्विरुक्तान्वयइति द्विरुक्तस्थलीयान्वयबोधेचेत्यर्थः। संसर्गतयैवेति तथाच न प्रतेर्व्यापकत्वमर्थः। अन्योऽर्थइति क्रियान्वयी सजातीयक्रियोत्तरत्वरूपोऽर्थः। अत्रापि वृक्षंवृक्षंप्रतिसिञ्चतीत्यत्रापि। अस्यापीति वृक्षं वृक्षं प्रतिसिञ्चतीति वाक्यघटकस्यापीत्यर्थः। यथा अधिपरिशब्दयो र्वाच्योद्योत्योवा नकश्चिदर्थः किंतु कर्मप्रवचनीययोस्तयोर्गतिर्गताविति निघातोनभवति तथाऽत्रापि प्रयोगसाधुत्वार्थकएव प्रतिशब्दो नतु तस्य वाच्योद्योत्यो वा कश्चिदर्थ इत्याह वस्तुतइति। नित्यत्वादिति

र्थकेनाव्ययेनाव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमाविभक्तिरेव नतूपकुम्भे गच्छतीतिवत् प्रतिगृहेऽश्वा इत्यादिरपि प्रयोगः उक्तयुक्त्या तत्र प्रतिनाऽश्वादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात् । तदाधारतादिरूपसप्तम्यार्थ्यर्थं च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासम्बन्धेन तदर्थस्य व्यापकरूपधर्मिणो वाऽभेदसंबन्धेनान्वये मेयत्वे घटः घटवृत्तौ घट इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारताया आश्रयत्वसंबन्धेनाभेदसम्बन्धेन वा प्रकृत्यर्थानन्वयव्युत्पत्तेर्विरोधात्। उपकुम्भेनिधेहि, उपकुम्भादागतः, उपकुम्भेन कृत, इत्यादौ च विवक्षितस्याधारत्वापादानत्वकर्तृत्वादौ कुम्भसमीपादेराधेयतासंबन्धेनान्वयस्याधेयत्वादौ निरूपितत्वसंबन्धेन तदन्वयस्य वा बोधे न कश्चिद्व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम् । त्वां च मां चान्तरेत्यादावन्तरान्तरेणयुक्तइति द्वितीयाया निरूपितत्वमर्थः । तस्यान्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयः एवमन्यत्रापि तदर्थस्तूक्तदिशा स्वयं परिच्छेद्यः ॥

इति द्वितीयाविभक्तयः ॥

---

यत्र समासे विग्रहोन भवति यदिवा विग्रहस्तदापिन समस्यमानपदेन स नित्यसमासः। अवीप्सयेति प्रतिशब्दस्य यत्र व्यापकत्वार्थकत्वं तत्र प्रतिवृक्षंसिञ्चतीत्यादौ प्रतिशब्दस्याव्ययीभावसमासएवनतु वृक्षंवृक्षंप्रतीति विग्रहो नवा-वृक्षंप्रतीति । यत्तुप्रतिशब्दस्यवीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे-द्वितीयागर्भवाक्यमपीति भट्टोजि दीक्षितैरुक्तंतन्न भट्टाचार्याणामभिमतम् उक्तयुक्तेः। तदाधारतेति अश्वाधारतेत्यर्थः। आश्रयतासम्बन्धेनेति अन्वये इत्यनेनसम्बन्धः। यदि प्रतिगृहमितिसमासार्थोगृहव्यापकस्तदाप्याह तदर्थस्येति समासार्थस्येत्यर्थः। अभेदसम्बन्धेनेति तथाच गृहव्यापकंयदाधारत्वं तदाश्रयोऽश्वइतिबोधः । प्रयोगवारणायेति अन्यथा तत्रापि सप्तम्यर्थाधारतायां मेयत्वस्याधारत्वसम्बन्धेनान्वये मेयत्वनिरूपिताधारतावदाधारतावान्घट इतिबोधपरस्य मेयत्वेघट-इति वाक्यस्य एवंसप्तम्यर्थाधारतायां प्रकृत्यर्थस्य तादात्म्येनान्वये घटवृत्त्यभिन्नाधारत्ववान् घटइति बोधपरस्य घटवृत्तौघट इतिप्रयोगस्य चापत्तिरिति-भावः । कल्प्यायाइति व्युत्पत्तेरित्यनेनान्वयः। तदन्वयस्य कुम्भसमीपाद्यन्वयस्य। मध्यत्वेऽन्वयइति तथाच त्वन्निरूपितं मन्निरूपितश्च मध्यत्वं प्रतीयते ॥

इतिसर्वतन्त्रस्वतन्त्रमैथिलकुलभूषणधर्मदत्त शर्मशिष्येण भक्तोपाख्य मैथिल लक्ष्मीनाथ शर्मणा काशीस्थहिन्दूविश्वविद्यालयवेदान्ताध्यापकेन विरचितो द्वितीयाप्रकाशः समाप्तः ॥

कारकविभक्तितृतीयायाः क्रियान्वयि कर्तृत्वं करणत्वं चार्थः कर्तृकरणयोस्तृतीयेत्यनुशासनात्। कर्तृत्वंच मुख्यं क्रियानुकूलकृतिरेव। साच कर्त्राख्यातसमभिव्याहृते चैत्रः पचतीत्यादौ क्रियाविशेष्यतयाख्यातेन प्रतिपाद्यते चैत्रेण पच्यते, शय्यते, इत्यादिकर्मभावाख्यातस्थले च क्रियायां विशेषणतया तृतीयया सा प्रत्याय्यते। यत्तु तत्राख्यातार्थ एव कृतिः, तृतीयार्थश्चाधेयत्वम्। तस्य चाख्यातार्थकृतिविशेषणतयान्वयः, कृतेश्च क्रियाविशेषणतया तथाकृतिबोधने चात्मनेपदरूपस्याख्यातस्य यगादिसमभिव्याहारज्ञानमपेक्षितम् पचति पचतइत्यादौ तथा कृत्यन्वयाबोधात्। चैत्रेण ज्ञायते गम्यतइत्यादौ तृतीयाया आधेयतार्थत्वं क्लृप्तमेवेति न तत्कल्पनमधिकमिति तन्न। चैत्रेण पक्वमित्यादौ तृतीयायाः कृत्यर्थकताया आवश्यकत्वात्। तत्र कृत्यर्थकाख्यातविरहेण कृतः कर्तृकर्मवाचकत्वेन कृत्यर्थकताविरहात्। यदिच कर्तृकृतः कृतावेव शक्तिर्नतु विशिष्टे ज्ञातेत्यादौ त्वाश्रयार्थकतायाः क्लृप्तत्वेन तत्र कृत्यन्वयादेव कर्तृलाभसंभवादित्युच्यते। तथापि कर्मकृतः कृत्यर्थत्वमप्रसक्तमेव। उक्तप्रत्ययस्य क्वचित्कर्तृत्वबोधकत्वेऽपि चैत्रेण पाच्यः दुष्पचश्चैत्रेणौदनः चैत्रेणौदनस्य पाक इत्यादौ कृतां न कृतिबोधकत्वमिति तत्र कृतिबोधानुरोधेन तृतीयायाः कृतिवाचकत्वमावश्यकमेव। एवंच चैत्रेण पच्यत इत्यादावपि तृतीययैव कृतिर्बोध्यते। तत्र चैत्रादेः संबन्ध एवाधेयत्वमित्यतएव निर्वाहे कृतावाधेत्वस्य विशेषणतया भानोपगमस्यानुचितत्वात्, तथासति तत्संसर्गस्यापि विषयताकल्पनाधिक्यात् तादृशवाक्यज्ञानघटितशाब्दसामग्र्यामधिकोपस्थितिनिवेशने च गौरवात्। अथ तत्र कृतेस्तृतीयार्थतोपगमे चैत्रेण पच्यते न मैत्रेणेत्यादौ तृतीयान्तार्थमैत्रीयकृतेरभावः पाकेऽन्वेतीत्युपेयम् तस्याश्च समवा

---

बिशेषणतयेति तथाच पूर्वत्र चैत्रकर्तृकपाककर्मतण्डुलादिः प्रतीयते। परत्र च चैत्रकर्तृकं शयनं प्रतीयते। क्रियाविशेषणतयेति अन्वय इति पूर्वेण सम्बन्धः। कृतिबोधनेचेति क्रियाविशेषणतया कृतिबोधने चेत्यर्थः। विशिष्टे कृत्याश्रये। उक्तप्रत्ययस्य कृत्प्रत्ययस्य। पाच्यइत्यादिस्थलानुरोधेन धात्वर्थनिष्ठविशेष्यतानिरूपितकर्तृत्वप्रकारकबोधंप्रति तृतीयासमभिव्याहारज्ञानस्य तृतीयाजन्यपदार्थोपस्थितेश्च कारणत्वस्यावश्यकतया ततएव चैत्रेणपच्यते इत्यादावपि तृतीयया कर्तृत्वभाननिर्वाहे तस्या आधेयत्वार्थकत्वमनुचितमित्याह एवञ्चेति। गौरवादिति ननुस्वत्वादेः प्रकारताव्यवस्थापनयुक्त्याऽत्रापि लाघवादाधेयत्वस्यप्रकारत्वमेवयुक्तमितिचेत् भवेदेतदेवं यदि लाघ-

यसंबन्धावच्छिन्नाभावो मैत्रकर्तृकपाकेऽपीत्यतिप्रसङ्गः। जन्यतायाश्च वृत्त्यनियामकतया तत्संबन्धावच्छिन्नाभावः प्रसिद्ध्यत्येव न, मैत्रकर्तृकपाककर्मत्वाभावस्य कर्मणि तण्डुलादौ प्रतीतिश्च कर्मवाचकपदासमभिव्याहारस्थले दुर्घटा। आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते। नच तथासति मैत्रचैत्रोभयकर्तृकपाकसत्त्वे चैत्रीयपाककृतौ मैत्रवृत्तित्वाभावसत्त्वात् मैत्रेण न पच्यतइति प्रयोगापत्तिरिति वाच्यम्। मैत्रेण न पच्यतइत्यतो वर्त्तमानपाकानुकूलकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनादुक्तस्थले च तादृशकृतित्वसामानाधिकरण्येन मैत्रवृत्तित्वसत्त्वात्तादृशवाक्याप्रामाण्यात्। वर्तमानत्वस्य कृतिविशेषणतया च चैत्रेण पक्ष्यतेऽपच्यत नतु पच्यतइत्युपपद्यते। क्रियाविशेषस्य तथात्वात् यदा मैत्रेणान्यत्क्रियते नतु पच्यते तदा मैत्रेण न पच्यतइति प्रयोगश्च। नचाख्यातेन कालस्य कृतिविशेषणतया बोधनात्कालविशेषविशेषितकृतित्वस्यान्वयितावच्छेदकतया तदवच्छेदेन नञाऽभावः शक्यो बोधयितुम् नतु कालक्रियोभयविशेषितकृतित्वावच्छेदेन, कर्मप्रत्ययस्थले क्रियायाः कृतिविशेषणत्वाभावेनतद्घटितधर्मस्यान्वयितावच्छेदकत्वाभावादिति वाच्यम्। क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वेऽपि

---

वमेवानुसृत्य पदार्थोव्यवतिष्ठेत नत्वेवमस्ति किंतुप्रतीतिमनुसृत्य प्रतीतिमेवतु तादृशीं न श्रद्दध्मो याऽऽधेयत्वस्य प्रकारतांसाधयेदिति। अतिप्रसङ्गः मैत्रेणनपच्यते इतिप्रयोगप्रसङ्गः। दुर्घटेति अत्र यत्कर्तृकपाकक्रियाया अप्रसिद्धिस्तृतीयान्ततद्बोधकपदसमभिव्याहृतनञ्पदस्थले तत्कर्तृकपाककर्मत्वाभावान्वयबुद्धिरपिदुर्घटेतिबोध्यम्। मैत्रवृत्तित्वसत्त्वादित्यादि तथाचोक्तकृतित्वावच्छेदेन मैत्रवृत्तित्वाभाववबोधने उक्तवाक्यस्य प्रामाण्यापत्तिर्न सम्भवतीत्यर्थः। वर्त्तमानत्वस्येति वर्त्तमानपाकानुकूलकृतित्वावच्छेदेनेत्यत्रेतिशेषः। इत्युपपद्यतइति वर्त्तमानत्वस्यकृतिविशेषणतयाऽनुपादानेतुपाककृतित्वावच्छेदेन चैत्रवृत्तित्वाभावासत्त्वात अतीतानागतकृत्योश्चैत्रवृत्तत्वसत्त्वान्नोपपद्येतेतिभावः। क्रियाविशेषस्यतथात्वात् प्रकृतक्रियानुकूलकृतित्वस्यावच्छेदक त्वात। प्रयोगश्चेति उपपद्यते इतिशेषः अन्यथा क्रियान्तरानुकूलकृतौ मैत्रवृत्तित्वसत्त्वाद्वर्त्तमानकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनासम्भवादितिभावः। तद्घटितधर्मस्येति वर्त्तमानपाकानुकूलकृतित्वस्येत्यर्थः। तदवच्छिन्नत्वविशिष्टेति वर्त्तमानपाकाद्यनुकूलकृतित्वव्यापकस्वरूपसम्बन्धेन मैत्रवृत्तित्वाभावः कृतौभासतेऽतो नानुपपत्तिरितिभावः। नन्वत्र केवलस्य कृतित्वस्यान्वयितावच्छेदकत्वं नतुवर्त्तमानपाकानुकूलकृतित्वस्येति कथं तद्व्यापकत्वमभावसम्बन्धे

तदवच्छिन्नत्वविशिष्टविशेषणताया अभावसंसर्गतया भानसंभवेन सामञ्जस्यात् । नचान्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसम्बन्धे भासतइति नियमः, । तथासति शरदि पुष्प्यन्ति सप्तच्छदा इत्यादौ सप्तच्छदपुष्पोत्पत्तित्वादेः शरद्वृत्तित्वान्वयितानवच्छेदकतया आख्यातान्तप्रतिपाद्यतावच्छेदकपुष्पोत्पत्तित्वावच्छेदेन च शरद्वृत्तित्वान्वये बाधादवच्छेदकावच्छेदेनान्वयानुपपत्तेरन्वयितावच्छेदकसामानाधिकरण्यमात्रेण च तदन्वयोपगमे शरदि पुष्प्यन्ति सप्तच्छदाः शरदि पुष्प्यन्ति चम्पका इत्यविशेषेण प्रयोगापत्तेः । यदिच तत्र शरत्संबन्धः सप्तच्छदविशेषणतया भासते न पुनराख्यातार्थे धातुमात्रार्थे वा पुष्पोत्पत्तौ, अतएव कारकविभक्तिरूपसप्तम्यनुपपत्त्या कालरूपविशेषणपदोत्तरं स्वातंत्र्येण सप्तमी सर्ववर्मणा सूत्रिता । एवंच क्रियानिमित्तत्वरूपकारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वेन पुष्पोत्पत्तिनिमित्तत्वरूपाख्यातार्थस्य विशिष्टान्वयानुरोधेन शरत्संबन्धेप्यन्वय उपगन्तव्य इति कारकत्वस्याख्यातार्थत्वानुपगमेऽपि शीतलं सरोऽवगाढवतो निदाघदुःखं व्यपैतीत्या-

---

भासते इत्याशंकां निराकरोति नचेति अस्य नियम इत्यनेनान्वयः । तथासतीति उक्तनियमेऽभ्युपगतेसतीत्यर्थः । अन्वयितानवच्छेदकतयेति सप्तम्यन्तार्थशरद्वृत्तित्वं पुष्प्यन्तीत्यन्तार्थपुष्पोत्पत्त्याश्रयत्वेन सहान्वेति उत्पत्तेश्च सप्तच्छदपुष्पविशेषेऽन्वयः तथाच शरद्वृत्तिर्या पुष्पोत्पत्तिस्तद्वन्तः सप्तच्छदा इतिप्रतीयते एवञ्च शरद्वृत्तित्वस्यान्वयिनी पुष्पोत्पत्तिरेव नतु सप्तच्छदपुष्पोत्पत्तिरतः पुष्पोत्पत्तित्वमेवान्वयितावच्छेदकं नतु सप्तच्छदपुष्पोत्पत्तित्वमतोन तदवच्छेदेनान्वयः सम्भवतीतिभावः। नन्वस्तु पुष्पोत्पत्तित्वमेवान्वयितावच्छेदकमतआह आख्यातान्तेत्यादि। बाधादिति पुष्पोत्पत्तित्वस्य वसन्तादिकालिकपुष्पोत्पत्तावपिसत्त्वात्तत्र शरद्वृत्तित्वस्याभावात्तस्यपुष्पोत्पत्तित्वव्यापकत्वासम्भवादितिभावः। प्रयोगापत्तेरिति चम्पकस्य समयान्तरे शरदिच विकासित्वान्न तथाप्रयोगः।नन्वेवमनुपदोक्तप्रयोगयोरविशेषापत्तिरत आह एवञ्चेति। क्रियानिमित्तत्वरूपेति तत्रक्रियाया धातुतएव लाभान्निमित्तत्वेसति कर्तृत्वादिकमाख्यातार्थः । धात्वर्थस्य निरूपितत्वसम्बन्धेन निमित्तत्वेऽनुकूलत्वसम्बन्धेन कृतौचान्वयः कृतेरिव निमित्तत्वस्यापि चैत्रादावन्वयः तथा चैतत्पक्षे चैत्रस्तण्डुलंपचतीत्यादौ तण्डुलकर्मकपाकानुकूलकृतिमान्पाकनिमित्तं च चैत्र इतिबोधः । एवंसति प्रकृते शरत्सम्बन्धविशिष्टे सप्तच्छदे पुष्पोत्पत्तिनिमित्तत्वस्यान्वये तद्विशिष्टे भासमानत्वात्तत्रापि तद्भासते इतिरीत्या धर्मिपारतंत्र्येण शरत्सम्बन्धेऽपि पुष्पोत्पत्तिनिमित्तत्वमन्वेतीत्यतो नोक्तप्रयोगयोरविशेषापत्तिः शरत्सम्बन्धे चम्पकोत्पत्ति-

दाविवोद्देश्यविधेयभावमहिम्नोद्देश्यविशेषणशरत्संबन्धेन विधेयभूतपुष्पोत्पत्तेः प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादया भानमिति चम्पकादिपुष्पोत्पत्तौ शरत्संबन्धनिमित्तकत्वाभावान्नोक्तातिप्रसङ्ग इत्युक्तस्थलेऽवच्छेदकावच्छेदेनान्वय एव नोपेयत इत्युच्यते, तथापि तादृशनियमो ऽप्रामाणिक एव। नच तादृशनियमानुपगम इह भवने मैत्रेणैव पक्ष्यते तेमनमित्यत्रैतद्भवनाधिकरणकतेमनपाकत्वेन रूपेण शब्दात्पाकानुपस्थित्या तदवच्छिन्ने मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वव्यवच्छेदबोधासंभवकथनं दीधिकृतां विरुध्येत इति वाच्यम्, अवच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि विशेषणतया भासमानमेव रूपं विशेषणे अवच्छिन्नत्वसंबन्धेन विशेषणमित्याशयेन तेषां तदभिधानात्। विशेषणसंबन्धे तदवच्छिन्नत्वमेव तदवच्छेदेन विशिष्टबुद्धौ भासतइत्युपगमे शब्दानुपस्थितरूपावच्छेदन विशेषणान्वये वाधकाभावात्। नचावच्छेदकावच्छिन्नत्वस्यावच्छेदकावच्छेदेन विशिष्टबुद्धौ विशेषणांशे भानमसंभवदुक्तिकम् घटो द्रव्यमित्यादौ घटत्वावच्छेदेन द्रव्यत्वादिमत्त्वबुद्धौ द्रव्यत्वादिविशेषणस्य स्वरूपतएव भानादिति वाच्यम्। तादृशशाब्दबोधे द्रव्यत्वाद्यवच्छिन्नस्यैवाभेदसंबन्धेन विशेषणत्वात् घटत्वादिविशिष्ठे द्रव्यत्वादिविशेषणकतादृशप्रत्यक्षेऽवच्छेदकावच्छेदेन भानानुपगमे क्षतिविरहात्, तथाच मैत्रेण न पच्यतइत्यादौ पाककृतित्वस्यान्वयितानवच्छेदकत्वेऽपि अर्थलभ्यतादृशधर्म्मावच्छिन्नत्वस्य संसर्गांशे भाने निराबाधमेवेति चेन्न। मैत्रेण न पक्व इत्यादौ कृतौ मैत्रादिवृत्तित्वाभावबोधासंभवेन कृतिजन्यत्वस्य तृतीयार्थतां स्वीकृत्य क्रियायां मैत्रादिकृतिजन्यत्वाभावबोधस्योपपन्तव्यतया मैत्रेण न पच्यतइत्यादावपि तद्बोधोपगमेन सामञ्जस्यात्। नच यदा मैत्रः सुप्तस्तदा मैत्रेण पक्ष्यते ननु पच्यतइति

---

निमित्तत्वाभावादितिभावः। शरत्सम्बन्धेनेति सहेतिशेषः। निमित्तकत्वाभावादिति समयान्तरेऽपि तदुत्पत्तेर्जायमानत्वेन शरत्सम्बन्धस्यान्यथासिद्धत्वात्। तादृशनियमः उद्देश्यतावच्छेदकावच्छिन्नत्वमेव विशेषणसम्बन्धे भासते इति नियमः। विशिष्टबुद्धौभासतइति नतुसामानाधिकरण्यावगाहिबुद्धावपीतिशेषः। द्रव्यत्वे उद्देश्यतावच्छेदकावच्छिन्नत्वभानेन्वयितावच्छेदकद्रव्यत्वत्वावच्छेदेनान्वयिनोद्रव्यत्वस्योपस्थितिः कारणंवक्तव्यं न चैतदस्तीत्याशंकते नचावच्छेदकावच्छिन्नत्वस्येत्यादि। अथेत्यादिनाऽऽधेयत्ववादिभिरुद्भावितंदोषंनिराकरोति इतिचेन्नेति। मैत्रेणनपक्वइति

प्रयोगानुपपत्तिः मैत्रवृत्तिवर्त्तमानकृतेरप्रसिद्ध्या तादृशकृतिजन्यत्वाभावप्रत्यायनासम्भवात् वर्त्तमानत्वाविशेषिततदीयकृतिजन्यत्वाभावस्य बाधितत्वादितिवाच्यम् । आख्यातार्थवर्त्तमानत्वादेर्नञ्समभिव्याहारस्थलेऽभावांशएवान्वयस्य व्युत्पन्नत्वात् अन्यथा विनष्टघटं न पश्यतीत्यादौ तादृशघटकर्मकवर्त्तमानदर्शनाद्यप्रसिद्ध्याऽन्वयबोधानुपपत्तेः । प्रकृते च मैत्रीयवर्तमानकृत्यप्रसिद्धावपि वर्तमानकालावच्छिन्नतज्जन्यत्वाभावस्यैवपाके प्रतीत्या सामञ्जस्यात् । पाकत्वाद्यवच्छेदेनैव मैत्रादिककर्तृकत्वाभावबोधोपगमान्मैत्रादिकर्तृकपाकदशायामन्यकर्तृकपाके मैत्रादिकर्तृकत्वाभावसत्त्वेऽपि न पच्यते मैत्रेणेत्यादयो न प्रयोगाः । यत्र मैत्रेणौदनंपच्यतेनतु तेमनं तत्र मैत्रेण न पच्यते तेमनमित्यादिप्रयोगनिर्वाहाय तेमनपाकत्वाद्यवच्छेदेनैवाभावान्वयबोध उपगम्यते, न तु शुद्धपाकत्वाद्यवच्छेदेन, बाधितत्वात् यथा च तेन रूपेण शब्दादनुपस्थितावपि तदवच्छेदेनान्वयबोधनिर्वाहस्तथोपपादितमाधेयत्वस्य तृतीयार्थत्ववादिनैव । घटेन न पच्यतइत्यादयः प्रयोगाः आकाशं न पश्यतीत्यादिप्रयोगसमानयोगक्षेमाः । अचेतनकाष्ठस्थाल्यादेरपि कर्तृत्वविवक्षया काष्ठं पचतीत्यादिवत् काष्ठेन पच्यत इति प्रयोगात् । तत्र व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे तत्कर्तृकत्वे वा तृतीयाया लक्षणा । एवं चैत्रेण ज्ञायते, इष्यते, गम्यतइत्यादावाश्रयत्वरूपे कर्तृत्वआधेयत्वरूपे कर्तृमत्त्वे वा नश्यते घटेनेत्यादौ प्रतियोगित्वरूपे कर्तृत्वेऽनुयोगित्वरूपेकर्तृमत्वे वा लक्षणा । कर्तृपदमपि व्यापारादिमत्यचेतनादौ भाक्तमेव । अचेतनादौ स्वरसतः कर्तृपदाप्रयोगात् । अतएवच कृत्वा

---

यत्रमैत्रेणयत्नः क्रियते परंतु पाकरीतेरपरिज्ञानात् साधनवैकल्याद्वा पाकोनसम्पद्यते तत्रत्योऽयं प्रयोगः । अथवाऽत्रकृत्यर्थकप्रत्ययादिविरहेण कृतेर्भानासम्भवे तत्रमैत्रवृत्तित्वाभावबोधनासम्भव इतिभावः । अन्वयबोधानुपपत्तेरिति तथाचोक्तवाक्याद्वर्त्तमानकालिकोयोःविनष्टपटविषयकदर्शनाभावस्तदाश्रयो बोध्यते । तृतीयार्थत्ववादिनेति तथ।च सैवरीतिः कृतिजन्यत्वस्य तृतीयार्थत्वपक्षेऽप्यनुसरणीयेतिभावः । ननु घटेननपच्यते इत्यतो घटनिष्ठकृतिजन्यत्वाभावएवपाके बोधनीयः सच न सम्भवति घटेकृतेरेवाप्रसिद्धेरित्यत आह घटेननपच्यतइति । समानयोगक्षेमाइति चैत्रआकाशं नपश्यतीत्यस्याप्रामाण्योपगमेऽस्याप्यप्रामाण्योपगमः वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वमुपगम्य निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभाववद्विषयिताश्रयदर्शनबोधनेनाकाशं नपश्यतीत्यस्योपपादनेऽत्राप्याधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकघटा-

यत्नवाचकत्वम्। नच यत्नवत एव कर्तृपदार्थत्वे क करणयोस्तृतीयेत्यादौ कर्तृपदस्य मुख्यार्थत्यागे युक्तिविरहादचेतनकाष्ठादिवाचकपदयोगे कर्तृप्रत्ययानुपपत्तिरितिवाच्यम् सूत्रस्थकर्तृपदानां स्वतन्त्रः कर्तेतिसूत्रकृत्परिभाषितकर्तृपरत्वात्।अन्यथा तत्प्रणयनवैयर्थ्यप्रसङ्गात्। स्वतन्त्रत्वं च कारकान्तरव्यापारानधीनव्यापारवत्त्वे सति कारकत्वम्। पुरुषव्यापाराधीनक्रियानुकूलव्यारवतामेव काष्ठादीनामन्यव्यापारानधीनक्रियानुकूलव्यापारवत्त्वरूपस्वातन्त्र्यस्य काष्ठं पचतीत्यादौ विवक्षया काष्ठादेः कर्तृत्वम्। नच स्वातंत्र्यविवक्षणेऽपि स्वातन्त्र्यस्य वास्तविकस्याभावात् तद्बोधकविभक्तीनामप्रमाण्यं दुर्वारमेवेति वाच्यम्। समभिव्याहृततत्क्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारस्यैव तत् *क्रियावाचकपदसमभिव्याहृतप्रत्ययार्थत्वोपगमात्। अनधीनान्तविशेषणप्रयोजनं चचैत्रः काष्ठैःस्थाल्यां पचतीत्यादिस्थले चैत्रस्थालीकाष्ठानिपचन्तीति प्रयोगापत्तिवारणम्। यत्रच चैत्रः पचति काष्ठं पचतीत्यादौ समभिव्याहृतकारकांतराप्रसिद्धिस्तन्त्रानधीनातविशेषणं न प्रतीयतएव। तन्निर्वाहश्च तत्र लकारादेः स्वतत्रशक्त्यन्तरकल्पनात्। विशिष्टविषयकशक्त्या विशेषणाविषयकबोधाजननात् नच मैत्रः चैत्रेण पाचयतीत्यादौ हेतुकर्तृसमभिव्याहारस्थले कर्त्तरि तृतीयानुपपत्तिः

---

भाववत्कृतिजन्यपाकविषयकबोधोपगमः संभवतीत्यर्थः। प्रतियागित्वरूपइति तथाच घटनिष्ठप्रतियोगितानिरूपको नाश इतिबोधः। कर्तृपदमपीति घटः कर्त्ताइत्यादवितिशेषः। भाक्तमेवेति गौणमेवेत्यर्थः। अतएव अचेतने कर्तृपदस्य भाक्तत्वादेव। युक्तिविरहादिति चैत्रेणपच्यतेइत्यादौचेतनकर्तृकस्थले सूत्रस्य चारितार्थ्येन काष्ठेन पच्यते इत्यादावचेतनकाष्ठादिबोधकपदात्कर्त्तरि तृतीयाऽनुपपत्तिरितिभावः। कारकान्तरव्यापारानधीनव्यापारवत्वेसतीति चैत्रस्तण्डुलंपचतीत्यादौ क्रियान्वयित्वरूपं कारकत्वंतण्डुलादावप्यस्तीत्यतएतदुक्तम् उदासीनेऽतिप्रसङ्गवारणाय कारकत्वमित्युक्तम्। दुर्वारमेवेति बाधितार्थविषयकबोधजनकत्वादितिभावः। समभिव्याहृतक्रियेत्यादि तथाच काष्ठंपचतीत्यादौ समभिव्याहृतपाकक्रियाकारकान्तरम् नचैत्रादिकं चैत्रादेस्तत्क्रियाजनकत्वेऽपि तद्बोधकपदस्योक्तवाक्याघटकत्वात्। लकारादेरिति आदिना तृतीयादिपरिग्रहः। विशेषणविषयकेति अत्रयुक्तिरुक्ता द्वितीयायामस्माभिः॥ प्रकृते पाकक्रियायां चैत्रएव कारकान्तरव्यापारानधीनपाकानुकूलव्यापारवत्त्वेन स्वतन्त्रः कर्त्ता मैत्रस्तु पाकक्रियानुकूलव्यापारविरहवत्तया

कर्तृव्यारस्य समभिव्याहृतहेतुकर्तृव्यापाराधीनत्वादिति वाच्यम् तत्र ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव हेतोः कारकतया स्वतन्त्रकर्तृव्यापारस्य पचादि क्रियाकारकव्यापारानधीनत्वात् । स्वतन्त्रं प्रयुञ्जानस्य पुंसो व्यापारस्तण्डुलक्रयणादिवत्पाकादावन्यथासिद्धतया न कारणमिति पाकादिप्रयोजकव्यापारत्वेऽपि तस्य तत्क्रियाकारकत्वाभावात् अतएव चैत्रो मैत्रेण पाचयतीत्यादौ चैत्रः पचतीति न प्रयोगः । नच पञ्चभिर्हलैः कर्षति गृहीत्यादौ भूमिलेखनरूपकृष्यादिक्रियायां स्वन्त्रकर्तॄन् प्रयुञ्जानस्य गृहिणो व्यापारस्य दर्शितयुक्त्या लकारादिनाऽभिधानासंभव इति कर्षतीति न स्यात्कर्षयतीति च स्यादिति वाच्यं । तत्र कृषेः प्रतिविधानार्थत्वात् । उक्तंच । "याजका यजन्तीति यजिर्हविः प्रक्षेपार्थः हलैः कृषतीति कृषिः प्रतिविधानार्थ" इति यजेर्देवतोद्देश्यकद्रव्यत्यागेच्छाविशेषरूपार्थे मुख्यतया तत्रच यजमानस्यैव कर्तृतया हविःप्रक्षेपरूपलक्ष्यार्थपरत्वं दर्शितं तत्र च ऋत्विजामेव स्वातन्त्र्यम् । होतेत्यत्रापि हविःप्रक्षेप एव हुधातोरर्थो नतु तादृशफलावच्छिन्नस्त्यागः । तथासति ऋत्विजस्तत्र स्वतन्त्रकर्तृताविरहेण होतृपदेन प्रतिपादनासंभवात् । धात्वर्थतावच्छेदकफलकर्तृत्वमेव कर्तृप्रत्ययेन प्रतिपाद्यतइति ऋत्विजिहोतृव्यवहारो न यष्टरि । अतः प्रतिग्रहीतृव्यापारो न स्वत्वजनकस्तथा-

---

पाकक्रियाकर्त्तृत्वेनेति नसुतरां स्वतंन्त्रकर्त्ता किंतुपाचनक्रियायामेव स्वतन्त्र इत्याह तत्रण्यन्तप्रतिपाद्येति। हेतोः पाककर्तृप्रयोजकस्य। स्वतन्त्रकर्तृव्यापारस्य चैत्रव्यापारस्य । स्वतन्त्रंप्रयुञ्जानस्येति पाकक्रियायां स्वतन्त्रोयश्चैत्रस्तंप्रयुञ्जानस्य तत्प्रेरकस्य मैत्रस्य यः पाकानुकूलव्यापारानुकूलो व्यापारः सन कारणमित्यर्थः ॥ अतएव णिच्प्रकृतिधातुप्रतिपाद्यक्रियायां णिजन्तप्रतिपाद्यक्रियाकर्तुः कारणत्वविरहादेव । स्वतन्त्रकर्तॄन्प्रयुञ्जानस्य हलवाहकान् प्रेरयितुरित्यर्थः । दर्शितयुक्त्येति प्रयोजकव्यापारस्य प्रयोज्यकर्तृव्यापारजन्यक्रियांप्रत्यन्यथासिद्धत्वेनेत्यर्थः । प्रतिविधानार्थत्वादिति भूमिलेखननिर्वाहकवेतनप्रदानादिरूपव्यापारार्थत्वात्। कर्तृतयेति पूर्वोक्तस्वातन्त्र्यस्य तस्मिन्नेव सत्त्वादितिभावः। ऋत्विजामेवेति ऋत्विजां समभिव्याहृतहविः प्रक्षेपक्रियाकारकान्तरव्यापारानधीनव्यापारवत्त्वादितिभावः । निरुक्तमुख्यार्थपरत्वेऽप्युक्तप्रयोगोपपत्तिं कुर्वाणस्य जीमूतवाहनस्य मतमाह धात्वर्थतेत्यादि । प्रतिपाद्यते इति तथाच देवतोद्देश्यकद्रव्यत्यागरूपं यद्धात्वर्थतावच्छेदकफलं तत्कर्तृत्वस्य ऋत्विजि सत्त्वात्तत्रैवहोतृपदप्रयोगोनयजमाने। यदिप्रतिगृहीतृव्यापारः स्वत्वजनकः स्यात्तदा दाधात्वर्थतावच्छेदकस्वत्वजनकत्वस्य तत्रापिसत्त्वात्तद्वतिदातृपदप्रयोगापत्तिरित्याह

सति तत्र दातृव्यवहारापत्तेरिति तु जीमूतवाहनः। अथास्तु चैत्रो मैत्रेण पाचयतीत्यादौ स्वतन्त्रकर्तृव्यापारस्यहेतुकर्तृव्यापाराधीनत्वेऽपि दर्शितरीत्या तस्य स्वतन्त्रकर्तृत्वनिर्वाहस्तथापि तद्वाचकपदोत्तरं तृतीयानुपपत्तिः कर्तृत्वस्य णिच्प्रत्ययेनाभिधानादिति चेन्न। कर्तृत्वनिर्वाहकत्वसंबन्धेन पाकाद्यन्वयिनो हेतुकर्तृव्यापारस्य णिजर्थत्वेन स्वतन्त्रकर्तृत्वस्य णिचाऽनभिधानात्। कर्तृत्वरूपफलावच्छिन्नस्य तादृशव्यापारस्य णिजर्थतामतेऽपि आश्रयोपरक्तस्यकर्तृत्वस्यान्यतो भानानिर्वाहेण कर्तुरनभिधानात्तृतीयोपपत्तेः। आख्यातस्य धर्म्यवाचकत्वेऽपि कृतिविशिष्टबोधकत्वरूपस्य कर्त्रभिधानस्याक्षतत्वाच्चैत्रः पचतीत्यादौ न तृतीया। नचैवं मुख्यविशेष्यतया कृतिविवक्षया चैत्रेण पचतीति स्यादिति वाच्यम्। आश्रयातिरिक्तांशेऽविशेषणतया कृतिबोधनस्यैव कर्त्रभिधानरूपत्वात् तथा तदभिधानं च लकृत्तद्धितसमासानामेव। अतएव तैरेवाभिधानं वृत्तिकृता विवृतम्। इदं त्ववधेयम्। यद्यपि स्वतन्त्रव्यापारे एव तृतीयादेरनुशासनं, तथापि लाघवात्कृतिरूप एव कर्तृत्वे तृतीयादेः शक्तिः अचेतनव्यापारे निरूढलक्षणैव। अनुशासनस्यानादितात्पर्यमात्रग्राहकत्वात्। लाघवसहकृतस्यैव तादृशतात्पर्यस्य शक्तिकल्पकत्वात्। व्यापारे तत्सत्त्वेऽपि गौरवेण शक्त्यसिद्धेः। एवंच कर्तृत्वरूपकृतिबोधस्थले कारकान्तर-

---

तथासतीति। दर्शितरीत्येति णिच्प्रकृतिधातुप्रतिपाद्यक्रियांप्रति णिजन्तप्रतिपाद्यक्रियाकर्तुरन्यथासिद्धत्वेनेत्यर्थः। कर्तृत्वस्येति व्यापारानुकूलव्यापारस्यैव णिजर्थतया फलीभूतव्यापाररूपस्येति शेषः। पाकाद्यन्वयिनइति पाकादिविशिष्टस्येत्यर्थः। तत्र पाकस्य धातुतपवलाभाद्व्यापारमात्रंणिचाऽभिधीयते कर्तृत्वनिर्वाहकश्चसम्बन्धः आकाङ्क्षाभास्योऽतोन शक्यतावच्छेदकसंसर्गतयापि णिचा स्वतन्त्रकर्तृत्वंप्रतिपाद्यते॥ आश्रयोपरक्तस्य आश्रयसम्बद्धस्य। अविशेषणतयेति तथाच चैत्रः पचतीत्यादौ कृतेराश्रयीभूतचैत्रातिरिक्तेविशेषणत्वाभावात् तत्राख्यातस्य कर्त्रभिधायकत्वमेवेति नानुपपत्तिर्नवा कृतेर्मुख्यविशेष्यत्वविवक्षायां चैत्रेणपचतीतिप्रयोगापत्तिः कृतावत्र विशेषणत्वसामान्याभावसत्त्वे आश्रयातिरिक्तविशेषणत्वाभावस्य सुतरामेवसत्त्वादिति। लकृत्तद्धितसमासानामेवेति लकारेण पचतीत्यादौ कृता पाचकइत्यादौ तद्धितेन कृतपूर्वीत्यादौ समासेन पक्वौदनः कृतपाकइत्यादौ कर्त्रभिधानं बोध्यम। तत्सत्त्वेऽपि तृतीयाया अनादितात्पर्यसत्त्वेऽपि। शक्त्यसिद्धेरिति तथाचाना-

व्यापारानधीनत्वं न प्रतीयतइतितदन्तर्भावेण शक्तिकल्पने मानाभावः । व्यापारलाक्षणिकेन कर्तृप्रत्ययेन लक्षणया तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गवारणात् अन्यथा तदन्तर्भावेणकृतिशक्तावपि ताद्दशातिप्रसङ्गस्य दुर्वारत्वादिति। घटो जायते, ओदनः सिद्ध्यतीत्यादौ सत्कार्यविद्वेषिणां नैयायिकानां कारकत्वं कर्तृत्वं च घटादेर्यथाश्रुतसूत्रानुसारेण दुरुपपादमेव। मुख्यंच क्रियाकर्तृत्वं न क्रियानुकूलकृतिमात्रम् । एककियाविषयककृतितो यत्र नान्तरीयकक्रियान्तरनिर्वाहस्तत्रत

---

दितात्पर्यज्ञानं प्रकृते निरूढलक्षणायामुपयुज्यते इतिभावः । नच कृत्यादिसाधारणस्य व्यापारत्वस्यजातित्वमुपगम्य तस्य तृतीयाशक्यतावच्छेदकत्वोपगमे गौरवाभाव इतिवाच्यम् गुणत्वाभावाधिकरणे क्रियायां व्यापारत्वस्य व्यापारत्वाभावाधिकरणे रूपादौ गुणत्वस्यच सत्त्वेन यत्नेचोभयोः सत्त्वात् गुणत्वेन साङ्कर्याद्व्यापारत्वस्य जातित्वासम्भवात्॥ मानाभावइति तथाच केवलकृतित्वावच्छिन्नैव कृतिनिष्ठा शक्यता ॥ नन्वेवमचेतनकर्तृस्थले व्यापार एव कर्तृप्रत्ययार्थोवक्तव्यस्तस्य च काष्ठादावबाधितत्वात् चैत्रकाष्ठस्थाल्यः पचन्तीति पूर्वोक्तप्रयोगापत्तिरतआह व्यापारलाक्षणिकेनेत्यादि तथाच नतत्र केवलव्यापारे लक्षणा किंतु समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारे । अन्यथा विशिष्टव्यापारे कर्तृप्रत्ययस्य लक्षणानङ्गीकारे । तदन्तर्भावेणकृतिशक्तावपि निरुक्तव्यापारानधीनक्रियानुकूलकृतौ शक्तिस्वीकारेऽपि । अचेतनकर्तृस्थले व्यापारे लक्षणाया आवश्यकतया शुद्धव्यापारेलक्षणायां चैत्र काष्ठस्थाल्यःपचंतीतिप्रयोगप्रसङ्गान्निरुक्तविशिष्टव्यापार एव लक्षणेतिभावः ॥ सत्कार्यविद्वेषिणामिति सत्कार्यतावादिनां सांख्यानांमतेतु दण्डचक्रादिना घटादेरभिव्यक्तिरेव नत्वाद्यक्षणसम्बन्धरूपोत्पत्तिः उपपादितश्चायंपक्षः सांख्यतत्वकौमुद्यांवाचस्पतिमिश्रैः तथाच तन्मतेऽभिव्यक्तिरूपोयो धात्वर्थस्तदनुकूलस्थितिरूपव्यापारस्य पूर्वसिद्धानाविर्भूतघटादौसत्त्वान्न घटोभवतीत्यादेरनुपपत्तिः आरम्भवादिनां नैयायिकानाम्मते घटादेरुत्पत्तेः पूर्वमसत्त्वेनोत्पत्तिक्रियांप्रति जनकत्वाभावात्कारकत्वासम्भवः स्वतन्त्रः कर्तेति यथाश्रुतसूत्रानुसारेण कर्तृत्वासम्भवश्च एतत्सूत्रेण समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनव्यापारस्यैव कर्तृत्वरूपतावोधनेन घटस्यैवासत्वे तस्मिन व्यापाराश्रयत्वासम्भवादिति॥ अत्रपाकादेः कृतिः गमनज्ञानजन्मादेराश्रयत्वं नाशादेः प्रतियोगित्वादिकं यद्यत्कर्तृत्वत्वेन प्रामाणिकानां व्यवहारगोचरस्तावदन्यतमाश्रयः कर्तेत्ययथाश्रुत्रार्थावलम्बनेन घटादीनां जन्मादिक्रियाकर्तृत्वं भवतिसूपपादमित्याहुरस्मद्गुरुचरणाः।

त्कृतिमतस्तत्क्रियाकर्तृत्वाभावात्। अतएव तत्र मत्तो भूतं नतु मया कृतमिति व्यपदेश इति। किन्तु तत्क्रियानुकूलत्वे सति तद्विषयिका याकृतिस्तदेव तत्कर्तृत्वम्। अन्योद्देशेन नाराचक्षेपाद्यत्र ब्राह्मणवधस्तत्र मरणानुकूलस्य नाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि ब्राह्मणमरणानुकूलव्यापारत्वेन तस्यानभिसंहितत्वात्तेन रूपेण कृतिविषयत्वं न तादृशव्यारस्येति ब्राह्मणवधत्वशिष्टकर्तृत्वं न तादृशव्यापारकर्तुरिति न तस्य संपूर्णप्रायश्चित्तम् विशिष्टस्य कर्तृतायाएवसम्पूर्णप्रायश्चित्तप्रयोजकत्वात् अत एव संपूर्णप्रायश्चित्तप्रयोजकस्य कर्तृव्यापारस्य लक्ष्यताभिप्रायेण हिंसालक्षणे मणिकृतां मरणोद्देशेनानुष्ठीयमानत्वादृष्टाद्वारकत्वविशेषणयोरुपादानमिति मिश्राभिधानसङ्गतिः। मरणोद्देशेनानुष्ठीयमानस्य व्यापारस्यावश्यं मरणानुकूलव्यापारत्वेन प्रतिसंहितत्वात्तादृशरूपेण कृतिविषयत्वमिति तादृशविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वात्तद्विशेषणवतो व्यापारस्य नियमेन लक्ष्यत्वात्। तच्छून्यस्य चालक्ष्यत्वनियमात्। अथ मरणोद्देशेनानुष्ठितस्यापि यत्र खड्गाभिघातत्वादिनैवेष्टसाधनत्वकृतिसाध्यत्वधीविषयता नतु मरणानुकूलत्वविशेषिततद्रूपेण, तत्र न मरणानुकूलत्वविशिष्टविषयिणी कृतिरिति तादृशव्यापारकर्तुर्न वधत्वविशि-

---

अनभिसंहितत्वात् अज्ञातत्वात्। वधत्वविशिष्टकर्तृत्वमिति ब्राह्मणमरणानुकूलव्यापारत्वावच्छिन्नविषयताशालिनी तादृशव्यापारानुकूला याकृतिस्तद्वत्त्वन्नान्योद्देशेन नाराचप्रक्षेपकर्तुरित्यर्थः। सम्पूर्णेत्यादि एतदारभ्योपादानमित्यन्तो मिश्रग्रन्थः। हिंसालक्षण इति मरणोद्देशेनानुष्ठीयमानत्वेसति अदृष्टाद्वारकमरणानुकूलत्वमिति चिन्तामणिकृद्भिरुक्तं हिंसालक्षणम् तत्रान्योद्देशेन नाराचप्रक्षेपाद्ब्राह्मणवधस्थलीयप्रक्षेपे ब्राह्मणहिंसात्ववारणाय सत्यन्तम् शत्रुमरणोद्देशेनानुष्ठीयमाने श्येनादावदृष्टद्वारकशत्रुवधसाधनेऽतिप्रसङ्गवारणायादृष्टाद्वारकेत्युक्तम्। प्रतिसंहितत्वात् ज्ञातत्वात्। तादृशरूपेण मरणानुकूलव्यापारत्वेन। तादृशविशेषणस्य मरणोद्देशेनानुष्ठीयमानत्वस्य। विशिष्टकर्तृतानिर्वाहकत्वात् मरणानुकूलव्यापारत्वविशिष्टकर्तृतानिर्वाहकत्वात्। तद्विशेषणवतः मरणोद्देशेनानुष्ठीयमानत्वविशेषणवतः। व्यापारस्येति अदृष्टद्वारकभिन्नस्येतिशेषः। लक्ष्यत्वात् हिंसालक्षणलक्ष्यत्वात् अस्य मिश्राभिधानसङ्गतिरित्यनेनान्वयः। अथेति इतिचेन्नैवमित्यनेनास्यान्वयः। मरणोद्देशेनानुष्ठितस्यापीति मरणनिष्ठोद्देश्य-

ष्टकर्तृत्वमिति कथमुक्तविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वम्। यदि च मरणोद्देशेनानुष्ठीयमानत्वस्य मरणानुकूलत्वेन कृतिविषयत्वमेवार्थ इत्युपेयते, तदा व्यापारे तादृशविशेषणस्य तत्कर्तरि विशिष्टकर्तृतानिर्वाहकत्वेऽप्युक्तस्थले खड्गाभिघातादौ तादृशलक्षणाव्याप्तिर्दुर्वारैव तत्र संपूर्णप्रायश्चित्तस्य निर्विवादतया लक्ष्यताया आवश्यकत्वात्। नच विशेषणीभूतफलनिष्ठोद्देश्यताख्यविषयतानिरूपकत्वे सति व्यापारनिष्ठसाध्यताख्यविषयतानिरूपकत्वमेव विशिष्टविषयकत्वं कृतेरित्युपदर्शितस्थलेऽनुकूलतासंबन्धेन मरणवैशिष्ट्यस्य साध्यतारूपकृतिविषयतावच्छेदकताविरहेऽपि न विशिष्टकर्तृत्वानिर्वाह इति मरणोद्देशेनानुष्ठीयमानत्वस्य मरणकामनाधीनकृतिविषयत्वरूपतैवेति वाच्यम्। ब्राह्मणं न हन्यादित्यादौ धात्वर्थतावच्छेदकस्य

---

तानिरूपितसाध्यत्वाख्यकृतिविषयतावतइत्यर्थः। तत्रनेति इष्टसाधनत्वनिष्ठप्रकारतानिरूपिता कृतिसाध्यत्वनिष्ठप्रकारतानिरूपिताच विशेष्यता तत्तज्ज्ञानीया यद्धर्मावच्छिन्नाभवति तद्धर्मावच्छिन्नैव कृतेः साध्यत्वाख्यविषयतापि भवति एवञ्च यत्रेष्टसाधनत्वादिनिष्ठप्रकारतानिरूपितखङ्गाभिघातत्वावच्छिन्न विशेष्यता तत्र कृतेः साध्यताख्यविषयतापितदवच्छिन्नैववाच्या नतु मरणानुकूलव्यापारत्वावच्छिन्नेत्यतोऽत्र खङ्गाभिघातकर्तृत्वोपपत्तावपि वधकर्तृत्वमनुपपन्नमिति मरणोद्देशेनानुष्ठीयमानत्वविशेषणस्य कथं मरणानुकूलव्यापारत्वरूपं यद्धर्मत्वं तदवच्छिन्नविषयताकत्वविशिष्टकर्तृत्वनिर्वाहकत्वमित्यर्थः। ननूक्तहिंसालक्षणघटकं मरणोद्देशेनानुष्ठीयमानत्वं मरणनिष्ठोद्देश्यतानिरूपितव्यापारत्वावच्छिन्नसाध्यत्वाख्यकृतिविषयत्वरूपमेववाच्यं तच्च यत्र मरणानुकूलव्यापारत्वाद्यवच्छिन्ने इष्टसाधनताज्ञानादिकं तत्रैवास्तीति तस्यैवोक्तहिंसालक्षणलक्ष्यत्वमितियदिब्रूयात्तदाप्याह यदिचेत्यादि। तादृशविशेषणस्य मरणोद्देशेनानुष्ठीयमानत्वस्य। उक्तस्थले खङ्गाभिघातत्वावच्छिन्नधर्मिकेष्टसाधनताग्रहादिस्थले। तादृशलक्षणाव्याप्तिः सम्पूर्णप्रायश्चित्तप्रयोजकहिंसालक्षणाव्याप्तिः तथाविधव्यापारत्वावच्छिन्नविषयताककृत्यभावादितिभावः। विशेषणीभूतेति प्रकृतेतु मरणानुकूलव्यापारात्मकधात्वर्थविशेषणीभूतं मरणरूपफलंबोध्यम। हन्तेर्मरणानुकूलव्यापारार्थकतया च ब्राह्मणमरणानुकूलव्यापारजनिका स्वोद्देश्यकत्वसम्बन्धेन ब्राह्मणमरणविशिष्टाया कृति स्तस्यापव निषेधशास्त्रार्थघटकत्वं वाच्यं तच्च नयुज्यते इत्याह ब्राह्मणमित्यादि। विरुद्धत्वादिति एकत्रविशेषणतयोपस्थितस्यान्यत्र विशेषणतयाऽन्वयायोगादित्यर्थः।

मरणस्य स्वोद्देश्यकत्वसंबन्धेन कृतावन्वयसंभव एव निरुक्तविशिष्टकर्तृत्वस्य निषेधविधिविषयत्वसंभवात्, व्यापारविशेषणतयोपस्थितस्य कृत्यंशे विशेषणत्वस्य व्युत्पत्तिविरुद्धत्वात् । अथ मरणोपलक्षितव्यापारकर्तृत्वस्य तादृशनिषेधविषयत्वेऽपि न क्षतिः । अन्योद्देशेन नाराचक्षेपस्यापि ब्राह्मणमरणोपधायकस्य नरकसाधनत्वात् । परंतु मरणरूपप्रायश्चित्तविधेरेव तदविषयकत्वमुपपादनीयम् तच्च मरणोद्देशेन तदनुकूलव्यापारे कर्तृत्वबोधकस्य शब्दस्य तद्विधावन्तर्भावएवोपपद्यतइति चेत् । एवमपि ब्राह्मणमरणकामनया यत्र न तन्मरणानुकूलव्यापारानुष्ठानमपितु फलान्तरकामनाधीनतन्मरणानुकूलव्यापारत्वप्रकारकचिकीर्षया तदनुष्ठितं तत्राव्याप्तिरेतन्मते दुर्वारैव, तत्रापि संपूर्णस्यैव प्रायश्चित्तस्याचरणादलक्ष्यतोपगमासम्भवादिति मैवम् । यत्र हि मरणानुकूलव्यापारत्वेन कृतिसाध्यतादिधीस्तत्रैव यत्र व्यापारविशेषत्वेनैव तद्धीस्तत्रापि मरणरूपफलकामनाधीनव्यापारविषयिणी कृतिर्मरणानुकूलत्वेन व्यापारमवगाहते । कृतेः कामनाविषयफलोपरागेणोपायविषयतोपगमात् । विशृङ्खलफलभानोपगमे यत्र तृप्तिकामनया भोजनं फलान्तरकामनया च गमनमवगाहमाना समूहालम्बनकृतिस्तत्र तृप्तये गमनं करोतीति व्यवहारापत्तेः । उपायांशे मरणस्यानुकूलत्वं संबन्धः प्रकारो वेत्यन्यदेतत् । एवंच मरणावच्छिन्नव्यापारविषयकत्वमुभयत्रैव कृतेरिति विशेषणावच्छिन्नविषयककृतिमत्त्वं विशिष्टकर्तृत्वमुभयस्थले निष्प्रत्यूहम् । मरणोद्देशेनानुष्ठीयमानत्वमपि मरणानुकूलत्वोपरा-

---

मरणोपधायकोयो व्यारस्तद्विषयिका तदनुकूलाच याकृतिस्तद्रूप मरणोद्देश्यत्वाघटितमेव बधकर्तृत्वं तदेव च ब्राह्मणं न हन्यादित्यादि निषेधशास्त्रविषयो 'मरणोद्देशेन मरणानुकूलव्यापारकर्त्तासम्पूर्णप्रायश्चित्तमाचरेदिति विधिकल्पनेनैवच प्रायश्चित्ते विशेषः स्यादित्याह अथेति । तच्च तदविषयकत्वञ्च । यदिसम्पूर्णप्रायश्चित्तविधौ मरणोद्देशेनेति प्रवेश्यते तदा धनादिग्रहणोद्देशेन यत्र ब्राह्मणवधस्तत्रमरणकामनाजन्यकृतिविषयत्वरूपस्य हिंसालक्षणघटकविशेषणस्याभावात्तल्लक्षणाव्याप्तिरित्याह एवमपीति । व्यापारविशेषत्वेन खड्गाभिघातत्वादिना । व्यापारम् व्यापारविशेषम् । यत्र मन्त्रादिनापाकः सम्पाद्यते तत्र मन्त्रादिप्रयोक्तुः पाकानुकूलायाःपाकविषयिकायाश्च कृतेः सत्त्वेऽपि पाककर्तृत्वव्यवहारोन भवतीति मन्वान

गेण कृतिविषयत्वरूपंलक्षणघटकमिति न काचिदनुपपत्तिः। यद्यप्यदृष्टद्वारा पाकानुकूलकृतिमतोपि न पाकादिकर्तृत्वमिति तत्क्रियाकर्तृत्वघटकक्रियानिष्ठतदनुकूलत्व एवादृष्टाद्वारकत्वमपेक्षितं, नतु क्रियानिष्ठफलानुकूलत्वेऽदृष्टाद्वारकत्वं तत्रापेक्षितमिति व्यापारनिष्ठमरणानुकूलत्वेऽदृष्टाद्वारकत्वरूपमणिकारोक्तविशेषणस्य न कर्तृताघटकत्वं तथाप्यनुष्ठीयमानत्वप्रविष्टकृतेरेवादृष्टाद्वारकमरणानुकूलत्वं विवक्षितम्। विशिष्टकर्तृत्वंचादृष्टाद्वारकत्वविशेषितमरणानुकूलत्वेन कृतिविशेषणेन घटितमिति मिश्राशयः। तथा चैवं पर्यवसितम् हिनस्तेः प्रवृत्तिनिमित्तं मरणरूपफलावच्छिन्नव्यापारत्वमेव, न हिंस्यादित्यादौ फलविशिष्टस्वनिरूपितकर्तृत्वसंबन्धेन हिनस्त्याद्यर्थस्यानिष्टविशेषसाधनत्वं प्रतीयते श्येनस्य हिनस्त्याद्यर्थत्वेऽपि न तस्य तादृशकारणतावच्छेदकसंबन्धेन क्वचिदपि सत्त्वम् तत्कर्तुरदृष्टाद्वारकानुकूलताघटितफलकर्तृत्वविरहेण विशिष्टाकर्तृत्वादिति नानिष्टविशेषं प्रति हिंसात्वेन साधनत्वमिति न क्रियायां विध्यर्थान्वयमतेऽपि श्येनविध्यर्थबाधः। वस्तुतः श्येनानुकूलकृतेर्मरणप्रयोजकत्वमेव नतु मरणकारणत्वमन्यथासिद्धत्वात् मरणोपलक्षितान्यकर्तृकखड्गाभिघातादिरू-

---

आह यद्यपीति। नहिस्यादित्यादाविति नञ्समभिव्याहृतलिङ्स्थलेऽनिष्टसाधनत्वं विधिप्रत्ययार्थस्तच्च समभिव्याहृतधात्वर्थेऽन्वेति तथाचानिष्टसाधनीभूतोमरणानुकूलव्यापारः प्रतीयते अनिष्टसाधनताच फलविशिष्टस्वनिरूपितकर्तृत्वसम्बन्धावच्छिन्ना फलवैशिष्ट्यञ्च स्वाव्यवहितपूर्वत्वसम्बन्धेन स्वनिरूपितकर्तृत्वञ्च स्वविषयिकाऽदृष्टद्वारकस्वजनिकाच या कृतिस्तदाश्रयत्वम् स्वपदार्थे फलवैशिष्ट्याप्रवेशे मरणानुकूलव्यापारसत्वे मरणाभावेऽप्युक्तविध्याक्रान्तत्वं स्यादतस्तदुक्तमिति। तादृशकारणतावच्छेदकसम्बन्धेन फलविशिष्टस्वनिरूपितकर्तृत्वसम्बन्धेन। असत्त्वमेवोपपादयति तत्कर्तुरिति।विशिष्टाकर्तृत्वादिति उक्तरूपहिंसाकर्तृत्वाभावादित्यर्थः। हिंसात्वेनेति श्येनस्येतिशेषः श्येनस्यहिंसात्वेऽपि अनिष्टविशेषं प्रति फलविशिष्टस्वनिरूपितकर्तृत्वसम्बन्धावच्छिन्ना हिंसात्वावच्छिन्ना याकारणता सा श्येननिष्ठेत्यर्थः। विध्यर्थबाधः इष्टसाधनत्वबाधःशत्रुमरणरूपेष्टसाधनत्वस्य सत्त्वादितिभावः। मरणोपलक्षितेति मरणोपलक्षितोऽन्यकर्तृकखड्गाभिघातादिरूपो यो वैरिवधस्तं प्रतीत्यर्थः। येन हि श्येनयागोऽनुष्ठीयते तदन्यएव कश्चित खड्गाभिघातेन शत्रुंमारयतीतिभावः अत्र मरणविशिष्टमन्यकर्तृकखड्गाभिघातं प्रति हेतुत्वोपगमे विशिष्टान्वयमहिम्ना मरणंप्रत्यपिहेतुत्वं लभ्येत

पवैरिवर्धं प्रत्येव हेतुताया वेदेन बोधितत्वात् । क्रियाजन्यकार्ये तत्क्रियानुकूलकृतिहेतुतानियमेऽपि खड्गाभिघातादावेव श्येनकृतेर्हेतुत्वात् तथा चानिष्टविशेषजनकतावच्छेदकप्रत्यासत्तिप्रविष्टमरणानुकूलत्वं मरणजनकत्वमेव, नतु प्रयोजकत्वमतोऽदृष्टाद्वारकत्वं न तत्र निवेशनीयम् । कारणत्वपर्यन्तनिवेशलाभायैव तदुपादानम् । यदि च विशिष्टान्वयपरताया वेदे औत्सर्गिकत्वेन वधसाधनताबोधकश्रुत्या विशेषणीभूतमरणसाधनतापि श्येनस्य प्रत्याय्यते, तदापि श्येनानुकूलकृतेर्मरणसाधनत्वमप्रामाणिकमेव । क्रियाजनककृतेस्तज्जन्यजनकतानियमस्याप्रामामाणिकत्वात् । अथान्योद्देशेन नाराचक्षेपकर्तुर्विशिष्टविषयककृतिमत्त्वघटितविशिष्टकर्तृताविरहेऽपि यथार्धवधजन्यपापंप्रायश्चित्तं च तथा श्येनकर्तुर्विशिष्टाकर्तृत्वेऽपिपापार्द्धस्यावश्यकत्वाद्बलवदनिष्टाननुबन्धित्वबाधो दुर्वार एवेति चेन्न । अकामकृतेऽप्यर्द्धप्रायश्चित्तश्रवणेन मरणावच्छिन्नव्यापारस्य विषयतामनन्तर्भाव्य स्वजनककृतिमत्त्वसंबन्धेन न्यूनपापे स्वतन्त्रहेतुत्वकल्पनात् । तद्बलेन विशिष्टाकर्त्तुः श्येनकर्तृर्हिंसाजन्यपापानुत्पत्तेः। नच लाघवेन मरणोपलक्षितव्यापारजनकत्वमेव कृत्यंशे प्रत्यासत्तिमध्ये निवेश्यतामिति वाच्यम् । श्रुत्यर्थबाधापादकलाघवस्याप्रयोजकत्वात् । वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वेऽपि श्येनस्य मरणजनकत्वे विध्यर्थबाधप्रसंगेन मरणं प्रति श्येनस्यान्यथासिद्धताया एवोपगन्तव्यतया तस्य जनकतागर्भहिनस्त्यर्थतावच्छेदकरूपशून्यताया अपि सूपपादत्वात् । न च यदि खड्गाभिघातजनकादृष्टव्यवहितस्य श्येनस्य मरणेऽन्यथासिद्धत्वं तदा हन्तृकृतिजन्यव्यापारोऽपि तत्रान्यथासिद्धः स्यात् यश्च व्यापारो मरणेऽव्यवहितसाधनं, तत्र

---

अतोमरणोपलक्षितेत्युक्तम् । वेदेन श्येनेनाभिचरन्यजेतेत्यनेन । खड्गाभिघातादावेवेति तथाच नायंनियमोऽङ्गीकरणीयः प्रयोजनानुपलम्भादितिभावः । श्येनस्य मरणंप्रतिहेतुत्वाभावेसिद्धेऽनिष्टविशेषंप्रति हिनस्त्याद्यर्थस्य फलविशिष्टस्वनिरूपितकर्तृत्वसम्बन्धेन यदनुपदंकारणत्वमुक्तं तत्र दृष्टाद्वारकत्वंनप्रवेश्यमित्याह तथाचानिष्टविशेषेति। अनन्तर्भाव्येति कारणतावच्छेदकसम्बन्धघटककृतौ स्वविषयकत्वमप्रवेश्येत्यर्थः । विशिष्टाकर्तुः मरणविशिष्टव्यापाराकर्तुः । तस्य श्येनस्याजनकतागर्भेति मरणरूपफलावच्छिन्नव्यापारत्वमेव हिनस्तेः प्रवृत्तिनिमित्तं तत्रफलावच्छिन्नत्वं जनकत्वसम्बन्धेन फलविशिष्टत्वमेव एतादृशं च व्यापारत्वं न श्येने इतिभावः । व्यापारोऽपि खड्गाभिघातादिरपि । अन्यथासिद्धःस्यादिति

तद्धेतुः कृतिरेवान्यथासिद्धेति मरणकारणव्यापारकारणकृतिमत्त्वं न कस्यापि हन्तुः स्यादितिवाच्यम्।तण्डुलविक्रिय्यादिरूपफलव्यवहितस्यापि तुषादिप्रक्षेपस्य तत्करणदशायांपचतीत्यादि व्यवहारानुरोधेन यथानन्यथासिद्धत्वं तथा खड्गप्रक्षेपादिकरणदशायांहन्तीति व्यपदेशानुरोधेन खड्गप्रक्षेपादिरूपकर्तृव्यापारस्य तत्र व्यवहितस्यापिमरणेऽनन्यथासिद्धत्वमश्याभ्युपेयमिति सामञ्जस्यात्। तण्डुलक्रयणदशायां पचतीत्यादिव्यवहाराभावात् यथाक्रयणव्यापारोविक्रितावन्यथासिद्धस्तथा खड्गादिनिर्माणदशायां हन्तीत्यव्यवहारात्तद्व्यापारो मरणेऽन्यथासिद्धतया न हिंसा । व्याघ्रमरणोद्देशेन कृतो यन्त्रार्पणादिर्यथातत्र दैवाद्गवादिमरणेऽपि नगवादिहिंसारूपस्तथा न व्याघ्रादिहिंसारूपोपि तत्करणदशायां हन्तीत्यप्रयोगात् । अतथात्वेऽपि तन्मरणोद्देश्यकादृष्टाद्वारकतन्मरणप्रयोजककृतिजन्यव्यापारस्यापि हिंसावत् पापजनकत्वादुक्तस्थले गोवधाभिसंधाने गोवधप्रायश्चित्ताचरणमित्यवधेयम् । एवं च चैत्रः पचतीत्यादा विषयताघटितकर्तृत्वबोधनिर्वाहाय यथा कृतौ पाकादेरुपधायकत्वविषयित्वोभयसंबन्धेनान्वयः, विषयितायाः संबन्धत्वेऽपि उपधायकत्वनिवेश आवश्यकः पाकाद्यनिष्पत्तिस्थले पचति पश्यतीत्यादिप्रयोगस्य प्रामाण्यवारकत्वात्, तथा चैत्रेण पच्यतइत्यादावपि तृतीयार्थकृतेर्जन्यत्वविषयत्वोभयसंबन्धेनान्वयो बोध्यः । कृतिजन्यत्वस्य तृतीयार्थत्वे जन्यत्वसंबन्धमध्यएव स्वनिरूपकविषयत्वं प्रवेशनीयम्। कृतिविषयत्वमेव वा तृतीयार्थः । स्वनिरूपकजन्यत्वं विषयतायाः संबन्धमध्येऽन्तर्भावनीयम् । काष्ठेन पचतीत्यादौ करणत्वं तृतीयार्थः । तच्च व्यापारवत्कारणत्वम् । व्यापारेकर्तृव्यापाराधीनत्वं निवेशनीयम् । अन्यथा कर्त्तुरपि करणतापत्त्या चैत्रश्चैत्रेण पचति, काष्ठं चैत्रेण पचतीत्यादिप्रयागापत्तेः । नच कर्तृश्चेष्टादिरूपव्यापारस्य तदीयकृत्यादिरूपव्यापाराधीनतया तद्विषेणदानेऽपि कर्तुः करणत्वं दुर्वारमेवेति वाच्यम् । स्वभिन्नत्वेन कर्तुर्विशेषणीयत्वात् । यत्रैकैव पाकादिक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषादिप्रक्षेपेण निष्पाद्यते,तत्रचैत्रस्तुषैर्मैत्रःकाष्ठैः पचतीति

---

स्वजन्यशिरोविभागादिनेतिशेषः । तुषादिप्रक्षेपस्येति अनन्यथासिद्धत्वमित्यनेनान्वयः । तत्करणदशायाम् तुषादिप्रक्षेपकरणदशायाम् । अतथात्वेऽपि हिंसारूपत्वाभावेऽपि । अदृष्टाद्वारकेति इदञ्च श्येनस्य पापजनकत्ववारणायोक्तम् । सम्बन्धमध्यएवेति स्वरूप स्वनिरूपकविषयत्वोभयसम्बन्धेनजन्यत्वान्वयोबोध्यः । स्वभिन्नत्वेनेति स्वपदंकरणत्वेनाभिमतपरम तथाच स्वव्यापारप्रयोज्यत्व स्वावृत्तित्वोभयसम्बन्धेन कर्तृविशिष्टव्या

प्रसङ्गः समभिव्याहृतकर्तृव्यापाराधीनत्वस्य तत्तत्करणव्यापारे भानमुपगम्य वारणीयः। नच समभिव्याहृतकर्त्रन्तर्भावेण तृतीयार्थत्वे कर्त्रसमभिव्याहारस्थले करणे तृतीयाया अप्रयोगापत्तिरिति वाच्यम्। तत्रापि हेताविति सूत्रेण हेतुतामात्रार्थकतृतीयासंभवाद् धनेन कुलं विद्यया यश इत्यादिवत् नहि तत्र करणे तृतीया क्रियायोगाभावात्। नचैवमुक्तस्थले चैत्रस्तुषेण पचतीति प्रयोगस्य हेताविति सूत्रबलादापत्ताविष्टापत्तिं विनोत्तराभावात्समभिव्याहृतकर्त्रन्तर्भावस्य करणे स्वतन्त्रतृतीयानुशासनस्यैव वा वैयर्थ्यमिति वाच्यम्। उक्तस्थले पाके तुषहेतुकत्वाभावबाधेऽपि चैत्रस्तुषेण न पचति किन्तु दारुणैवेति प्रयोगोपपत्तये करणत्वे समभिव्याहृतकर्त्रन्तर्भावेण तृतीयायाः शक्तिकल्पनाया आवश्यकत्वात्। तद्ग्राहकतयैव करणे तृतीयानुशासनस्यावश्यकत्वात्। शरैः शातितपत्रोऽयमित्यादौ तृतीयायाः कारकविभक्तित्वएव तदर्थान्वितार्थकशातितादिपदेन समासस्य साधुतानिर्वाहात् स्वतन्त्रतदनुशासनसार्थक्याच्च। नच तृतीयायाः समभिव्याहृतकर्त्रन्तर्भावेण करणत्वार्थत्वे तत्र समभिव्याहृतकर्त्रभावादकारकविभक्तित्वं करणेतृतीयानुशासनेऽपि दुर्वारमेवेति वाच्यम्। एतदनुरोधेन तत्र कर्तुरध्याहरणीयत्वात्। वस्तुतः समभिव्याहृतकर्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च तृतीयायाः शक्तिद्वयम्। कर्त्रसमभिव्याहारस्थले व्यापारवत्कारणत्वमात्रंप्रतीयते कर्तृसमभिव्याहारस्थले व्यापारे तद्व्यापाराधीनत्वमपीति सामञ्जस्यम। एवं हेत्वनुशिष्टतृतीयाया अकर्तर्यृणेपञ्चमीत्यनेन बाधनात्करणत्वविवक्षायां धनवता ऋणेन बद्धोयमित्यत्र तृतीयाया उपपत्तये करणे तृतीयानुशासनस्यावश्यकताबोध्या। कारणत्वं च फलोपधानरूपमेव करणताघटकम् अन्यथा कुठारादिकरणकच्छिदादौ दात्रादेरपि स्वरूपयोग्यतया

---

पारवत्कारणत्वं करणत्वमिति पर्यवसितमतोनाननुगमः। इतिप्रसङ्गइति चैत्रकर्तृकत्वतुषकरणकत्व मैत्रकर्तृकत्व काष्ठकरणकत्वानामेकस्यां पाकक्रियायां सत्त्वात्। भानमुपगम्येति तथाच तुषनिष्ठव्यापारे चैत्रव्यापाराधीनत्वस्य काष्ठनिष्ठव्यापारे मैत्रव्यापाराधीनत्वस्य च बाधितत्वान्नोक्तप्रयोगस्य प्रामाण्यप्रसङ्गः। कारकविभक्तित्वएवेति प्रतियोगिपदान्यद्यदन्यत्कारकादपि। वृत्तिशब्दैकदेशार्थेन तस्यान्वयइष्यते इत्यभियुक्तोक्तेरितिभावः। विनापि कर्तृपदाध्याहारं शरैः शातितपत्रइत्यादावन्वयबोधस्यानुभवसिद्धत्वादाह वस्तुतइति। स्वरूपयोग्यतयेति ननु छिदात्वावच्छिन्नंप्रति दात्रत्वेन कारणत्वं न सम्भवति दात्राभावेऽपि कुठा-

करणत्वापत्तेः ॥ लिङ्गज्ञानस्यानुमितिकरणतामते धूमेन वह्निमनुमिनोतीत्यादा धूमादिपदं तज्ज्ञानपरम् व्याप्तिविशिष्टहेतुज्ञानस्य व्यापारस्तद्विशिष्टवैशिष्टयाव-गाहीपरामर्शः स चात्मनोयोगादिरूपानुमातृपुरुषव्यापाराधीन इति तस्य निरुक्तकरणत्वमबाधितमेव । धूमादिलिंगकवन्ह्यनुमितौ यत्र लिगान्तराद्‌घटादि-भानं तत्र धूमेन घटमनुमिनोमीति न प्रयोगः । अन्वयितावच्छेदकतद्विधेयकानु-मितित्वावच्छेदेनैवान्वयितावच्छेदकधूमादिविषयकज्ञानत्वावच्छिन्नत्वेन भासमानस्य करणत्वस्य निरूपकत्वभानोपगमात् निरूपकत्वं तु करणतामात्रस्य तृतीयार्थता-वादिनां प्राचां मते संसर्गः नव्यमते तु करणतानिरूपकत्वस्यैव नञर्थाभावे प्रति-योगित्वेनान्वयात्तावत्पर्यन्तस्य तृतीयार्थतया प्रकारतेत्यन्यदेतत् ।

परेतु लिगज्ञानस्य करणत्वेऽपि धूमेनानुमिनोतीत्यादौ धूमादिपदं मुख्यार्थपर मेव हेताविति सूत्रेणैव तत्र तृतीया । हेतुत्वस्य कारणतावच्छेदकसाधारणप्रयोजक-त्वरूपस्य तत्र विवक्षितत्वात् । जनकज्ञानविषयधूमादेश्चानुमितिकारणतावच्छेदक-

---

रेणछिदोत्पत्तेः नापि कुठारत्वेन तदभावेऽपि दात्रेणछिदोत्पत्तेः अतोऽन्यवहि-तोत्तरत्वघटितएव कार्यकारणभावोवाच्यः तथाच कथंस्वरूपयोग्यत्वं कुठारकरण-कच्छिदायां दात्रस्य, कारणतावच्छेदकधर्मस्यैव स्वरूपयोग्यत्वरूपत्वादितिचेन्न सर्वेषांछिदाकरणानां कुठारादीनामन्यतमत्वेनैव कारणत्वात् यत्रान्यतमत्वेनकार-णत्वे सहकारिनियमानुपपत्तिस्तत्रैव तृणारणिमणिन्यायेन प्रत्येकधर्मपुरस्कारेण कारणत्वमित्यभिप्रायकोऽयंग्रन्थ इतिप्रतिभाति। तस्य धूमादिज्ञानस्य। अवच्छे-देनैवेति अस्य निरूपकत्वेऽन्वयः अयमाशयः धूमेनवह्निमनुमिनोतीतिवाक्यस्थले धूमेनेत्येतत्पर्यन्तार्थे धूमज्ञानत्वावच्छिन्नकरणत्वनिरूपकत्वे वह्नित्वावच्छि-न्नविधेयताकानुमितित्वावच्छिन्नत्वं भासते तत्रचावच्छेदकत्वं नानतिरिक्त-वृत्तित्वरूपम् धूमज्ञानत्वावच्छिन्नकरणतानिरूपकत्वाभाववत्यामालोकलिङ्ग-कानुमित्यामपि वह्निविधेयकानुमितित्वस्य सत्वात् किंतु स्वरूपसम्बन्धरू-पमेव एवञ्च धूमलिङ्गकवह्न्यनुमितौ घटादेर्भानेऽपि धूमज्ञानत्वावच्छिन्नकरण-तानिरूपकतायां वह्निविधेयकानुमितित्वावच्छिन्नत्वाभावान्न धूमेन-घटमनुमिनोतीतिप्रयोगइति । प्रतियोगित्वेनान्वयादिति निरूपकत्वस्यवृत्त्य-नियामकस्यप्रतियोगितावच्छेदकसम्बन्धत्वाभावात्। अन्यदेतदिति उभयथापि निरूपकतायांतादृशानुमितित्वावच्छिन्नत्वभानमावश्यकमेवेतिभावः। मुख्यार्थमेवेति

तया प्रयोजकत्वमक्षतमेव । उक्तसमूहालम्बनस्थलेऽतिप्रसंगश्च घटविधेयकानुमितित्वावच्छेदेन धूमप्रयोजकतानिरूपकत्वभानाभ्युपगमेन वारणीयः। वस्तुतो जनकतावच्छेदकादिनिष्ठप्रयोजकतानिरूपकत्वं कार्यस्यैव कार्यतावच्छेदकस्याप्यक्षतं प्रतीतिसाक्षिकं च । तथाचानुमितिविशेषणतत्तद्विधेयकत्वरूपसुबन्तार्थएव तृतीयार्थान्वय उपगम्यते । समूहालम्बनानुमितिनिष्ठघटादिविधेयकत्वस्य धूमाद्यप्रयोज्यतया नोक्तातिप्रसङ्गः । धुमेनवह्निमनुमिनोति न घटेनेत्यादावनुमितौ घटादिप्रयोज्यत्वाभावो नान्वेति अपितु नञर्थाभावप्रतियोग्यन्वयिनि वन्ह्यादिविधेयकत्वएवातो यत्र धूमादिलिङ्गकवह्न्यनुमितौ घटादिरूपलिगाधीनं द्रव्यत्वादिभानं तत्र धूमेन वह्निमनुमिनोति न घटेनेति प्रयोगोपपत्तिः । समूहालम्बनरूपतादृशानुमितौ घटादिरूपलिंगप्रयोज्यत्वाभावस्यासत्त्वेऽपि वन्ह्यादिविधेयकत्वे तद्बाधात् नह्यनुमितावपि द्रव्यत्वादिविधेयकत्वावच्छिन्नघटादिलिंगप्रयोज्यत्वस्य वन्ह्यादिविधेयकत्वावच्छेदेनाभावोऽबाधित इति संभवति प्रयोज्यताया व्याप्यवृत्तित्वात् । एतेनानुमितौ धूमादिलिंगज्ञानकरणकत्वं तृतीयया प्रत्याय्यते । करणएव तृतीया तत्रेति मतं प्रत्युक्तम् उक्तस्थलेऽनुमितौ नञर्थान्वय योग्यताया अनुपपत्तेः । वह्न्यादिविधेयकत्वे धूमादिज्ञानरूपकरणजन्यतावच्छेदकत्वतदभावौ तृतीयान्ततत्समभिव्याहृतनञ्भ्यां प्रत्याय्यत इत्यपि न सत् । कारकविभक्त्यर्थस्य क्रियातिरिक्तेऽनन्वयात् । न चोक्तस्थले वह्न्यादिविधेयकत्वावच्छेदेन घटादिरूपलिंगज्ञानजन्यतावदनुमितिमत्त्वाभावः पुरुषनिष्ठो नञा प्रत्याय्यते तादृशानुमितिर्घटादौ वह्न्यादिलिंगत्वभ्रम-

---

धूमादिपरमेवेत्यर्थः। उक्तसमूहालम्बनेति यत्र धूमादिलिङ्गकवह्न्यनुमितौ लिङ्गान्तराद्घटादिभानं तत्रेत्यर्थः । नञर्थाभावेत्यादि नञ्समभिव्याहारस्थले घटेन वह्निमनुमिनोतीत्यादौ घटनिष्ठप्रयोजकतानिरूपकत्वस्य वह्निनिष्ठविधेयताकत्वएवान्वयान्नञ् समभिव्याहारस्थलेऽपि तत्रैवान्वयो युक्तइतिभावः। ननुघटादिप्रयोज्यत्वं द्रव्यत्वादिविधेयताकत्वावच्छेदेनैवानुमितावङ्गीकार्यं नतु वह्न्यादिविधेयताकत्वावच्छेदेन तथा चोक्तस्थले घटादिप्रयोज्यत्वाभावस्यानुमितावन्वयोपगमेक्षतिविरहइत्यतआह नह्यनुमितावपीति । व्याप्यवृत्तित्वादिति अव्याप्यवृत्तित्वानङ्गीकारेऽप्युक्तरीत्योपपत्तिसम्भवादितिभावः । एतेन नञ्समभिव्याहारस्थलेऽनुपपत्तिदोषेण । अनन्वयादिति हेतुतृतीयो-

दशायां प्रसिद्धेति वाच्यम्। धूमेन वह्नेरनुमानमिदं न घटेनेत्यादावनुमितिमत्त्वाद्य-भावबोधानुपपत्तेरिति प्राहुः। पर्वतो धूमेन वह्निमानित्यादौ क्रियायोगाभावाद्धे-तुतृतीयैव। तत्र ज्ञापकज्ञानविषयत्वं हेतुत्वं ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं तृतीयार्थः। हेतुशब्दो यद्यपि कारणपर्यायो न तु ज्ञापकपर्यायस्तथापि हेताविति सूत्रस्थहेतु पदं न समभिव्याहृतनिरूपितहेतुतामात्रपरमपितु समभिव्याहृततज्ज्ञानान्यतरनिरू-पितहेतुतापरमेवेति समभिव्याहृतवह्न्यादिज्ञानहेतुज्ञानविषयधूमादिपदादपि तृतीया तत्सूत्रेणानुशिष्यते। गुणहेतौ पञ्चम्या विकल्पेन विधायकसूत्रान्तरमप्यन्यतरनि-रूपितहेतुताविषयकमेवातो जाड्याद्बद्धो जाड्येन वेत्यत्र जाड्यहेतुतावद्धूमाद्व-ह्निमान् धूमेनवेत्यादौ धूमादेर्वह्न्यादिज्ञानहेतुता प्रतीयते। हेतुत्वं च पूर्वोक्तं प्रयोजकत्वमेव। गुणपदं च न रूपादिचतुर्विंशतिपरम् धूमादिहेतौ तत्त्वासम्भ-वात्। नच तत्र धूमादिपदं तज्ज्ञानपरमेवेति तादृशगुणत्वमेव वह्न्यादिहेतोरिति वाच्यम्। तत्र धूमादिपदस्यज्ञानलाक्षणिकत्वेऽप्यज्ञानाद्बद्ध इत्यादावभावरूपबन्धा-दिहेतोस्तथात्वासंभवात्। नापि धर्ममात्रपरम्। गगनादेरपि कालिकसम्बन्धेन धर्म-तयाऽव्यावर्तकत्वात्। समवायादिनाधर्मत्वं चाभावाद्यसंग्राहकम्। नापिद्रव्याश्रि-तत्वम्। सत्तावान् गुणत्वादित्यादौ पञ्चम्यन्तस्यालाक्षणिकत्वपक्षे पञ्चम्यनुपपत्तेः। किन्तु कार्यस्य ज्ञाप्यस्य वाऽऽश्रये आश्रितत्वम्। जाड्यादेः स्वप्रयोज्यबन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रयआश्रितत्वाद्गुणत्वम्। हेतौ तद्विशेषणप्रयोजनंच पितुः पाण्डित्येन पुत्र आहूतो धूमस्य स्वस्मिन्सत्त्वेन पर्वतो वह्निमानित्यादौ

---

पगमेतु क्रियातिरिक्तान्वयेबाधकाभावः। अनुमानम् अनुमितिः। अनुपप-त्तेरिति अनुमित्याश्रयबोधकपदाभावादितिभावः। तृतीयार्थ इति मणिकृतस्तु धूमेनवह्निरित्यत्रधूमपदंधूमज्ञाने वह्निपदंवह्निज्ञाने ज्ञायमानवह्नौवा लाक्षणिकम् हेतुताच तृतीयार्थः तथाच धूमज्ञानवृत्तिहेतुतानिरूपकज्ञानविषययोवह्निरित्यन्व यबोधइत्याहुः। सूत्रान्तरम् विभाषागुणेऽस्त्रियामितिसूत्रम्। वह्न्यादिहेतोरिति धूमादिज्ञानस्येत्यर्थः। धर्मत्वञ्च वृत्तिमत्वञ्च। गुणत्वपदस्य गुणत्वज्ञाने लाक्षणि-कत्वेतु नानुपपत्तिरत आह अलाक्षणिकत्वपक्षइति। तद्विशेषणेति गुणत्वविशे-षणेत्यर्थः। पाण्डित्येनेति पाण्डित्यस्य कार्यं यत्प्रकृते आह्वानं तदाश्रये पुत्र पितृगतपाण्डित्यस्यासत्त्वान्न गुणत्वम्। धूमस्यस्वस्मिन्निति स्वपदार्थः पर्वतः

पञ्चमीवारणम् । ज्ञापकत्वं च तत्त्वज्ञानजनकप्रमाविषयत्वं ज्ञाप्यत्वमपि प्रमाजन्यज्ञानविषयत्वम् । अतो वह्न्यादेर्व्याप्यताभ्रमेण धूमादिज्ञापकत्वसत्त्वेऽपि वह्निना वह्नेर्वा धूमवानयमित्यादयो न प्रयोगाः। प्रमात्वंच, यावद्भ्रमभिन्नत्वरूपं विवक्षणीयम् तेन धूमव्याप्यो वह्निरित्यादिज्ञानस्य वह्नित्वाद्यंशे प्रमात्वमादाय नोक्तातिप्रसङ्गः। द्रव्यत्वादेः प्रमेयत्वावच्छिन्नवह्न्यादिज्ञापकत्वेऽपि विशिष्टद्रव्यत्वत्वादिनावह्नित्वाद्यवच्छिन्नज्ञापकत्वेऽपि च पर्वतो वह्निमान् द्रव्यत्वाद् द्रव्यत्वेन वेत्यादिर्न प्रयोगः । अन्वयितावच्छेदकवह्नित्वद्रव्यत्वत्वादिना ज्ञाप्यज्ञापकभावस्य तृतीयादिना बोधनात् तत्र तेन रूपेण ज्ञाप्यज्ञापकभावविरहात् । एवं ज्ञाप्यवह्न्यादिमत्त्वान्वयितावच्छेदकपर्वतत्वावच्छिन्नांशे ज्ञापकत्वं ज्ञाप्यत्वं वा प्रतीयतइत्यपि नियमः। तेन पर्वतो वह्निमान् महानसत्वान्महासत्वेन वेत्यादयो न प्रयोगाः । अत्रेदमवधेयम् । पर्वतो वह्निमान् धूमात् न द्रव्यत्वान्नापि महानसत्वादित्यादौ नञा वह्न्यादौ द्रव्यत्वमहानसत्वादिज्ञाप्यत्वाभावबोधने बाधः तत्र प्रमेयत्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य महानसादौ महानसत्वादिज्ञानज्ञाप्यत्वस्य चसत्त्वात् वह्नित्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य पर्वतादौ महानसत्वज्ञाप्यत्वस्य चाप्रसिद्ध्या नाभावप्रत्यायनसंभव इति ज्ञानप्रयोज्यत्वं ज्ञानजन्यतावच्छेदकत्वरूपं समभिव्याहृतपर्वतादिविशेष्यतानिरूपितं विधेयत्वञ्च विशकलितं पञ्चम्यर्थः विशिष्टलाभोऽन्वयबलात्। एवंचोक्तस्थले नञा विधेयतायां द्रव्यत्वमहानसत्वादिज्ञानप्रयोज्यत्वाभावः प्रत्याय्यते । तत्प्रयोज्यत्वं च प्रमेयत्वाद्यवच्छिन्नविधेयतायां प्रसिद्धम् । नचैवं पर्वतो वह्निमान् न धूमादित्यादेरपि प्रसङ्गः धूमत्वाद्यवच्छिन्नविषयकज्ञानाप्रयोज्यतत्तद्वह्नित्वाद्यवच्छिन्नविधेयताया वह्न्यादावबाधितत्वादिति वाच्यम् । पर्वतादिविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयतात्वावच्छेदेन विधेयतायां नञाऽभावान्वयबोधोपगमात् ।

---

त्वचनधूमनिष्ठवृत्तित्वस्याश्रयः । यावद्भ्रमभिन्नत्वमिति तच्च प्रकारताविशिष्टविशेष्यताशून्यत्वम् वैशिष्ट्यञ्च स्वनिरूपितत्वस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणाभाववन्निष्ठत्वोभयसम्बन्धेनेति । उक्तातिप्रसङ्गः वह्निनाधूमवानित्यादिप्रयोगप्रसङ्गः । विशिष्टद्रव्यत्वेति पर्वतवृत्तित्वविशिष्टद्रव्यत्वेत्यर्थः । तत्रप्रमेयत्वादिनेति प्रमेयवान्द्रव्यत्वादित्यादौ द्रव्यत्वहेतुना प्रमेयत्वेन वह्नेरप्यनुमितेर्जायमानत्वाद्वह्निरपि

यत्र वह्नित्वावच्छिन्नविधेयतात्वमन्वयितावच्छेदकं तत्रैव तदवच्छेदेनेतरान्वयः संभवति। अत्रच वह्नित्वावच्छिन्नत्वाविशेषितं विधेयतात्वमेव तथेति कथं तदवच्छेदेनाभावान्वय इतितु न शङ्क्यम् पञ्चम्याद्यर्थविधेयताया वह्न्यादौ वह्नित्वाद्यवच्छेदेनान्वयोपगमात्तदवच्छेदेनतदन्वयेचावच्छेदकतद्रूपस्य तद्विशेषणांशे धर्मिपारतन्त्र्येण प्रकारत्वात्। प्रकृते स्वरूपसम्बन्धरूपवह्नित्वाद्यवच्छिन्नत्वेन सहितस्य विधेयतात्वस्यैवान्वयितावच्छेकत्वाद्। वह्न्यादिपदमेव तदवच्छिन्नविधेयताशालिज्ञानपरम् तदुत्तरमतुवादिप्रत्ययो विशेष्यतारूपसम्बन्धपर इति प्राचीनमतेतु वह्नित्वाद्यवच्छिन्नविधेयतात्वस्यान्वयितावच्छेदकत्वमविवादमेव। विधेयतायास्तत्तत्सम्बन्धावच्छिन्नविधेयतात्वेन पञ्चम्याद्यर्थत्वं स्वीकरणीयम्। तेनायं जानाति, आत्मत्वान्न द्रव्यत्वादित्यादौ विषयतासंबन्धावच्छिन्नायां प्रकृतविशेष्यतानिरूपितज्ञानविधेयतायां द्रव्यत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वसत्त्वेऽपि नावच्छेदकावच्छेदेनाभावान्वययोग्यत्वम् संबन्धविशेषावच्छिन्नविधेयतात्वरूपान्वयितावच्छेदकावच्छेदेनाभावसत्त्वबोधात्। एवं ज्ञानयोज्यत्वप्रविष्टं ज्ञानमपि तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशेषितमर्थः तेन समवायेन हेतुत्वपरस्यायं वह्निमान् तद्रूपान्न तु धूमादिति प्रयोगस्य नायोग्यता। वह्निविधेयतायां संयोगेन धूमप्रकारकज्ञानप्रयोज्यत्वसत्त्वेपि समवायसम्बन्धावच्छिन्नतत्प्रकारताशालिज्ञानप्रयोज्यतात्वरूपान्वयितावच्छेदकावच्छिन्नाभावस्याबाधात्- सम्बन्धविशेषघटितधर्मस्यान्वयितावच्छेदकतयाभाननियामकं तु तात्पर्यमेव वह्न्यादिविधेयताया व्याप्त्यादिघटकाभावादिज्ञानप्रयोज्यत्वसत्त्वेऽपि पर्वतो वह्निमानभावादित्यादिर्न प्रयोगः मुख्यविशेष्यतानिरूपितप्रकारताया एव निवेशनीयत्वादिति दिक्। केन हेतुना कस्मै हेतवइत्यादौ विभक्तिभिर्हेतुताविशिष्टे हेतुताबोधयितुमशक्या पौनरुक्त्यादिति न शङ्क्यम्। हेतुशब्दस्य स्वरूयोग्यपरत्वात्, विभक्तेः फलोपधानपरत्वात्। दण्डवान् रक्तदण्डवानितिवत् कार्यविशेषानुपरक्तहेतुताविशिष्ठे कार्यविशेषोपरक्तहेतुताबोधेऽनाकाङ्क्षताविरहाच्च। नचान्वयबोधसंभवेऽपि हेतुशब्दप्रयोगवैयर्थ्यम् फलोपधायकतालाभे स्वरूपयोग्यताया अर्थाल्लाभसंभवादित

---

द्रव्यत्वज्ञाप्य इतिभावः। महानसादाविति सप्तम्या अवच्छेदकत्वमर्थस्तथाच महानसावच्छेदेन वह्नौ महानसत्वज्ञानज्ञाप्यत्वस्येत्यर्थः। अन्वयबलात् योग्यताबलात्। विधेयतात्वमेवतथेति विधेयतात्वेनैव पञ्चम्योपस्थितेरितिभावः। विशेषणांशे पञ्चम्यर्थाधेयत्वांशे। अयंजानातीति समवायेनात्रसाध्यता। प्रयोज्यत्वसत्वेऽपीति कारणतावच्छेदकीभूतधर्ममात्रस्य कार्यतावच्छेदकधर्मप्रयोजकत्वात्। सम्बन्धविशेषेति समवायेत्यर्थः॥मुख्यविशेष्यतेति तथाच परामर्शस्याभावविषयक-

वाच्यम् । विभक्तेरन्यार्थताया अप्यन्यत्र दृष्टत्वात्हेतुतापरत्वनिश्चयार्थं तत्प्रयोगात् । सहार्थयोगेऽपि साहित्यप्रतियोगिवाचकपदात् तृतीया पुत्रेण सहागतः पुरुष इत्यादौ । अथ यदि सहशब्दार्थः समभिव्याहृतपदोपस्थाप्यक्रियासमानकालीनक्रियान्वयित्वम् । तदन्वयित्वं च समभिव्याहृतक्रियाबोधकपदेन क्रियाया यादृशः सम्बन्धः साहित्यान्वयिनि प्रत्याय्यते, तादृशतत्सम्बन्ध एव सच पुत्रेणेत्यादौ कर्तृत्वम् । दध्ना सहौदनो भुज्यतइत्यादौ कर्मत्वादिस्तृतीयार्थोऽपि स एव सम्बन्धः । तथाच पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्वदधिकर्मकभोजनसमानकालीनभोजनकर्मत्वादिकं पुरुषौदनादौ तत्र तत्र प्रतीयत इत्युच्यते । तदा सह शब्देनैव तत्तत्क्रियाकर्तृत्वबोधने क्रियापदवैयर्थ्यम् द्विधा क्रियाभानस्यानुपयुक्तत्वात् क्रियान्वयिनि क्रियान्वयबोधस्योद्देश्यतावच्छेदकविधेययोरभेदेननिराकाङ्क्षतयाऽसंभवाच्च । नच तत्तत्क्रियासमानकालीनत्वमात्रंसहशब्दार्थः तस्य च क्रियापदोपस्थापितक्रियायामेवान्वय इति क्रियापदसहितसहशब्दादेवोक्तविशिष्टार्थलाभ इति नकस्यापि-वैयर्थ्यमिति वाच्यम् । एवं सति पुत्रेण सहागत इत्यादौ सहशब्दार्थस्य क्रियापदार्थान्वयित्वेन सपुत्र आगतइत्यादिसमासस्थलेऽपि पुत्रागमनकालीनत्वरूपसमासार्थस्यक्रियायामेवान्वयस्योपगन्तव्यतया पुत्रपदस्य चैत्रपदसामानाधिकरण्येन प्रयोगानुपपत्तेरिति चेन्न । समभिव्याहृतपदोपस्थाप्यक्रियाकाल एव सहशब्दार्थः तस्य क्रियान्वयिनि नामार्थएवान्वयः तादृशकालविशिष्टे नामार्थे क्रियान्वयेच क्रियायाश्रपि तादृशकालावच्छिन्नत्वं भासते उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् अतः क्रियाद्वयसमानकालीनत्वलाभ इति सामञ्जस्यात्। अथवा आगमनसमानकालीनागमनादिकमेव सहशब्दार्थः। तस्य कर्तृत्वादिसम्बन्धेन पुरुषादान्वयः । तादृशसम्बन्धेन तद्विशिष्टे चागत आगच्छतीत्यादिपदोपस्थाप्यगमनकर्तृकर्तृत्वादीनामभेदभेदाभ्यामन्वये न व्युत्पत्तिविरोधः । विधेयस्योद्देश्यतावच्छेदकप्रकाराभेदविरहात्। नच सहशब्दार्थान्वयबलादेव तत्क्रियाकर्तृत्वस्य पुरुषादौ लाभे प्रकारतयापि क्रियापदेन तत्प्रतिपादनमफलमिति तत्प्रयोगो व्यर्थ इति वाच्यम्। समभिव्याहृतपदेन तत्तत्क्रियाया अनुपस्थाने सहशब्देनापि तत्तत्क्रि-

---

त्वेऽपि पक्षतावच्छेदकावच्छिन्नया मुख्यविशेष्यतया निरूपिता या प्रकारता साहेतुतावच्छेदकावच्छिन्नैव नत्वभावत्वावच्छिन्नेतिभावः । प्रयोगवैयर्थ्यमिति केनवसति कस्मैवसतीत्यादितएव तल्लाभादितिभावः । क्रियान्वयिनीति पुत्रेणसहागतःपितेत्यादौ उपदर्शितागमनकर्तृत्वविशिष्टे आगतइत्यादिपदबोध्यस्यागमनकर्तृत्वविशिष्टस्यान्वयोनिराकाङ्क्षत्वान्न सम्भवतीत्यर्थः । नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादाह सहशब्दार्थेति । अन्तर्भावनीयत्वादिति तथाच

याघटितसाहित्यस्याशक्यस्य बोधनं न संभवतीति क्रियापदप्रयोगस्यावश्यकत्वात् सहशब्दार्थक्रियायाः कर्तृत्वादिसंबन्धेन नामार्थेऽन्वयश्च न व्युत्पत्तिविरुद्धः। सहशब्दस्याधातुत्वाद्, प्रातिपादिकत्वेऽपि निपातत्वाच्च। नच प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सहलक्ष्मणेनेत्यादौ शत्रुघ्नप्रसवलक्ष्मणप्रसवयोः समानकालीनत्वा भावात्क्रिया द्वयसमानकालीनतायाः सहशब्दार्थत्वासंभव इति वाच्यम् तत्रापि स्थूलकालघटितसमानकालीनत्वसत्त्वात्। नच कालत्वेनैव कालस्य तदर्थान्तर्भावे पुत्रागमनपूर्वमागन्तरि आगतोऽयं न पुत्रेण सहेति प्रयोगानुपपत्तिः। पुत्रागमनाधिकरणस्थूलकालवृत्त्यागमनकर्तृत्वसत्त्वेनान्वयितावच्छेदकरूपावच्छिन्नप्रतियोगिताकसाहित्याभावबाधादिति वाच्यम्। तत्र क्षणत्वेनैव कालस्य सहछब्दार्थेऽन्तर्भावनीयत्वात्। एवं यत्र एककालेऽपि विभिन्नस्थले भुञ्जानमधिकृत्य न सह भुङ्क्तइति प्रयुज्यते तत्रैकशालारूपभोजनाधारोऽपि सहशब्दार्थेऽन्तर्भावनीयः। अतएवालापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनादित्यादिना पतितभोजनसमानकालीनभोजनमात्रस्य पापजनकत्वं न बोध्यते एकपङ्क्तेरपि विवक्षणात्। एवं "याजनं योनिसंवन्धं स्वाध्यायं सह भोजनम्। सद्यः पतति कुर्वाणः पतितेन न संशय" इत्यादावेकदैकपात्रभोजनस्यैव सद्यःपातहेतुत्वं प्रत्याय्यते, तत्र तादृशार्थस्यैव सहशब्देन विवक्षणात्। अथ नामार्थस्यैव सहार्थविशेष्यतयान्वयोपगमे पुत्रेण सह नागच्छत्ययमित्यादौ सहशब्दार्थपुत्रसाहित्याभाव एव पुरुषांशे नञा बोध्यतइत्युपगन्तव्यम् तच्च नोपपद्यते तथासत्याख्यातार्थोद्देश्यतावच्छेदकतयैव नञर्थभानस्योपगन्तव्यतया प्रसज्यप्रतिषेधस्थले निषेधस्य तं प्रति प्राधान्येन भाननियमव्याघातात्। एवमनागच्छन्तमपि पुरुषमधिकृत्य तथा प्रयोगात्तत्रायोग्यताप्रसङ्गाच्च। एतेन तत्र पर्युदासनञ्त्वक्रियायोगपरित्याग इत्युक्तावपि न प्रतीकारः। नच तत्रागमनाभावकाल एव पुरुषान्वयी सहशब्दार्थः तथाच पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्त्तमानकालावच्छिन्न आगमनाभावः प्रतीयतइति न काचिदनुपपत्तिरिति वाच्यम्। यत्रास्य पुत्र आयाति न त्वयं तत्रापि तादृशप्रयोगात्। तत्रच पुत्रागमनकालावच्छिन्नस्यागमनकर्तृत्वाभावस्य-

---

प्रयोगानुसारेण क्वचित्क्षणत्वेन क्वचित्ततत्स्थूलकालत्वेनचप्रवेशः। इत्युपगन्तव्यमिति प्रतियोग्यभावान्वयौतुल्ययोगक्षेमाविति न्यायात्। तम्प्रति आख्यातार्थं-प्रति। तत्रायोग्यतेति पुत्रागमनसमानकालीनागमनाभाववान् पिता आगमनकर्तेतिवोधस्यपितरिगमनाभावाद्भ्रमतयातज्जनकस्योक्तप्रयोगस्य प्राभाण्यंनोपपद्यतेतिभावः। ननुघटोनपटइत्यादौपर्युदासनञर्थस्य नामार्थएवान्वयोभवति न क्रियायां तथाप्रकृतेऽप्यङ्गीकार्यं तथाचानुपदोक्तः प्राधान्येनभाननियमोऽप्रामाणिकः संकुचितोवास्त्वित्यतआह एतेनेति उक्तायोग्यत्वप्रसंगेनेत्यर्थः।

सत्त्वेऽपि पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्त्तमानकालावच्छिन्नागमन-
कर्तृत्वाभावस्यासत्त्वेनायोग्यतापातात् । मैवम् । सहशब्दार्थस्तत्तत्क्रियाकालःक्वचि-
त्तत्तत्क्रियान्वयिप्रथमान्तपदार्थेऽन्वेति क्वचिच्च समभिव्याहृतक्रियायाम् । सपुत्र-
आगच्छतीत्यादौ पुत्रेण सहागच्छति य इति विग्रहात् । प्रथमान्तान्यपदार्थ एव पुत्रा
गमनकालान्वयो नतु क्रियायामिति न पूर्वोक्तानुपपत्तिः । नवान्यपदार्थपुरुषालाभः।
नचैवं समासलभ्यस्य पुत्रागमनकालावच्छिन्नस्य पुंसो विग्रहवाक्येनापि प्रतिपाद-
नाद्बहुव्रीहिमात्रस्यव नित्यसमासत्वमिति नियमो भज्येतेति वाच्यम् बहुव्रीहिमात्रस्य
तथात्वानियमात् प्रथमान्तानुपस्थाप्यान्यपदार्थबोधकबहुव्रीहेरेव तत्त्वाभ्युपगमात् ।
अत्रचान्यपदार्थस्य प्रथमान्तोपस्थाप्यत्वात् । नच वृष्टे देवे गत इतिवत् प्रथमार्थे
बहुव्रीहेरसाधुत्वमिति वाच्यम् अनेकमित्याद्यनुशिष्टबहुव्रीहावेव तन्नियमात् ।
अत्रच सूत्रान्तरेण तद्विधानात् । अतएव तदारम्भोऽपि । पुत्रेण सह नागच्छती-
त्यादौ च क्रियायामेव तादृशसहार्थान्वय इति पुत्रागमनकालीनागमनकर्तृत्वाद्य-
भावः प्रथमान्तार्थे प्रतीयतइति सर्वं सुस्थम् । भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपिग-
र्दभ्यां, “ सहैव दशभिः पुत्रै ” रित्यादौ वर्त्तमानेत्यध्याहाराद्वर्त्तमानत्वक्रियामादा-
यैव साहित्यबोध इति वदन्ति ।

इत्थंभूतलक्षणइत्यनेन लक्षणवाचिपदात्तृतीयाऽनुशिष्यते। लक्षणत्वं च व्यावर्त-
कत्वं तच्च विशेष्यवृत्तित्वेसति विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम्;

---

तादृशप्रयोगात् पुत्रेणसहनागच्छतीतिप्रयोगात्। नपूर्वोक्तानुपपत्तिरिति समस्यमा-
नपदार्थेनैवसहान्वयान्नसमासानुपपत्तिरित्यर्थः । नित्यसमासत्वमिति विग्रहवा-
क्याप्रतिपाद्यस्वार्थकसमासत्वं नित्यसमासत्वम् भवतिच गीष्पतिः धना-
धिप इत्यादौ तत्पुरुषे कृष्णसर्पइत्यादौकर्मधारयेच क्वचिदेव समासार्थजातिविशे
षावच्छिन्नानां विग्रहवाक्यतोबोधाभावान्नित्यसमासत्वम् बहुव्रीहेस्तु सर्वस्यैव
स्वार्थस्यचित्राभिन्नगोसम्बन्ध्याद्यात्मकस्य यत्सम्बन्धिचित्राभिन्नगवादिरू-
पार्थप्रतिपादकविग्रहवाक्याप्रतिपाद्यत्वेन नित्यसमासत्वमिति । सूत्रान्तरेण
तेनसहेतितुल्ययोगे इतिसूत्रेण । यदा पुत्राः भारंवहन्ति गर्दभीच यदाच गर्द-
भी भारं पुत्रंचवहति तदा नोक्तप्रयोगानुपपत्तिः गर्दभ्यांपुत्रकर्तृकभारवहनसमा-
नकालीनभारवहनकर्तृत्वस्य पुत्रकर्मकवहनसमानकालीनभारवहनकर्तृत्वस्यचस-
त्वादित्यतआह भारमनुद्वहन्तमित्यादि । विशेष्यवृत्तित्वेसतीति इदञ्च गन्धेनजल-
मितिप्रयोगवारणायोक्तम् । विशेष्यतावच्छेदकेत्यादि तथाच जटाभिस्तापसइत्यादौ

तदाश्रयश्चधर्मो द्विविधो विशेषणमुपलक्षणं च । विद्यमानं सद्व्यावर्त्तकं विशेषणम् । पुरुषादौ वर्त्तमानकालावच्छेदेन विद्यमानो दण्डादिः । अविद्यमानं सद्व्यावर्तकमुपलक्षणम् तापसादेः कालान्तरीणजटादिकम् । विशेषणस्य संबन्धो मतुवादिभिः प्रत्याय्यते अस्मिन्नस्यास्तीत्यर्थे विहितानां तेषांवर्तमानसंबंधार्थकत्वात् , अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात् तृतीयैव । तृतीयया विद्यमानत्वस्येवाविद्यमानत्वस्याप्यप्रत्यायनात्। विशेषणवाचिपदादपि तृतीया यथा ज्ञायमानत्वेन लिङ्गं करणमित्यादौ । अथ तत्र ज्ञायमानत्वादिवैशिष्ट्यं तृतीयया लिङ्गादौ न प्रत्याय्यते अपि तु पदार्थैकदेशे करणत्वादावेव तदवच्छिन्नत्वमिति चेत्तथापि सा विशेषणतृतीयैव अनुशासनान्तराभावात्। वस्तुतो लिङ्गादौ ज्ञायमानत्वादिवैशिष्ट्यबोधनेऽपि संबंधविधया करणत्वज्ञायमानत्वाद्योरवच्छेद्यावच्छेदकभावभानसंभवादेकदेशान्वयस्वीकारोऽनुचितः । नच संबन्धविधया करणत्वएकदेशेऽवच्छिन्नत्वभानेऽप्येकदेशान्वयध्रौव्यमिति वाच्यम् । करणाभेदरूपे करणत्वे करणस्य संबन्धविधया भासमाने ज्ञायमानत्वावच्छिन्नत्वस्यावच्छेदकतया भानोपगमेनैकदेशान्वयं विनाप्यवच्छेद्यावच्छेदकभावभानात् । अथ दण्डवानयमासीद्दण्डीग-

---

क्वचित्तापसेजटाया अभावेनतापसत्वसमानाधिकरणस्याभावस्य प्रतियोगित्वं जटायामस्तीति तस्याः लक्षणत्वम् लक्षणत्वस्योक्तरूपत्वादेवच प्रमेयत्वेन घटइत्यादयो न प्रयोगाः। अत्रोक्तप्रतियोगित्वं वैशिष्ट्यश्च तृतीयार्थः तथाचोक्तप्रतियोगित्वस्य-जटायामन्वयः तस्याश्च वैशिष्ट्ये एवञ्च तापसत्वसमानाधिकरणाभावप्रतियोगिजटाविशिष्टस्तापसइतिबोधः । एवं दण्डेनपुरुषइत्यादावपि बोध्यम् । नचैवं द्रव्यत्वेनगुणवानित्यादौ गुणादिसमानाधिकरणाभावप्रतियोगित्वस्य द्रव्यत्वादावभावात्तृतीयाऽनुपपत्तिरिति वाच्यम् । तत्रोक्तसूत्रेण तृतीयायाअविधानेऽपि ज्ञापकहेतौ तस्याः संभवावादिति । विद्यमानंसदिति प्रतीतिकालेइतिशेषः । एवंपरत्रापि । अप्रत्यायनादिति सम्बन्धमात्रंहितृतीययाप्रत्याय्यते नतुवर्त्तमानत्वावर्त्तमानत्वेइतिभावः । नप्रत्याय्यत इति तथासति करणत्वे ज्ञायमानत्वावच्छिन्नत्वं नलभ्येतेतिभावः । अनुशाशनान्तराभावादिति इदन्तु न मनोरमम् । प्रकृत्यादिभ्यउपसंख्यानमित्यस्यावच्छिन्नत्वार्थे तृतीयाविधायकस्यवार्त्तिकस्य सत्वात् कथमन्यथा द्रव्यत्वेनविषयोघटइत्यादौ घटत्वसमानाधिकरणाभावाप्रतियोगिद्रव्यत्ववाचकपदात्तृतीयोपपद्यतेति उक्तवार्त्तिकेन विधीयमानायास्तृतीयायाः प्रकृतेऽवच्छिन्नत्वमर्थस्तस्य हि विषयत्वेऽन्वयस्तथाच द्रव्यत्वावच्छिन्नविषयतावान् घट इत्यन्वयबोधः । उक्तञ्च पदवाक्यरत्नाकरे प्रकृत्यादिगणाज्जाता तृतीयातुतदात्मताम् । अवच्छेदकतावृत्तिप्रकारत्वादि शंसतीति।

तवानित्यादौ दण्डस्यातीततया विशेषणत्वासंभवान्मतुवाद्यनुपपत्तिरिति चेन्न। प्रकृतशब्दप्रयोगाधिकरणकालावच्छिन्नस्यैव विधेयान्तरसमभिव्यहारस्थले तदधिकरणकालावच्छिन्नस्यापि संबन्धस्य मतुवादिना प्रत्यायनात्। तत्रातीतकालसत्त्वादिरूपविधेयाधिकरणातीतादिकालावच्छिन्नसंबन्धस्यैव मतुवाद्यर्थत्वात् अविद्यमानोऽपि दण्डादिर्धर्मान्तरसंबन्धसमानकालीनतया धर्मान्तरान्वयिनि विशेषणम्। तत्प्रकारेण भासमाने धर्मान्तरान्वयबोधो विशिष्टवैशिष्ट्यबोधइत्युच्यते। नत्वसावन्वयिन्युपलक्षणम् नवा तादृशबोधस्तदुपलक्षितान्वयबोध इत्युच्यते। क्वचिद्विधेयान्तरसमानकालीनमपि विशेषणं तदनन्वयितया तदन्वयिन्युपलक्षणमुच्यते यथा रूपवान्रसवानित्यादौ रूपादिकं रसान्वयिनि, सास्नावान् गोपदवाच्य इत्यादौ सास्नादिकं गवादिपदवाच्ये। क्वचिद्धर्मिसम्बद्धधर्मान्तरसम्बन्ध्यपि धर्मो धर्मान्तरसंबन्धितानवच्छेदकतया धर्मांतरसंबन्धिन्युपलक्षणमतो दण्डपुरुषावित्यादिसमूहालम्बनबोधो दण्डाद्युपलक्षितपुरुषादिविषयको नतु विशिष्टविषयक इत्युच्यते। विशेष्यसम्बन्धासंबन्ध्यपि तत्संबन्धितावच्छेदकतया तद्वति विशेषणम्। अतएव संज्ञाविशिष्टसंज्ञ्यादिज्ञाने संज्ञादेर्विषयत्वमन-

---

करणाभेदरूपइति अयमाशयः ज्ञायमानत्वेनलिङ्गंकरणमित्यत्र लिङ्गे ज्ञायमानत्वं स्वरूपसम्बन्धेन करणञ्चाभेदसम्बन्धेनान्वेति सचाभेदः करणत्वमेव प्रकारतावच्छेदकधर्मस्यैव प्रकारवृत्तित्वशिष्टस्याभेदरूपत्वात् तत्र करणत्वरूपाभेद संसर्गे ज्ञायमानत्वावच्छिन्नत्वं भासते ज्ञायमानत्वस्योद्देश्यतावच्छेदकत्वात् विधेय संसर्गे उद्देश्यतावेच्छेदकावच्छिन्नत्वभानस्यौत्सर्गिकत्वादिति यदिच तदभेदस्यतद्वत्तासाधारणरूपत्वमेव तदातु नायंमार्गः साधीयानित्यवधेयम्। अविद्यमानोऽपीति प्रयोगकाले इत्यादिः। तदनन्वयितया विधेयान्तरानन्वयितया अन्वयश्चविधेयान्तरेणसह तस्यधर्म्यंशेभासमानोयः सएवग्राह्योऽस्तिचदण्डवानस्त्यासीदित्यादौविद्यमानातीतकालसत्त्वादेर्विधेयस्य धर्मिणिपुरुषे यएवसम्बन्धः सएवविशेषणेनदण्डेनापीति सएवविशेषणं नतुरूपादिकं तेनसहरसादे॰रसवदादेर्वा विधेयस्य धर्मिणिद्रव्ये भासमानस्यसमवायस्याभेदस्यवा सम्बन्धस्य विरहात् यस्य कस्यचित्सम्बन्धस्यग्रहणे सामानाधिकरण्यादेस्तत्रापिसंभवेन रूपस्यापि विशेषणत्वमेव स्यादित्याहुर्गुरुचरणाः॥ रूपादिकमिति रससमानकालीनमपिरूपादिकं रसानन्वयितया रसवतउपलक्षणमित्यर्थः। दण्डपुरुषावित्यादीति अत्रधर्मीपुरुषः तत्सम्बद्धधर्मान्तरं द्वित्वं तत्सम्बन्ध्यपि दण्डरूपोधर्मः द्वित्वरूपधर्मान्तरनिरूपितसम्बन्धितायाः पुरुषनिष्ठायाअनवच्छेदकतया द्वित्वसम्बन्धिनि पुरुषे उपलक्षणम् यदिहि दण्डविशिष्टं पुरुषत्वं द्वित्वसम्बन्धितावच्छेदकंस्यात्स्यात्तदा दण्डो विशेषणं नत्वेतदस्तीत्यर्थः। तत्सम्बन्धितेति विशेष्यनिरूपितसम्बन्धि-

स्थितस्वर्गत्वावच्छिन्नस्य विध्यर्थैकदेशे इष्टेऽभेदान्वयात्प्रवर्त्तकज्ञाननिर्वाह इति। तदपि न सत् वृत्तिशब्दैकदेशे इतरानन्वयनियमात् स्वर्गत्वादिप्रकारेण कामनाधीनप्रवृत्तौ स्वर्गत्वादिविशेषितफलसाधनताज्ञानस्य हेतुतया अभेदेन स्वर्गादिविशेषितफलसाधनताज्ञानस्यानुपयोगित्वाच्च। अभेदेन स्वर्गादिप्रकारक स्वर्गादीष्टसाधताज्ञानमपि स्वर्गत्वादिप्रकारकप्रवृत्तौ हेतुः। अतएव स्वर्गकामो यजेतेत्यादितः प्रवृत्तिरिति तु न युक्तम्। स्वर्गत्वप्रकारककामनाया अधिकारत्वानुपपत्तेः। अथेष्टत्वस्य शक्योपलक्षणत्वे तदंशाभाननिर्वाहेपि स्वर्गत्वादेरशक्यस्य भानं न संभवति अशक्यस्य भानोपगमेतिप्रसङ्गादिति चेत्। स्वर्गत्वाद्यवच्छिन्ने समभिव्याहृतकामनाविषयत्वज्ञानसहकृतस्य तादृशकामनाविषयतावच्छिन्नशक्तिज्ञानस्य स्वर्गत्वादिप्रकारकशाब्दधीहेतुत्वोपगमेऽतिप्रसङ्गानवकाशात्। वस्तुतस्तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात्सर्वसामञ्जस्यम्। नच स्वर्गत्वादिविशिष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वं न संभवति स्वर्गत्वादेर्गङ्गास्नानादिजन्यस्वर्गादिसाधारण्येन यागादिजन्यतानवच्छेदकतया यागादौ स्वर्गत्वादिविशिष्टसाधनत्वबाधात् नहि जन्यतानवच्छेदकधर्मो जनकत्वनिरूपके विशेषणमिति वाच्यम्। स्वर्गत्वादेः शक्यविशेषणत्वेपि तदुपलक्षितवैज्यात्यावच्छिन्ननिरूपितजनकताया यागादावबाधितायाः स्वर्गादिजनकतात्वेन विधिप्रत्ययतो भानसंभवात्। घटत्वादिविशिष्टवाचकपदघटिताद् घटं द्रव्यत्वेनैव जानातीत्यादिवाक्यात् घटत्वाद्युपलक्षितघटादिविशेष्यकत्वभानवत्। नच तद्धर्मावच्छिन्ननिरूपिततत्साधनत्वज्ञानं विना तद्धर्मप्रकारकफलेच्छाधीनप्रवृत्त्यनिर्वाह इति शङ्क्यम्। वह्नित्वादिप्रकारकेच्छातोपि तृणादिसमवधानेऽभ्रान्तप्रवृत्तेरानुभविकत्वात् भूयः सुखार्थिनामपि श्रमं विना क्रियाविशेषे प्रवृत्तेश्च तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफलं प्रति साधनताज्ञानस्यैव प्रवर्त्तकत्वात्। सच धर्मः कार्यतावच्छेदकतया भासतां कार्यांशे उपलक्षणतयैव वेत्यन्यदेतत्। नहि वह्नित्वादिकं तृणादिजन्यतावच्छेदकं व्यभिचारिसाधारणत्वात्। नवा भूयस्त्वादिकं कस्यचिज्जन्यतावच्छेदकमर्थवशसंपन्नत्वात्। एवं सति घटत्वावच्छिन्नफलार्थी तन्त्वादौ कथं न प्रवर्त्तते तन्त्वादेरपि घटत्वाद्युपलक्षितजन्यसत्त्वादिविशिष्टनिरूपितद्रव्यत्वावच्छिन्नसाधनतावत्त्वादिति चेत् फलानुपधाननिश्चयात्तस्य स्वातन्त्र्येणप्रवृत्तिप्रतिबन्धकत्वात् फलोपधायकसाधनत्वस्य वा विधिप्रत्ययार्थतया घटकामस्तन्तुमुपाददीतेत्यादिर्न प्रयोगः। नच तथापि स्व-

र्गत्वादेर्यागादिनिष्ठकारणताघटकव्यापकतानिरूपकतानवच्छेदकतया स्वर्गत्वावच्छिन्ननिरूपितव्यापकताघटितकारणताया बाधः स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य च कारणताग्रहोत्तरकालकल्प्यत्वेन प्रागनुपस्थितया तदवच्छिन्ननिरूपितव्यापकताबोधासंभव इति स्वर्गकाम इत्यादौ विध्यर्थबोधानुपपत्तिर्दुर्वारैवेति वाच्यम् । स्वरूपसंबन्धरूपाया एव कारणताया विध्यर्थत्वोपगमात् । अन्यथा सिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वं । नियतोत्तरवर्तितावच्छेदकश्च धर्मो विशिष्य उत्तरकालकल्प्यो जातिविशेष एव नियतोत्तरवर्त्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते नियतोत्तरवर्त्तितावच्छेदकत्वं च कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नतद्व्यापाराभावाधिकरणताविशिष्टोत्पत्तिक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वम् अधिकरणतावैशिष्ट्यं च स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वसंबन्धेन । वस्तुतः स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम् । नियतपूर्ववर्तितावच्छेदकत्वं चाव्यवहितपूर्वकालावच्छिन्नवृत्तिकाभावघटितदैशिकव्यापकतायाः स्वाश्रयत्वस्वाश्रयनिरूपितव्यापारवत्त्वान्यतरसम्बन्धेनावच्छेदकत्वमेव व्यापकत्वनिरूपकतावच्छेदकवैजात्यस्य विशिष्यानुपस्थितावपि स्वर्गधर्मत्वेन ज्ञानं संभवत्येव । व्यापकताघटकाभावप्रतियोगितायां स्वरूपतोवच्छेदककोटिप्रविष्टाया अपि जातेर्व्यापकताभाने स्वर्गधर्मत्वादिनाभाने नबाधकम् स्वर्गधर्मत्वादेरुपलक्षणतयाभानात् । प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञानएव प्रतियोगिकोटावुपलक्षणप्रकाराभाननियमात् । प्रकृते च कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेण भाननियमात् । अतएव स्वरूपतो वह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य संभवदुक्तिकता । इत्थमेव चेष्टतावच्छेदकधर्माणामुपलक्षणीभूतेनेष्टतावच्छेदकत्वेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोटचप्रविष्टेनापीष्टतावच्छेदकधर्माणां सर्वसाधारणशक्तिग्रहे भानमुपपद्यत इति । एतेन नियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वस्य विध्यर्थतामते यागादिधर्मिकताद्दशकारणता ग्रहस्य प्रवृत्तिहेतुता वाच्या । तदपेक्षया च स्वर्गादिधर्मिकनियतोत्तरवर्त्तितावच्छेदकधर्मरूपयागादिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे ताद्दशसाध्यताविशिष्टमात्रस्य विध्यर्थत्वे च लाघवम् ताद्दशसाध्यताया निरुक्तसाधनान्तर्गतत्वादितीष्टसाधनत्वस्य विध्यर्थत्वं प्रवर्त्तकत्वं च व्याहन्येत ।

एवं यत्र कारणतावच्छेदकधर्मोप्यनुपस्थितोतिप्रसक्तेन न्यूनवृत्तिना वा धर्मेण कारणमुपलक्षितं तत्र शब्दात्कारणताग्रहानुपपत्तिश्चेति निरस्तम् । व्यापकताघटिततकारणतायाः साध्यतामपेक्ष्यागरीयस्या एवोक्तरीत्या प्रवर्त्तकत्वादिसंभवात् । तादृशसाधनताशरीरेव्यापकतावच्छेदकत्वेनैव कारणतावच्छेदकप्रवेशात्तद्ग्रहे विशिष्य तदुपस्थित्यनुपस्थित्यनुपयोगाच्चेति । विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसम्बन्धः । तथाच वैजात्यस्य सम्बन्धघटकतयैव व्यापकताशरीरे निवेशान्नोपस्थित्यपेक्षा । नवा कारणताविघटकव्यभिचारावकाश इत्याहुः । तदसत् । विजातीयस्वर्गनिरूपितसमवायत्वेन संबन्धतायां मानाभावात् । तादृशसंबन्धघटितव्यापकताया विधिप्रत्ययार्थत्वे तस्य स्वर्गादिनिष्ठवैजात्यभेदेन शक्तिबाहुल्यप्रसङ्गात् तादृशकार्यसंबन्धघटितेष्टकारणतायाश्च प्रमाणान्तरेणाप्रत्यायितत्वात् । तत्र शक्तिग्रहानुपपत्त्या शाब्दबुद्धौ तद्भानानुपपत्तेश्च । नचेष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकारणादिपदार्थे च खण्डशः शक्तिरुपेया । आकाङ्क्षावशाच्चाधिकरणरूपविध्यर्थे विजातीयस्वर्गनिरूपितसमवायस्य संबन्धतया भानात्तादृशकार्यसंबन्धघटितकारणतायाः शाब्दबोधे भानमुपगन्तव्यम् । ननु तादृशसंबन्धान्तर्भावेण शक्तिरिति न काचिदनुपपत्तिरिति वाच्यम् । एवंसति संसर्गतात्पर्यज्ञानानुरोधेन तादृशसंसर्गोपस्थित्यपेक्षाया दुर्वारत्वात् । नच तत्संसर्गेण विशेषणविशिष्टविशेष्यपरत्वज्ञानमेव संसर्गभाननियामकम् तत्रापि च संसर्गः संसर्ग एव नतु विशेषणमिति न ज्ञानापेक्षेति वाच्यम् । विशेषणविशिष्टविशेष्यस्य वाक्यार्थत्वेन पूर्वमनिश्चिततया तत्परत्वग्रहस्य शाब्दबोधात्पूर्वमसंभवात् । तत्तत्संबन्धविषयतानिरूपितविशेषणादिविषयताशालिबोधपरत्वज्ञानस्यैव हेतुतया तत्र संबन्धस्य विशेषणतया तदुपस्थितेरावश्यकत्वात् । एवं विजातीयस्वर्गनिरूपितसमवायसंबन्धेन स्वर्गत्वावच्छेदेन जन्यतोपगमे स्वर्गत्वस्याश्वमेधजन्यत्वसामानाधिकरण्यमात्रमेव हि शब्देनापि प्रतीयते नतु स्वर्गत्वस्य जन्यतावच्छेदकत्वमसामर्थ्यादसंभवाच्चेत्यादिमिश्रग्रन्थविरोधः । यत्तु वैजात्यमेव कार्यतावच्छेदकं तच्च संबन्धविधयैव कारणताघटकं कार्यतावच्छेदकधर्मविशिष्टनिरूपितकार्यतावच्छेदकसंबन्धेन कार्यवन्निष्ठाभावाप्रतियोगित्वस्य कारणताशरीरे निवेश्यत्वादिति । तदप्यसत् । कार्यस्य कार्यतावच्छेदकरूपेणैव निवेशनीयतया तदुपस्थित्यपेक्षाध्रौव्यात् । नच संबन्धसंकोचे प्रमेयत्वेनैव कार्यप्रवेशः संभवतीति वाच्यम् । विजातीयस्वर्गवन्निष्ठाभावप्रतियोगितात्वस्यागुरोरवच्छेदकत्वसंभवे विजातीयस्वर्गीयसमवायसंबन्धेन प्रमेयव-

न्निष्ठाभावप्रतियोगितात्वरूपगुरुधर्मावच्छिन्नाभावाप्रसिद्धेः । एतेन स्वर्गत्वमेव यागजन्यतावच्छेदकमवच्छेदकताघटकसमवायसंबन्धसंकोचे न व्यभिचार इत्यपि निरस्तम् । तादृशसंबन्धविशेषणेष्टतावच्छेदकविशिष्टस्य प्रमाणान्तरावेद्यतया तत्र शक्तिनिश्चयासंभवात् । नहि समभिव्याहृतफलबोधकपदोपस्थाप्यताव-च्छेदकत्वरूपोपलक्षणधर्मेण यथा स्वर्गत्वादीनां शक्तिग्रहे भानं तथो-पलक्षणीभूततादृशपदोपस्थाप्यतावच्छेदकसंबन्धत्वेन विजातीयस्वर्गनिष्ठसमवाया-देरपि तत्र भानसंभवः । स्वर्गपदाच्छुद्धसमवायेनैव स्वर्गत्वविशि-ष्टस्योपस्थितौ विशिष्टसमवायेन स्वर्गत्वविशिष्टस्य स्वर्गपदार्थत्वोपगमे लक्षणाप्रस-ङ्गात्। शुद्धसमवायेन स्वर्गत्वविशिष्टविषयककामनावतोऽनधिकारप्रसङ्गात्॥ मीमां-सकास्तु अहरहः संध्यामुपासीतेत्यादौ नित्यतया निष्फले संध्योपासनादाविष्ट-साधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्टसाधनत्वं लिङर्थः । अथ संध्यावन्दनादेर-प्यर्थवादोपस्थापितब्रह्मलोकावाप्त्यादिफलसाधनत्वमव्याहतम् । यत्र नित्येऽर्थवा-दादपि न फलोपस्थितिस्तत्रापि फलाभावनिश्चायकप्रमाणाभावाद्योग्यतासंशयसं-भवेन फलसाधनत्वप्रत्ययो लिङादितः संभवत्येव । नच तद्बोधो नोपयोगी निष्फलतया ज्ञाते चैत्यवन्दनादौ प्रवृत्तिवारणायेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुता-वश्यकत्वेन नित्यविधेः प्रवृत्तिनिर्वाहाय तस्य फलसाधनताबोधकताया आवश्यक-त्वादिति चेन्न। "संध्यामुपासते ये च सततं संशितव्रताः" इति श्रुतौ सततमिति श्रुतेः संध्यावन्दनादिबाधस्तेन स्वीयसंध्यावन्दने ब्रह्मलोकावाप्तिफलानुपधानस्य निश्चि-ततया अहरहः संध्यावन्दने ब्रह्मलोकावाप्तिसाधनताबोधनेऽपि तस्य संध्यावन्दने प्रवृत्त्यनिर्वाहात् यत्र च नित्ये विशिष्यफलबोधकोऽर्थवादादिर्नास्ति तत्र विधिप्र-त्ययेन इष्टत्वेन फलसाधनताबोधस्य जननेऽपि इच्छाविषयताऽवच्छेदकस्वर्गत्वा-दिरूपविशेषधर्मप्रकारेण फलविषयकतत्साधनताबोधस्यानिर्वाहेण प्रवृत्त्यनिवार्हात्। इष्टसाधनताज्ञानाघटितकारणस्तोमात्मिकायाः संध्यावन्दनाद्यभावगोचरनरकादि सा-धनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्या एव संध्यावन्दनादौ प्रवर्तकताया उपग-

---

लिङर्थइति तत्रमीमांसकानां भट्टपादप्रभृतीनां मते शाब्दी भावनादिः प्राभाकर-मतेच कार्यात्मकोऽपूर्वा इतिप्रागेवप्रदर्शितोऽस्मा भि रतो नेहप्रपञ्च्यते इति शिवम् । (१८५१)

शाकेद्योतकराशुगद्विपसुधारोचिर्मिते हायने
चैत्रश्यामदले दिनेशदिवसे दर्शेऽधिवाराणसि ।
लक्ष्मीनाथ विपश्चिताऽतिरुचिरोग्रन्थप्रसूनाञ्जलिः
पूतः पर्वतपुत्रिकापतिपदे प्रीत्यार्ऽपितोराजताम् ॥ १ ॥

न्तव्यतया नित्यस्थले इष्टसाधनताबोधस्यानुपयोगिताया दुर्वारत्वात्। नच विश्वजिता यजेतेत्यत्र विशिष्टफलाश्रवणेऽपि यथा स्वर्गकामपदस्याध्याहारेण तत्समभिव्याहाराद् विशेषरूपावच्छिन्नस्वर्गसाधनताबोधस्तथा नित्यस्थलेऽपि विशेषधर्मप्रकारकस्वर्गसाधनबोधसंभवात् उक्तप्रवृत्तिसामग्र्यन्तरकल्पनमयुक्तमिति वाच्यम्। बहुवित्तव्ययायाससाध्यविश्वजिद्यागेन तत्तद्ग्रामपश्वादिफलोद्देशेन प्रवृत्त्यनुपपत्तेः, तद्विधेः स्वर्गफलतात्पर्यनिश्चयात्संध्यावन्दनादौ चाल्पायाससाध्ये ग्रामादिफलोद्देशेनापि प्रवृत्त्युपपत्तेः, तद्विधेः स्वर्गपरत्वनिश्चयायोगात्। स्वर्गादिफलकामनारहितैर्मुमुक्षुभिरपि संध्यावन्दनाद्याचरणादुक्तप्रवृत्तिसामग्रीकल्पनस्यावश्यकत्वाच्च। तादृशसामग्रीं विना प्रायश्चित्तादाविष्टासाधने प्रवृत्त्यनिर्वाहाच्च। नच तत्रापि पापध्वंसेष्टसाधनताज्ञानात्प्रवृत्तिर्निर्वहति। सुखदुःखाभावेतरगोचरेच्छायां इष्टसाधनताज्ञानस्य नियमतोऽपेक्षायां निष्फलपापध्वंसस्येष्टत्वासंभवात्। नरकसाधनगोचरद्वेषस्य तद्ध्वंसगोचरेच्छाजनकत्वोपगमेऽस्मत्समीहितायामिष्ठसाधनत्वज्ञानाघटितप्रवृत्तिसामग्र्यामविवादात्। कृतिसाध्यताज्ञानसहितेच्छासामान्यसामग्रीतश्चिकीर्षोत्पत्तेर्निष्फलेऽपि संध्यावन्दनादौ निर्वाहेण प्रवृत्त्युपपत्तेः। नच नरकानुत्पाद एव प्रायश्चित्तस्य संध्यावन्दनादेश्च फलमितीष्टसाधनताज्ञानघटितैव प्रवृत्तिसामग्री नरकद्वेषवतां च तदनुत्पादे नियमत एवेच्छेति तेषां नित्यसंध्यावन्दनाद्यनुष्ठानमुपपद्यते। अन्यैश्च तत्रानुष्ठीयते इति वाच्यम्। नरकानुत्पादस्य तत्प्रागभावात्मकस्य प्रतियोगिविकल्पग्रासेन फलत्वासंभवात्। अत्यन्ताभावस्य प्रतियोगिविरोधितया कदाचित्पापान्तरेण यस्य नरकदुःखं जनितं जनिष्यते वा तदात्मन्यसत्त्वान्नित्यत्वेन चोभयोः फलत्वासंभवात्। योगक्षेमसाधारणसाधनतायाश्च गुरुशरीरत्वेन प्रवृत्त्यनु-

---

निःस्वप्रयोजनजनावनतत्परेण धर्मांसुभारतधरातलनायकेन।
विप्राग्रणीमदनमोहनमालवीय विद्वद्वरेणदययापरिदृश्यमानः॥ २॥

विख्याते मिथिलामहीमधिगते दाथाभिधाने वसन
ग्रामे विश्वविसारिकीर्त्तिलतिके सद्विश्वविद्यालये।
छात्रोनस्मि मुदा प्रभूतविषयायातानहं पाठयन
श्रीकामेश्वरसिंह राजतिलके नीत्याऽवनीं शासति॥ ३॥

इति मैथिलकुलालङ्कारसर्वतन्त्रस्वतन्त्र श्रीवच्चाझा गुरुचरणाम्बुजसेवन लब्धविद्येन काशीस्थहिन्दूविश्वविद्यालये वेदान्ताध्यापकेन श्रीलक्ष्मीनाथझा शर्मणा विरचितो व्युत्पत्तिवादप्रकाशः समाप्तः

साम्बशिवार्पणमस्तु॥

पयोगित्वात् । यदपि मण्डलीं कुर्यादित्यादिवाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमिति तदपि न । मण्डलीकरणादिजन्यतद्ध्वंसादिरूपफलेऽपि कदाचित्कस्यचिदिष्टसाधनताभ्रमेणेच्छोत्पत्त्या मण्डलीकरणादावपीष्टसाधनत्वाबाधेनेष्टसाधनत्वविध्यर्थतामतेऽपि तद्वाक्यप्रामाण्यस्यावश्यकतया इष्टापत्तेः । स्वर्गकाकामो मण्डलीं कुर्यादिति वाक्यजन्यबोधे च स्वर्गकामनाया मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वभानेन तदर्थबाधेन तद्वाक्याप्रामाण्योपपत्तेः । न चेष्टसाधनत्वस्य विधिप्रत्ययार्थत्वानुपगमे स्वर्गकामोयजेतेत्यादिवाक्याद्यागादौ प्रवृत्त्यनुपपत्तिः । तत्राभावगोचरद्वेषघटितसामग्र्यसंभवात् यागाद्यभावस्य नरकादिरूपद्विष्टसाधनत्वाभावात् इष्टसाधनत्वबोधकमानाभावेन तज्ज्ञानघटितसामग्र्या अपि भवन्मते दुर्घटत्वादितिवाच्यम् । इष्टसाधनत्वस्य विध्यर्थताविरहेऽपि स्वर्गसाधनं न स्वर्गकामनाधीनकृतिसाध्यमितीतरबाधबलात्स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्योक्तविधिजन्यबोधे भानाद्यागादाविष्टसाधनताज्ञानादेव प्रवृत्तिनिर्वाहात् । इत्थंच सन्ध्यावन्दनादौ तत्कालावच्छिन्नशौचादिकमेवाधिकारो नतु फलकामनापि । अतः फलकामनाशून्यस्यापि शौचादिमतः सन्ध्यावन्दनाकरणं प्रत्यवायजनकं फलकामनायास्तत्राधिकारत्वे तच्छून्यस्यानधिकारितया तदकरणं न प्रत्यवायमावहेत् । नच मुमुक्षापवादेन स्वर्गादिरूपफलकामनायाः कदाचिदसंभवेऽपि नरकाभावरूपफले नियमत एवेच्छासंभवतीति न शौचादिमतः सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्वानुपपत्तिरिति वाच्यम् । नरकाद्यनुपस्थित्यैव तदभावाज्ञानेन तदिच्छाविरहोपपत्तेरित्याहुः । तदसत् । ध्वंसादेरत्यन्ताभावविरोधितया निष्प्रमाणकतया नरकात्यन्ताभावस्यैव प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसंभवादिष्टसाधनताज्ञानाद्यघटितप्रवृत्तिसामग्र्या असिद्धेः, करणान्तरकल्पनापेक्षया गुरुशरीरक्षेमसाधनताज्ञानस्यैव सर्वत्र प्रवृत्तिहेतुतेति दण्डाद्घट इत्यादिप्रतीतिबलात्स्वरूपसंबन्धविशेषरूपस्य क्षेमसाधारणसाधनत्वस्योपगमे तच्छरीरंगौरवस्याप्यभावाच्चेति नित्यस्थले शौचादिफलकामनयोरुभयोरधिकारत्वेऽपि प्रत्येकमेव तयोरधिकारिता नतु मिलितयोरिति फलकामनाशून्यस्यापि शौचादिमतोऽधिकारितया तस्यापि नित्याकरणं प्रत्यवायजनकम् अथवा सन्ध्यावन्दनाकरणेन प्रत्यवायजनने अधिकारैकदेशशौचादिमत्त्वमेव सहकारि नतु फलकामनापि तदसत्त्वेपि प्रत्यवायोत्पत्तेः सर्वसिद्धत्वात् । एतेन संवलिताधिकारानुपगमे शौचादिशून्यफलकामनावतो दैवान्नित्याकरणं प्रत्यवायं जनयेदिति निरस्तम् । अतएव नित्यकाम्यजयन्तीव्रतादा फलकामनाया

अधिकारत्वस्य सर्वसिद्धतया शौचादिमतः फलकामनारहितस्य तदकरणं प्रत्यवायं जनयतीति ॥ अपरेतु चैत्यंनवन्देतेति वाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम् कृतिसाध्यत्वादिमति चैत्यवन्दनादौ कृतिसाध्यत्वाद्यभावस्य नञा बोधने तद्वाक्यस्याप्रामाण्यापत्तेः । कृतिसाध्यतायाश्च विधित्वं निर्युक्तिकम् । तदनङ्गीकारेऽपि कृतेराख्यातसामान्यार्थतया विधिप्रत्ययस्यापि तदर्थकतया पचेतेत्यादौ कृतेः पाकानुकूलत्वभानस्यावश्यकतयार्थात्पाकादावपि कृतिसाध्यताभानात् कृतिसाध्यताया विधित्वेऽपि तत्तत्कालतत्तत्पुरुषविशेषितकृतिसाध्यताविषयकस्य प्रवर्त्तकज्ञानस्य शाब्दबोधोत्तरमेव स्वीकरणीयतया विधिवाक्यजशाब्दबोधतः साक्षात्प्रवृत्त्यनिर्वाहात्। अस्तु वा साध्यतासंबन्धेनैवाख्यातसामान्यार्थकृतेः क्रियायां विधिप्रत्ययजन्यबोधे भानम् । प्रवर्त्तिका चिकीर्षापि साध्यतासंबन्धेन कृतिप्रकारिका क्रियेच्छैव । नच लडादिस्थले आख्यातार्थकृतेः क्रियाविशेष्यतयैव भानमिति व्युत्पत्तेः वलृप्तत्वात्पचेतेत्यादौ न तस्याः क्रियाविशेषणतया भानसंभव इति वाच्यम् । व्युत्पत्तिवैचित्र्येण तदुपपत्तेः । शक्त्यभेदेपि व्युत्पत्तिभेदे बाधकाभावात् । अतएव प्राचीनैराख्यातार्थस्यैव कृतेः कर्मप्रत्ययस्थले क्रियाविशेषणतया भानमुपेयते एवं क्वचित्पाकादाविव सर्वत्रैव यागपाकादेः लौकिकप्रमाणादेव कृतिसाध्यताबोधो निर्वहतीति वदन्ति । न कलञ्जं भक्षयेदित्यादिनिषेधविधेः प्रामाण्यानुरोधतः बलवदनिष्टाननुबन्धित्वस्य विध्यर्थे प्रवेशः । निषिद्धेऽपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वसत्त्वेन तदभावस्य नञा बोधने प्रामाण्यानुपपत्तेः । बलवदनिष्टाननुबन्धित्वस्य विधित्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्तत्कर्मण्यबाधितो बोध्यत इति तत्प्रामाण्योपपत्तिः । बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भानम् । सोऽपि विशेषणाभावो यतोऽबाधितः कलञ्जभक्षणादौ विशिष्टाभावबोधानन्तरमेव तल्लिङ्गकानुमानगम्यो बलवदनिष्टानुबन्धित्वरूपस्तदननुबन्धित्वाभावः प्रवर्त्तकमिव निवर्तकमपि ज्ञानं श्रुतिवाक्यात्परम्परयैव नतु साक्षात् । एतन्मते च न तादृशाभावस्य शाब्दबोधे भानं पदार्थैकदेशतया इतरविशेषणतयोपस्थितत्वेन नञर्थविशेषणतयाऽनिष्टाननुबन्धित्वान्वयासंभवात्। वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धिताया वाच्यत्वम् । नच बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वस्य विशेष्यत्वे विधिवाक्यतः क्रियाविशेष्यकेष्टसाधनताज्ञानासंभवात् क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं कल्पनीयमिति तदक-

ल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वस्य विशेषणत्वे विनिगमकमिति वाच्यम्। क्रियायां बलवदनिष्टासाधनत्वज्ञानस्यापि तद्गोचरेच्छाहेतुतया बलवदनिष्टासाधनत्वस्येष्टसाधनत्वविशेषणत्वमते क्रियाविशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया मतद्वये कल्पनासाम्यतात्। यदि च बलवदनिष्टसाधनत्वज्ञानमेव द्वेषसामग्रीत्वेनेच्छाप्रतिबन्धकं न तु तदसाधनत्वज्ञानमिच्छाहेतुस्तदोक्तस्य विशेष्यविशेषणभावे विनिगमकस्य संभवेऽपि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यकः। मणिकृतापि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तत्र बलवदनिष्टासाधनत्वस्याभानं लिखितम्। तदभानं विशिष्टशक्तिपक्षे न संभवति। विशिष्टशक्तेर्विशेषणविनिर्मोकेन विशेष्यांशाभासकत्वात्। तत्तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य हेतुत्वात्। अन्यथा विशिष्टस्वर्गादिवाचकस्वर्गादिपदाद्विना लक्षणां केवलं सुखत्वादिप्रकारकशाब्दबोधापत्तेः। यदि च केवलसुखत्वादिना स्वर्गादिरूपसुखबोधो लक्षणामन्तरेण स्वर्गादिपदादिष्यत एव नेष्यते परं सुखान्तरबोधस्तत्र शक्तिविरहादिति शक्यतावच्छेदकतापर्याप्त्यवगाहित्वमनुपयोगीत्युच्यते तदापि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यतायां श्येननिष्ठवैरिवधसाधनत्वस्य बलवदनिष्टसाधनत्वनियतत्वेन तदसाधनत्वविशिष्टत्वेन विधिप्रत्ययावाच्यतया सुतरां तत्र विध्यर्थत्वानिर्वाह एव। यत्तु श्येनस्यादृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलवद्दुःखाजनकत्वमिति मतान्तरम्। तदसत्। तथासति श्येने तात्त्विकप्रवृत्तिवारणाय बलवद्दुःखाप्रयोजकत्वज्ञानस्यैव प्रवृत्तिहेतुताया उपगन्तव्यतया तस्यैव विध्यर्थताया आवश्यकत्वेन श्येने तद्बाधाच्छ्रुतेरप्रामाण्यप्रसङ्गतादवस्थ्यात्। श्येनस्य हिंसात्वविरहेऽपि अभिचारतया नरकजनकत्वस्य दुर्वारत्वाच्च। यत्तु अभिचरन्नित्यस्य वैरिवधगोचरप्रबलकामनाविशिष्टार्थतया तादृशकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयाजनकत्वरूपबलवदनिष्टाननुबन्धित्वघटकद्वेषानुदयात् तादृशकामनाविशिष्टवृत्तिबलवद्द्वेषविषयाजनकत्वं श्रुतिवाक्यात् प्रत्येतव्यं, तच्च श्येनेऽबाधितमेव वैरिवधे उत्कटरागवतस्तज्जन्यनरके बलवद्द्वेषानुत्पत्त्या तादृशनरकस्य वैरिवधोत्कटकामनाविशिष्टवृत्तिद्वेषाविषयत्वात्। न ह्येकदा एकत्राबर्त्तमानयोरेकतरमपरविशिष्टवृत्तीति मिश्राणां मूलाभिप्रायवर्णनं तदपि न बलवद्द्वेषविषयदुःखजनकत्वत्वप्रतियोगिकाभावस्यातिप्रसक्ततया बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावस्य वाच्यतास्वीकारे पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वा-

भावस्य प्रत्ययासंभवात् तादृशदुःखजनकत्वे अभावे च खण्डशक्तिस्वीकारे विशिष्ट-शक्तिस्वीकारपरित्यागात् । एवं यत्रोत्कटरागो यदा तत्रैव नोत्कटद्वेषस्तदा तज्जन्ये फले उत्कटरागदशायां च तज्जन्यदुःखरूपफलान्तरे उत्कटद्वेषे न किंचिद्बाधकमिति वैरिवधे उत्कटरागदशायां च श्येनजन्यनरके बलवद्द्वेषो दुरपवाद एव अस्तु वा फल-विशेषोत्कटरागघटिता उपायगोचरोत्कटरागसामग्री तत्रैव तज्जन्यतया ज्ञाते सति फलान्तरेष्युत्कटद्वेषविरोधिनी तथापि नरकवैरिवधयोरेकतरं प्रति श्येनस्य हेतुत्वा-ग्रहदशायां तयोर्बलवद्द्वेषरागयोर्युगपत्संभव एव । यत्तु दीक्षाङ्गपशुघातस्य नरकासाधनतया मा हिंस्यादित्यत्रावैधहिंसैव विवक्षितेति श्येनस्य नरकासाधन-त्वोपपादनं, तदपि न । तावतापि अभिचारविधया तथात्वस्य दुर्वारत्वात् । अथ खण्डशक्तिमवलम्ब्यानिष्टासाधनत्वविनिर्मोकेन क्वचिद्विधिबोधोपगमे श्वेतं छागमालभेतेत्यादावपि तत्परित्यागसंभवात् अविरोधेन मा हिंस्यादित्यत्र श्रुत्यर्थसंकोचो न स्यादिति सांख्यमतमेव साधीय इति चेत्स्यादेव अविरोधेऽपि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्रेव सामान्यविधेर्विशेषेतरपरत्वं व्यु-त्पत्तिसिद्धमिति मा हिंस्यादित्यत्र संकोचः । अथ वा कथंचिद्बाधकापनयसंभवेनौ-त्सर्गिकार्थपरित्याग इति हिंसानिषेधसंकोचेनैवोपपत्तौ न श्वेतं छागमालभेतेत्यादौ विधिप्रत्ययस्य बलवदनिष्टासाधनत्वार्थपरित्याग इत्यर्थः । अथ यागपाकादिजन्य-श्रमादावपि कदाचित्कस्यचिद्बलवद्द्वेषोदयात् यजेत पचेतेत्यादौ अप्रामाण्यप्रसङ्गो दुर्वारः । यत्तु बलवदनिष्टासाधनत्वं न लौकिकविध्यर्थः । किं तु न कलञ्जमि-त्यादिश्रुतेः प्रामाण्योपपत्तये वैदिकलिङ्ग्येव तदर्थकता तत्रापि बलवदनिष्टं नरकमेव ताद्रूप्येणार्थः । अत इष्टोत्पत्तिनान्तरीयकश्रमादेः कदाचित् द्वेषविषयतया न यागा-दौ विध्यर्थबाध इति तदपि न, शाकं न भुञ्जीतेत्यादिवैद्यकवाक्ये बलवदनिष्टाज-नकत्वनिषेधपरत्वं विना प्रामाण्यानुपपत्तेः तत्रापि रोगाजनकत्वं विध्यर्थस्तदभावो नञा बोध्यतइति चेद् रिक्तायां न गच्छेत् पुष्ये नोद्वहेदित्यादिज्योतिःशास्त्रवचन-स्य नैकः पर्वतमारोहेदित्यादिवाक्यस्य च का गतिः । तत्रापि विशिष्य तत्तदनि-ष्टासाधनत्वस्य विधिप्रत्ययार्थत्वे शक्त्यानन्त्यप्रसङ्गो व्युत्पत्त्यनुपपत्तिश्च । अत्र वद-न्ति द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगि-ताकाभावकूटे तादृशाभावत्वेनानुगते एकैव विधिप्रत्ययस्य शक्तिः उपलक्षणीभूत-द्वेषविषयतावच्छेदकत्वं परित्यज्य नरकाद्यसाधनत्वं प्रतीयते क्वचिन्नरकासाधनत्वं क्वचिद्रोगासाधनत्वं प्रतीयतइत्यत्र तात्पर्यमेव नियामकं प्रतियोगितायाः प्रकार-

तया भानात् प्रतियोगितावच्छेदकघटकनरकत्वादौ द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया शक्तिग्रहे भानमविरुद्धम् । नच प्रमेयत्वादेरपि उपलक्षणतया भानमविरुद्धमिति प्रमेयत्वादेरुपलक्षणतया नरकत्वाद्यनुगमकत्वं कथं न स्वीक्रियते विनिगमकाभावादिति वाच्यम् । सुखाद्यसाधनत्वस्य विध्यर्थताविरहेण प्रमेयत्वादेः सुखत्वादिसाधारण्येनोक्तरूपस्येत्यस्यैव विनिगमकत्वात् । नच तात्पर्याभावात् सुखाद्यसाधनत्वबोधकत्वोपपत्तौ विध्यर्थत्वेऽपि क्षतिविरह इति वाच्यम् । तस्य विध्यर्थत्वेन तत्तात्पर्येणाधुनिकानां न भुञ्जीतेत्यादिप्रयोगापत्तेः ॥

॥ इति महामहोपाध्यायगदाधरभट्टाचार्यकृतो व्युत्पत्तिवादः समाप्तः ॥ शुभं भवतु ॥

(शाब्दबोधेचेति) शाब्दबोधश्च शब्दादमुमर्थंप्रत्येमीति प्रतितीसिद्धानुभवत्वसाक्षाद्व्याप्यशाब्दत्वजात्याश्रयः प्रत्यक्षादिभ्यो विलक्षणएव। नन्वस्तु विदितपदतदर्थसंगतीनां समधिगतशाब्दन्यायतत्त्वानामाकाङ्क्षासन्निधियोग्यताद्यनुसन्धानवतां निःप्रत्यूहं संसर्गबोधोदयः सिद्ध्यतुच पदज्ञानजन्यतावच्छेदकतया शाब्दत्वं जातिरपि परन्तु तत्रानुमितित्वव्याप्यत्वं किमिति नोपेयते तथासति हि समानविषयकशाब्दबोधंप्रति प्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वस्याकल्पनाल्लाघवम् समानविषयकानुमितित्वावच्छिन्नंप्रति प्रत्यक्षसामग्र्याः कॢप्तप्रतिबन्धकतयैव निर्वाहात् सतिचैवमेकस्यामेव व्यक्तौ शाब्दत्वानुमितित्वयोः परापरभावापन्नयोः समावेशात् समानविषयकशाब्दत्वावच्छिन्नं प्रत्यनुमितिसाग्रीत्वेन प्रतिबन्धकत्वान्तरमपि न कल्पनीयमिति महल्लाघवम्। अथ शाब्दबोधस्यानुमितित्वोपगमे व्याप्तिज्ञानाद्यखिलानुमितिकारणघटिताकाङ्क्षाज्ञानादिघटिताच शाब्दसामग्रीवाच्या तथाच विभिन्नविषयकप्रत्यक्षंप्रति शाब्दसामग्रीत्वेन या प्रतिबन्धकता तदवच्छेदककोटौ व्याप्तिज्ञानादीनामपि प्रवेशेन सामग्रीत्वस्यैकविशिष्टापरत्वरूपत्वे तेषां विशेष्यविशेषणभावे विनिगमनाविरहेण च विपरीतमेव गौरवमितिचेन्नैवम्। यथाहि अनुमितिसामग्र्या लिङ्गभेदेनान्वयव्यतिरेकव्याप्तिभेदेन च भिन्नतया तद्घटककारणानां व्याप्तिज्ञानादीनामेकरूपेण कारणताविरहेण परस्परजन्यानुमितौ व्यभिचारस्तद्वारणाय तत्तदव्यवहितोत्तरत्वमात्रस्य कार्यतावच्छेदककोटौ प्रवेशेऽपीष्टतावच्छेदकावच्छिन्न साधनतादिज्ञानस्य प्रवृत्त्याद्युपयोगित्वेन वह्निमत्पर्वतादिविषयकानुमितित्वेन प्रयोजनत्वादिप्रतिसन्धाने तदवच्छिन्नसाधनतादिज्ञानस्यैवापेक्षिततयाऽनुमितित्वादीनां कार्यतानवच्छेदकत्वे उत्कृष्टसाधनतादिज्ञानासम्भवात्तदर्थमवयववाक्यप्रयोगो नोपपद्येत अतःकारणवैजात्येऽपिसर्वेषुतथाविधज्ञानेष्वनुमितित्वमनुभवबलादास्थीयते यथावाऽनुमितित्वावच्छिन्नं प्रत्यभावज्ञानत्वेनसामान्यकार्यकारणभावमतिप्रसङ्गभङ्गाय विशेषसामग्र्याः सहकारित्वञ्चोपेत्य व्याप्तिमात्रस्याभावघटितत्वेन तज्ज्ञानस्य सर्वत्रानुमितिस्थलेसम्भवात् सर्वास्वनुमितिव्यक्तिष्वनुमितित्वमुरीक्रियते तथा तत्तदाकाङ्क्षाज्ञानाद्यवहितोत्तरत्वस्य कार्यतावच्छेदकतया प्रवेशेऽपि प्रवृत्त्युपपत्तये विषयविशेषमनुमितित्वञ्च प्रवेश्य व्याप्तिज्ञानाद्यघटितयाऽऽकाङ्क्षाज्ञानादिघटितकॢप्तसामग्र्यैव शाब्दात्मकानुमित्युत्पत्तिसम्भवात्। अपिचाकाङ्क्षायापकपदाव्यवहितोत्तरापरपदत्वरूपतयाऽव्यवहितोत्तरत्वस्यच तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तत्क्षणध्वंसाधिकरणत्वरूपतयाऽभावघटितत्वेनाकाङ्क्षाज्ञानस्याभावविषयकत्वेनानुमितिसामान्यकारणस्यापि शाब्दस्थले सत्त्वेन तत्रैवचाकाङ्क्षाज्ञानादिविशेषसामग्रीसहकारित्वोपगमेन व्याप्तिज्ञानाद्यजन्यत्वेऽपि शाब्दबोधस्यानुमितित्वसम्भवात् प्रतिबन्धकतावच्छेदककोटौ व्याप्तिज्ञानादेरधिकस्याप्रवेशेन लाघवस्यानपायादितिचेन्न। एवमेव विनिगमनाविरहेणानुमितेरपि शाब्देऽन्तर्भावयितुं शक्यत्वात् अनुमितेरपि शाब्दत्वोपगमे समानविषयकानुमितित्वावच्छिन्नं प्रति प्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वं न

कल्पनीयम् समानविषयकशाब्दत्वावच्छिन्नं प्रति प्रत्यक्षसामग्रीत्वेन क्लृप्तप्रतिबन्धकतयैव निर्वाहात् नापि समानविषयकशाब्दत्वावच्छिन्नं प्रत्यनुमितिसामग्रीत्वेन प्रतिबन्धकत्वं कल्पनीयमेकस्मिन्नेव ज्ञाने उभयधर्मवत्त्वस्योभयसामग्रीजन्यत्वस्य चोपगमेनानुपपत्तिविरहात् । नच पदज्ञानादिकं विनाऽनुमित्यनुपपत्तिः विभिन्नविषयकप्रत्यक्षंप्रति यानुमिति सामग्रीनिष्ठप्रतिबन्धकता तदवच्छेदककोटावाकाङ्क्षाज्ञानादेरपि प्रवेशेन महागौरवञ्चेतिवाच्यम् शाब्दसामान्ये ज्ञानत्वेनकारणतां विशेषसामग्रयाः सहकारितां चोपगम्य आकाङ्क्षाज्ञानाद्यघटिता अनुमितिकारणत्वेन सम्प्रतिपन्नव्याप्त्यादिज्ञानादिना घटितैवानुमित्यात्मकशाब्दसामग्रीवाच्या केवलशाब्दसामग्रीचाकाङ्क्षाज्ञानादिघटितैववाच्येत्यस्यापि वक्तुंशक्यतया पूर्ववत् सर्वदोषपरिहारस्य तुल्यत्वात् । नन्वनुमितेः शाब्दत्वे शाब्दयामीत्यनुभवापत्तिरितिचेत् शाब्दस्याप्यनुमितित्वेऽनुमिनोमीत्यनुभवापत्तिस्तुल्यैव शाब्दान्यानुमितिरेवानुमिनोमीत्यनुव्यवसायहेतुरितिचेत् अनुमित्यन्यशाब्दएव शाब्दयामीत्यनुव्यवसायहेतुरित्यपि तुल्यमेव । व्याप्तिज्ञानादिकार्यतावच्छेदककोटौ शाब्दत्वाप्रवेशादनुमितौ शाब्दत्वासम्भव इतिचेदाकाङ्क्षाज्ञानादिकार्यतावच्छेदककोटावप्यनुमितित्वाप्रवेशाच्छाब्दस्यानुमितित्वासम्भव इत्यपिसमानम्। यदिच नशाब्दयामीत्यनुभवान्नानुमितेःशाब्दत्वं तदा नानुमिनोमीत्यनुभवान्न शाब्दमतेरनुमितित्वमित्यपि सुवचं तस्मान्न शाब्दमतिरनुमितिर्नवा अनुमितिः शाब्दमतिः नवा शाब्दत्वानुमितित्वे परापरभावमापद्येनेइति॥ अथैवमपि प्रत्यक्षत्वमेव शाब्दे कुतो नोपेयते लौकिकसन्निकर्षाभावेऽपि ज्ञानलक्षणप्रत्यासत्तेःसम्भवात् शाब्दमात्रे पदार्थोपस्थितेःतदात्मिकायाःसत्त्वात् ।नच ज्ञानलक्षणा स्वविषयविषयकमेव प्रत्यक्षं जनयतीतिशाब्दमतावपूर्वव्यक्तिभान मनयाऽशक्यमिति वाच्यम् नीलत्वादिज्ञानरूपया सामान्यलक्षणप्रत्यासत्त्याऽपूर्वस्यापिभानोपपत्तेः।सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारपक्षे न प्रत्यक्षत्वसंभवइतिचेत् सन्निकर्षाजन्यत्वेऽपीश्वरज्ञानस्येवशाब्दबोधस्यापि प्रत्यक्षत्व सम्भवात् ज्ञानाकरणकज्ञानत्वं तत्र तत्प्रयोजकं शाब्दमतौ तु पदज्ञानकरणकत्वान्न प्रत्यक्षत्वसंभवइतिचेत् ज्ञानसामान्ये मनसः करणत्वपक्षे पदज्ञानादेरकरणत्वाच्छाब्दमतेरपि ज्ञानाकरणकत्वेन प्रत्यक्षत्वं दुरपह्नवम् । शाब्दबुद्धौ प्रत्यक्षत्वोपगमे चाक्षुषत्वादिजात्या शाब्दत्वे साङ्कर्यप्रसङ्गइतिचेचाक्षुषत्वादिव्यावृत्तव्यक्तिष्वेव शाब्दत्वस्य स्वीकारे तदसम्भवात् । मानसत्वेन साङ्कर्यमितिचेत् मानसत्वव्याप्यत्वस्यैव शाब्दत्वेस्वीकारेतदसम्भवात् ॥ अतएव न शाब्दयामीत्यनुभवानुपपत्तिः शाब्दबोधस्यातिरिक्तत्वपक्षइवैतत्पक्षेऽपि तावतीष्वेवव्यक्तिषु शाब्दत्वजातेः स्वीकारात् । नच नीलोघट इत्यादिवाक्यजन्यबोधानन्तरं नीलंघटं साक्षात्करोमीत्यनुभवापत्तिः यदंशे लौकिकः सन्निकर्षस्तदंशएव साक्षात्करोमीत्यनुभवस्य स्वीकृतत्वात् । नच लौकिकसन्निकर्षाभावेऽपि मण्डूकवसाञ्जनरञ्जितनयनस्यपुंसो वंशोरगविभ्रमोत्तरमुरगंसाक्षात्करोमीत्यनुभवानुपपत्तिस्तत्रोरगस्यालौकिकया ज्ञानलक्षणप्रत्यासत्याभानादिति वाच्यम् लौकिकसन्निकर्षस्थलइव दोषविशेषजन्यविभ्रमस्थलेऽपि साक्षात्करोमीत्य

नुभवस्योपगतत्वादिति ॥ शाब्दत्वजातिंशाब्दबोधं तत्कारणाकाङ्क्षाज्ञानादिकञ्चोपगच्छतः शाब्दमतौ प्रत्यक्षत्वमभ्युपगच्छतस्तवैव किलाघवमितिचेत् अस्तितत्तथाहि विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वं सर्वेषादिनामविप्रतिपन्नम् तत्रास्माभिर्लाघवान्वेषिभिरनुमितेरप्युक्तयुक्तिनिवहेनानुमितित्वव्यापकंमानसत्वमेवोररीकरणीयम् तथाच विशिष्टवैशिष्ट्यावगाहिस्मृतेर्विशेषणतावच्छेदकप्रकारकज्ञानविरहेऽपि जायमानतया तत्साधारणं विशिष्टवैशिष्ट्यावगाहिबुद्धित्वं नकार्यतावच्छेदकं किन्तु तादृशप्रत्यक्षत्वमेवतथाच शाब्दानुमित्योः प्रत्यक्षत्वानभ्युपगमे तथाविधशाब्दत्वावच्छिन्नंप्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य पृथक् कारणत्वं कल्पनीयमेवंतथाविधानुमितित्वावच्छिन्नंप्रत्यपीति गौरवम् ।स्मृत्यन्यविशिष्टवैशिष्ट्यावगाहिज्ञानत्वस्य कार्यतावच्छेदकत्वे तथाविधानेककार्यकारणभावाकल्पनेऽपिस्मृत्यन्यत्वतथाविधज्ञानत्वयोः परस्परविशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकार्यताद्वयापत्तिः । यदिच विशिष्टवैशिष्ट्यावगाह्यनुभवत्वमेव कार्यतावच्छेदकमभ्युपगम्यं तावतैव स्मृतेर्वारणं शाब्दबोधादेः संग्रहश्चेत्युच्यतेतदापि प्रत्यक्षत्वातिरिक्तानुभवत्वजातौ प्रमाणाभावेनास्मदिष्टसिद्धिरिति चेदत्रास्मद्गुरुचरणाः विभिन्नविषयप्रत्यक्षंप्रतिशाब्दसामग्र्याःअनुमितिसामग्र्याश्च प्रतिबन्धकतयाऽन्वयबुद्ध्यादेः प्रत्यक्षत्वोपगमे नीलोघटइतिशाब्दसामग्र्यां पीतः पटइति शाब्दसामग्र्याश्चसत्यां समूहालम्बनशाब्दबोधानुपपत्तिः नीलघटविषयकशाब्दसामग्र्याः पीतपटात्मकविभिन्नविषयकशाब्दरूप प्रत्यक्षंप्रति प्रतिबन्धकत्वात् पीतपटशाब्दसामग्र्याः नीलघटशाब्दात्मकप्रत्यक्षप्रतिबन्धकत्वाच्चेति । एवमेवचानुमितेरपि समूहालम्बनत्वानुपपत्तिरूह्या ॥ यदिच शाब्दभिन्नविभिन्नविषयकप्रत्यक्षत्वं प्रतिबध्यतावच्छेदकमेवमनुमितिभिन्नविभिन्नविषयकप्रत्यक्षत्वं प्रतिबध्यतावच्छेदकमित्युच्यते तदा शाब्दभिन्नत्वादेर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानेकप्रतिबध्यतापत्तिरित्यवधेयम् ॥

( विशेष्यवाचकपदोत्तरविभक्तितात्पर्येत्यादि ) अत्र विशेष्यवाचकपदोत्तर तात्पर्यविषयेत्युक्तौ विवक्षितसौन्दर्य्यगतैकत्वके सुन्दरंदधि वहवोगुणा इत्यादौ विशेष्यवाचकदधिपदोत्तरबहुपदतात्पर्यविषयबहुत्वसंख्याविरुद्धैकत्वसंख्यायाः सुन्दरपदोत्तरानुसन्धीयमानविभक्त्या अविवक्षितत्वविरहात् समानवचनत्वानुपपत्तिः नच समानवचनत्वस्योक्ताविवक्षितत्वव्यापकतया उक्ताविवक्षितत्वविरहेऽपि तत्सत्त्वे बाधकाभावइतिवाच्यम् समानवचनत्वस्य प्रयोजकान्तराभावेन उक्ताविवक्षितत्वएवहि तत्प्रयोजकताया वाच्यतया उक्ताविवक्षितत्वसमानवचनत्वयोः समव्यापकत्वस्यैष्टव्यत्वेनानुपपत्तिसम्भवात् । नन्वेवमपि विशेष्यवाचकपदोत्तरत्वेमानुसन्धीयमानत्वस्यैवाश्रूयमाणविभक्तिस्थलानुरोधेन वाच्यतया विभक्तित्वेनाप्रवेशेऽपि प्रकृते बहुपदस्येव सुविभक्तेरपि तथानुसन्धीयमानतया तत्तात्पर्यविषयैकत्वविरुद्धत्वस्यैकत्वेऽसम्भवान्नानुपपत्तिरिति विभक्ति-

त्वेनप्रवेशोऽव्यर्थइतिचेन्न प्रमाणंवेदशाखावाच्यंघटे इत्यत्रैकत्वार्थकवाच्यपदपूर्ववर्त्तिवहुवचनान्तशाखापदघटिते वाक्येऽसमानवचनत्वानुपपत्तेः विशेष्यवाचकवेदशाखापदोत्तरत्वेनानुसन्धीयमानवाच्यपदतात्पर्यविषयैकत्वसंख्याविरुद्धसंख्याया विशेषणवाचकप्रमाणपदेनाविवक्षितत्वादिति । यथाश्रुते स्तोकंपचत इत्यादौ विशेष्यवाचकपच्पदोत्तरविभक्तितात्पर्यविषयद्वित्वविरुद्धैकत्वस्याविवक्षितत्वात् समानवचनत्वापत्तिरतो विशेष्यवाचकप्रातिपदिकोत्तरेत्यस्य विशेष्यवाचकपदोत्तरसुप्तात्पर्येत्यस्य वा प्रवेशस्यावश्यकत्वे लाघवात् सुप्त्वेनैवप्रवेशोयुक्त एवञ्च विभक्तित्वेन प्रवेशएवनास्तीति कुत्र कैमर्थ्यशंकेत्यपि कश्चिदाहुः ॥ यत्र बहुत्वान्वयतात्पर्येण बहुवचने प्रयोक्तव्ये दोषवशादेकवचनंप्रयुक्तं तत्र वेदः प्रमाणमित्यादौ समानवचनत्वप्रयुक्तमसाधुत्वमुपपद्यन्ति विशेषदर्शिनः तच्च विभक्त्यर्थत्वेन संख्यायाःप्रवेशो नोपपद्येत विशेष्यवाचकवेदपदोत्तरविभक्त्यर्थसंख्याविरुद्धसंख्याया अविवक्षितत्वस्य समानवचनत्वप्रयोजकस्य सत्त्वात् अतोविभक्तितात्पर्यविषयेत्युक्तम् तथाच तथाविधतात्पर्यविषयवहुत्वविरुद्धैकत्वस्य विवक्षितत्वादसाधुत्वमुपपद्यत इति । अत्र निरुक्तविषयत्वेनैव संख्यायाः प्रवेशो आधेयत्वस्याधेयरूपत्वपक्षे प्रमाणेवेदेषुद्वित्वान्यप्रमेयमित्यादौ सप्तम्यर्थाधेयत्वस्य द्वित्वान्यप्रमेयनिष्ठस्य तत्स्वरूपतया वेदपदोत्तरविभक्तितात्पर्यविषयीयआधेयत्वरूप द्वित्वान्यप्रमेयस्तद्विरुद्धत्वस्य तद्भिन्नत्वपर्यवसितस्यैकत्वेऽभावात् समानवचनत्वापत्तिरतः संख्यात्वेन प्रवेशःकृतः तथाच निरुक्तविभक्तितात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नत्वस्य विरुद्धत्वान्तार्थस्यैकत्वे सत्त्वान्नानुपपत्तिः । विशेषणविभक्तेरभेदार्थकत्वमते नीलोघटइत्यादौ घटपदोत्तरस्वार्थैकत्वभिन्नस्याभेदस्य विवक्षितत्वात्समानवचनत्वानुपपत्तिरतः संख्याविरुद्धसंख्यापर्यन्तानुधावनम् । विशेषणवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्त्याऽविवक्षितत्वमित्यत्र विभक्तित्वेनाप्रवेशो प्रकृष्टामितिर्यस्मादिति विग्रहनिष्पन्न प्रमाणार्थकप्रमितिपदघटित 'वेदवाक्यंप्रमितिवहवोघटा' इत्यादिवाक्ये समानवचनत्वानुपपत्तिः प्रमितिपदोत्तरत्वेनानुसन्धीयमानत्वस्य विभक्तेरिव वहुपदस्यापि सत्त्वात् तेन वेदवाक्यपदोत्तरस्वार्थैकत्वविरुद्धवहुत्वस्य विवक्षितत्वात् समानवचनत्वप्रयोजकाभावात् ॥ यत्र विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोः समानवचनत्वमित्युक्तौ विवक्षितैकत्वार्थकैकवचनान्तविशेषणपदघटिते वेदत्वगतैकत्वान्वयतात्पर्येण प्रयुक्ते वेदः प्रमाणमितिवाक्ये समानवचनत्वानुपपत्तिः प्रमाणपदोत्तरविभक्त्यैकत्वस्य विवक्षितत्वादतोविरुद्धान्तोपादानमिति । किञ्च प्रमाणगतवहुत्वस्य विवक्षादरेऽपि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्येव साधु नतु प्रत्यक्षानुमानोपमानशब्दाः प्रमाणमिति तत्र विशेषणवाचकपदोत्तरविभक्त्या संख्याया विवक्षितत्वेनोक्तसमानवचनत्वप्रयोजकाभावेन प्रयोजकान्तरस्यासत्त्वेन च तथाविधशब्दाः प्रमाणमित्यपि स्यात् विरुद्धान्तोपादाने च वहुत्वस्य वहुत्वविरुद्धत्वाभावान्न दोष इत्यवधेयम् ॥ अथैवमपि स्तोकम्पचतइत्यादौ विशेषणवाचक-

स्तोकपदोत्तरविभक्त्या संख्याया अविवक्षणाद्विशेष्यवाचकपदस्य द्विचनान्ततानुपपत्तिरितिचेन्न विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयविशेष्यान्वयिसंख्याविरुद्धेत्यादेर्नियमशरीरघटकत्वात् प्रकृते च द्वित्वस्य पाककर्त्तर्यन्वयो नतुपाकेऽतोनदोषइति विशेष्यवाचकपदोत्तरविभक्तेः सुप्त्वेनप्रवेशेत्वेतच्छंकैव नोन्मिषतीत्यपि बोध्यम् ॥ नन्वेवमपि स्तोकंपाकावित्यादावापत्तिर्नवारितेतिचेदत्रब्रूमः विशेषणवाचकपदं क्रियाविशेषणवाचकातिरिक्तत्वेनविशेषणीयं तच्च क्रियाविशिष्टान्यत्वम् वैशिष्ट्यञ्च स्वनिष्ठविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वमिति तावतैव स्तोकंपचतः स्तोकंपाकौस्तोकंपचावित्यादावनुपपत्तिपरिहारइति ॥ ननु शोभनारामदारा इत्यत्र विशेष्यवाचकदारपदोत्तरविभक्तितात्पर्यविषयसंख्याया अप्रसिद्धत्वात् समानवचनत्वानुपपत्तिरितिचेन्न स्वतात्पर्यविषयतावच्छेदक संख्यात्वव्याप्यधर्मावच्छिन्नभिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकविशेष्यवाचकपदोत्तरविभक्त्यभाववत्संख्याविवक्षाविषयत्वाभावस्य वाच्यतयोक्तसम्बन्धस्यात्र दारपदोत्तरविभक्तेर्व्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य केवलान्वयित्वादिति ॥ अथ मैथिलीरामदारा इत्यत्र विशेष्यवाचकमैथिलीपदोत्तरसुतात्पर्यविषयैकत्वभिन्नसंख्याया विशेषणवाचकदारपदोत्तरविभक्त्या अविवक्षणात् समानवचनत्वापत्तिरितिचेन्न उक्तनियमशरीरेऽसतिबाधके इत्यस्यापि वक्तव्यतया दाराःपुंसिचभूम्न्येवेत्यनुशासनस्य बाधकस्य सत्वात्। तथाच नियतवचनकान्यत्वविशिष्टनिरुक्तविवक्षाविषयत्वाभावः समानवचनत्वप्रयोजक इतिपर्यवसितम् नियतवचनकत्वञ्च धर्मविशिष्टत्वम् वैशिष्ट्यञ्च स्वावच्छिन्नपरत्व स्वविशिष्टशाब्दजनकतावच्छेदकविभक्तिनिष्ठविषयतानिरूपिताव्यवहितोत्तरत्वसबन्धावच्छिन्नविषयतावच्छेदकानुपूर्वीमत्वोभयसम्बन्धेन विभक्तिनिष्ठविषयतायां वैशिष्ट्यञ्च स्वाभाववत्त्वसम्बन्धेन स्वाभावश्च स्वावच्छिन्नविषयतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविषयतावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकः विषयतावत्त्वञ्च स्वसमानाधिकरणसुब्विभाजकधर्मसामानाधिकरण्य स्वावच्छेदकानवच्छिन्नत्व स्वनिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नविषयतावच्छेकावच्छिन्नविषयतानिरूपितत्वैतत्रितयसम्बन्धेन घटादिपदोत्तरविभक्तौच न घटत्वविशिष्टत्वमतोन घटादिपदस्य नियतवचनकत्वम् तथाहि घटत्वावच्छिन्नविषयतानिरूपित संख्यानिष्ठप्रकारताप्रयोजिका यासुनिष्ठविषयता तत्समानाधिकरणप्रथमात्वसमानाधिकरणत्वस्य तदवच्छेदकानवच्छिन्नत्वस्य तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नघटपदत्वावच्छिन्नविषयतानिरूपितत्वस्य च औनिष्ठविषयतायां सत्वादेवमन्यत्राप्यूहनीयम् । तत्र वैशिष्ट्यघटकप्रथमसम्बन्धानुपादाने स्त्रीत्वरूपधर्ममादाय तद्वैशिष्ट्यस्य दारसदृशाचरणकर्त्रर्थकाचारक्विबन्तनिष्पन्नदारपदोत्तरस्वादि विभक्तिनिष्ठविषयतायामपि सत्वेन तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकानुपूर्वीमत्त्वस्य तस्मिन्ननियतवचनकेऽपिदारपदे सत्वादतस्तदुपादानम् तथाहि स्त्रीत्वावच्छिन्नविषयतानिरूपितसं-

ख्यानिष्ठप्रकारताप्रयोजकविषयत्वस्य बहुव्रीसत्त्वतात्पर्येण प्रयुक्तायां विवक्षितसंख्याकदारपदोत्तरजसादिविभक्तौ सत्त्वेन तद्वत्त्वस्य अनियतवचनकदारपदोत्तरस्वादिविभक्तावपि सत्त्वात् । अनियतवचनकशब्दमात्रेऽतिप्रसङ्गवारणाय द्वितीयसम्बन्धनिवेशः । दारपदोत्तरजसादिविषयतायां स्त्रीत्वावच्छिन्नविषयतानिरूपितसंख्यानिष्ठविषयताप्रयोजकशसादिनिष्ठविषयतावत्त्वस्य वारणाय त्रितयसम्बन्धघटकप्रथमोपादानम । एवमेव दारपदोत्तरजसविषयतायां जसविषयतावत्त्वस्य वारणाय द्वितीयोपादानम् । स्त्रीत्वावच्छिन्नविषयतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकङयादिपदोत्तरस्वादिनिष्ठविषयतावत्त्वस्य वारणाय तृतीयस्योपादानमिति अधिकं गूढार्थतत्त्वालोकेऽन्वेष्टव्यम् ॥

प. ९ पत्रे नवमपंक्तौ अधिकंतुगूढार्थतत्त्वालोके इत्यतःप्राक् । अथैवमपि शोभनः पशुरित्यत्र शोभनपदजन्योपस्थितेः स्वीयमुख्यविशेष्यतासम्बन्धेन शोभनमात्रवर्त्तिन्या लोमलाङ्गूलादावपि सत्त्वात्तत्रापि शोभनपदार्थान्वयप्रसङ्गः । नच सकृदुच्चरितः शब्दः सकृदेवार्थंगमयतीतिन्यायात्पशावन्वितस्य तस्य न लोमादावन्वयः सम्भवतीतिवाच्यम् लोमादावेव तदन्वयोऽस्तु न पशावित्यस्यापि वक्तुंशक्यत्वात् लोमादौ विभक्त्यर्थसंख्यान्वयप्रसङ्गस्य बाधकाभावाच्चेतिचेन्न विशेष्यताविशिष्टविशेष्यतात्वसम्बन्धेन शाब्दबुद्धौ स्वीयमुख्यविशेष्यताप्रयोज्यत्वसम्बन्धेनोपस्थितेः कारणत्वस्य विवक्षितत्वात् वैशिष्ट्यश्च स्वतादात्म्य स्वप्रयोजकवृत्तिज्ञानीयविषयताविशिष्टविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानिरूपितविषयताविशिष्टत्वोभयसम्बन्धेन एतद्वैशिष्ट्यद्वयं स्वातादात्म्य स्वावच्छेद्यत्वान्यतरसम्बन्धेन अस्तिच नीलोघटइत्यादौ घटत्वावच्छिन्नविशेष्यतायां स्वप्रयोजकवृत्तिज्ञानीयविषयत्वाभिन्नविषयतानिरूपितघटत्वनिष्ठविषयत्वाप्रयोज्यनीलत्वावच्छिन्नविषयतानिरूपितायां स्वतादात्म्यमित्युक्तप्रयोजकोपपत्तिः अत्र विषयताविविष्टेत्यस्यानुक्तौ लाङ्गूलत्वप्रकारतानिरूपितलाङ्गूलनिष्ठविशेष्यतायामपि स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितलाङ्गूलत्वनिष्ठविषयत्वाप्रयोज्यलोमनिष्ठविषयतानिरूपितलाङ्गूलत्वावच्छिन्नविषयतावच्छेद्यत्वस्य सत्त्वात् तत्र निरुक्तसम्बधेनोपस्थित्यभावाद्व्यतिरेकव्यभिचारः स्यादतस्तदुपात्तम् तथा सति लाङ्गूलनिष्ठायाः लाङ्गूलत्वनिष्ठप्रकारतानिरूपितायाविशेष्यतायाः स्वस्यां तादात्म्यस्येव लोमनिष्ठप्रकारतानिरूपितायां स्वावच्छेद्यत्वस्य सत्त्वेन लाङ्गूलनिष्ठविशेष्यताद्वयस्याप्युक्तविशिष्टतया तन्निरूपिता या लाङ्गूलत्वनिष्ठा याच लोमनिष्ठा विषयता तदप्रयोज्यविषयतापदेन घटादिविषयतायाएवग्राह्यतया तन्निरूपितविषयताविशिष्टत्वस्य तत्राभावान्न व्यभिचार इति ॥ ॥

स्वसमभिव्याहृतपदार्थेत्यदि अत्र इहघटोऽस्तीत्यादौ निरुक्तपदार्थसंगित्वमेतद्देशवृत्तिपटादावप्यस्तीत्यतः प्रकृत्यर्थतावच्छेदकेत्युक्तम् । नन्वत्र समभिव्याहृतयत्किञ्चित्पदार्थसंसर्गित्वस्य विवक्षणे नीलपीतोभयघटवद्भूतलादिबोधकेदंपदनिष्पन्नव-

टितात् अत्रनीलोघट इतिवाक्याग्निरुक्तैकत्व भानानुपपत्तिः एतद्देशवृत्तित्वरूपयत्कि-ञ्चित्पदार्थसंसर्गित्वविशिष्टघटत्वस्य पीतघटेऽपि सत्त्वेन तद्वृत्तिभेदप्रतियोगितावच्छे-दकत्वस्यैवैकत्वे सत्त्वादिति समभिव्याहृतयावत्पदार्थसंसर्गित्वस्य विवक्षणेऽप्यत्र-कालिकादिना नीलपदार्थसंसर्गित्वस्य पीतघटेऽपि सत्त्वादनुपपत्तितादवस्थ्यम् नच प्रकृतशाब्दबोधविषयस्यैव संसर्गस्य विवक्षणान्न कालिकमादायात्रदोषइति वाच्यम् एवमपिहि कालिकेननीलरूपवद्भूतल बोधकेदंशब्दनिष्पन्नात्रपदघटितात् " अत्र नीलोघट " इत्यादिवाक्याज्जायमानेबोधे कालिकस्यापि विषयतया तेन सम्बन्धेन नीलपदार्थसंसर्गित्वस्य भूतलवृत्ति पीतघटेऽपि सत्त्वादुक्तदोष-तादवस्थ्यम् नच यावन्तः समभिव्याहृतपदार्थास्तत्तन्निष्ठविषयतानिरूपित शाब्दबोधीय संसर्गताविशिष्टत्वं विवक्षणीयम् वैशिष्ट्यञ्च स्वाश्रयानुयोगित्व स्वा-श्रयप्रतियोगित्वान्यतरसम्बन्धेन निरूपितत्वञ्च साक्षादेव विवक्षणीयन्नतु परम्प-रासाधारणम् येन नीलनिष्ठविषयतया परम्परानिरूपिता कालिकनिष्ठसंसर्गताऽपि ग्रहीतुंशक्येत। तत्र फलंभुंक्ते इत्यादौ द्वितीयार्थाधेयत्वसंसर्गानुयोगित्वस्य फलेऽभावात् स्वाश्रयप्रतियोगित्वेत्युक्तमिति वाच्यम् एवमपिहि अत्रघटोऽस्ती त्यादौ समभिव्याहृतयावत्पदार्थमध्ये एतद्देशस्यापि ग्राह्यतया तन्निष्ठविषयतया साक्षान्निरूपिता या निरूपितत्वनिष्ठसंसर्गता तद्विशिष्टत्वस्य निरुक्तान्यतरसम्ब-न्धेन घटेऽभावादेकत्वस्यैकवचनार्थताबाध इतिचेन्न एकवचनोपलक्षितैकत्वस्यै-कवचनार्थत्वात् उपलक्षणतावच्छेदकसम्बन्धश्च स्वविशिष्टनिष्ठभेदप्रतियोगिता-नवच्छेदकत्वम् वैशिष्ट्यञ्च स्वप्रकृत्यर्थतावच्छेदकवत्त्व स्वविशिष्टसंसर्गता निरूपकत्वोभयसम्बन्धेन वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयत्वसामानाधि-करण्य स्वप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रत्ययप्रयोज्यशाब्दबो-धीयविषयत्वसामानाधिकरण्यान्यतरसम्बन्धेन संसर्गतानिरूपकत्वञ्च अनुयोगित्व-प्रतियोगित्वान्यतरसम्बन्धेन संसर्गताश्रयवत्वम् संसर्गताचेयंप्रमाणान्तरसिद्धा नतु-प्रकृतशाब्दबोधनिरूपिता।एवञ्च नीलपीतोभयघटवति अत्रनीलोघटइत्यस्य नानुप-पत्तिः नीलघट निष्ठस्यैवैतद्देशनिरूपिताधेयत्वस्य प्रकृतवाक्यजबोधे भानात् अन्य-निष्ठस्य तस्य भाने प्रमात्वासम्भवात् घटनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजक-त्रल्प्रत्ययप्रयोज्यशाब्दबोधविषयत्वसमानाधिकरणं यन्नीलघट निष्ठवृत्तित्वनिष्ठसंस-र्गत्वं तन्निरूपकत्वस्य तद्घटएवसत्त्वात्। अत्रच द्वितीयादावेकत्वार्थत्वस्योपपत्तये तदर्थकर्मत्वादिसंसर्गतासंग्राहकस्य स्वप्रयोज्येत्यादिप्रथमस्य प्रथमायाश्च तदुपपत्त-ये द्वितीयस्य च सम्बन्धस्य प्रवेशः। अत्र घटोऽस्तीत्यादौ तिङर्थभूतवृत्तित्वरूप संस-र्गप्रतियोगित्वस्य देशादौसत्त्वात द्वितीयाद्यर्थकर्मत्वादि संसर्गानुयोगित्वस्य फलं-भुंक्तेइत्यादौधात्वर्थे सत्वाच्च तत्तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वस्यैव तत्तदेक-त्वे सत्त्वात सर्वत्रानुपपत्तिवारणाय स्वप्रकृत्यर्थतावच्छेदकवत्त्वोपादानम् ॥ अथैव-मपि पशुनायजेतेत्यादौ एकवचनप्रयोज्यशाब्दबोधविषयकरणत्वनिष्ठसंसर्गता-निरूपकत्वस्य तत्तद्यागकरणीभूततत्तत्पशुषु सर्वेष्वेव सत्त्वेन तत्तन्निष्ठभेदप्रतियो-गितावच्छेदकत्वस्यैव तत्तदेकत्वे सत्त्वात्तेषामेकवचनार्थताबाध इतिचेन्न एकव-

चन विशिष्टैकत्वस्य तत्रैकवचनार्थत्वात् वैशिष्ट्यञ्च स्वविशिष्टनिरूपकताविशिष्टान्यत्वसम्बन्धेन वैशिष्ट्यञ्च स्वप्रकृत्यर्थतावच्छेदक सामानाधिकरण्य स्वविशिष्टसंसर्गताकत्वोभयसम्बन्धेन वैशिष्ट्यञ्च स्वप्रयोज्येत्यादि प्रागुक्तान्यतरसम्बन्धेन निरूपकतावैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व स्वनिरूपितसंसर्गताविशिष्टसंसर्गतानिरूपकतासामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्व स्वनिरूपकनिरूपितत्वोभयसम्बन्धेन निरूपकताचात्र सर्वत्रान्यतरसम्बन्धेनसंसर्गताश्रयविशिष्टत्वरूपा पूर्वोक्तैव इत्थञ्चतद्विधिबोध्यनानायागीयनानापशुनिष्ठनानानिरूपकता एकवचनविशिष्टास्तासाञ्च सम्बन्धघटकस्वपदेनैकैकस्या एवग्रहणमिति एतद्यागीयैतत्पशुनिष्ठनिरूपकतायाः स्वपदेन ग्रहणे तन्निरूपितसंसर्गता एतत्पशुवृत्तिकरणत्वनिष्ठैव भवितुमर्हति स्वनिरूपकैतद्यागनिरूपितत्वघटितोभयसम्बन्धेन तद्विशिष्टसंसर्गतापि सैव तन्निरूपकत्वस्यनिरुक्तान्यतरसम्बन्धेन एतद्यागे एतत्पशावेव च सत्त्वात् तत्सामानाधिकरण्यस्य एतत्पशुनिष्ठैकत्वएवसत्त्वेऽपिस्वपदग्राह्यनिरुक्तनिरूपकतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्यैतदेकत्वेविरहेण निरुक्तविशिष्टान्यत्वस्य सत्त्वान्नानुपपत्तिः पशुद्वयकरणकयागस्य च नैतद्विधिबोध्यत्वम् तदीयपशुनिष्ठतत्तदेकत्वे निरुक्तविशिष्टान्यत्वविरहात् तथाहि पशुनिष्ठतत्तन्निरूपकतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य चालनीन्यायेनैकत्वद्वये सत्वात् तादृशतत्पशुनिष्ठनिरूपकतानिरूपिता या तत्करणत्वनिष्ठा संसर्गता तदवच्छेदकीभूतकरणतात्वावच्छिन्नत्वस्य तन्निरूपकतद्यागनिरूपितत्वस्य च तत्तत्करणत्वनिष्ठसंसर्गताद्वयेऽपिसत्त्वेन तन्निरूपकत्वस्य पशुद्वयेऽपिसत्त्वेन तत सामानाधिकरण्यस्य तत्तदेकत्वे सत्त्वाच्चेति एतच्चैतादृशस्थलएवान्यत्रतु प्रागुक्तैवरीतिरिति ॥ एकत्वपरिष्कारप्रकारान्तरन्तु अस्मद्गुरुभिर्गूढार्थतत्त्वालोके विस्तरेणप्रपञ्चितमिति।

१७ पत्र २० पं. इत्युक्तमधस्तादित्यस्याग्रे। ननु यद्यदाकाङ्क्षाज्ञानसत्त्वेऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधोजायते तत्तदाकाङ्क्षाज्ञानाभावकूटाभावत्वेनैवकारणत्वमस्तु नचात्राप्यननुगमः निरुक्तप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधाव्यवहितपूर्ववर्त्याकाङ्क्षाज्ञानवृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटाभावत्वेनानुगमसम्भवादिति चेन्न अप्रामाण्यज्ञानानामुत्तेजकत्वस्यावश्यकतया एकत्राकाङ्क्षाज्ञानेऽप्रामाण्यज्ञानसत्त्वेऽप्यन्याकाङ्क्षाज्ञानाच्छाब्दबोधोत्पत्त्या सामान्यतोऽप्रामाण्यज्ञानाभावस्य कारणतावच्छेदककोटौ निवेशयितुमशक्यतया तत्तदाकाङ्क्षाज्ञानधर्मिकतत्तदप्रामाण्य ज्ञानाभावानां विशेषतो निवेशस्यावश्यकत्वात् नचाप्रामाण्यज्ञानानामपि यद्यदप्रामाण्यज्ञानसत्त्वेआकाङ्क्षाज्ञानादियावत्कारणसत्वे नीलोघटइति शाब्दबोधो नोत्पद्यते तत्तदभावकूटत्वेनैव प्रवेशे दोषाभावइतिवाच्यम्। अप्रामाण्यज्ञानास्कन्दितनीलोघटइत्याकाङ्क्षाज्ञानोत्तरं नीलः कलशइत्याकाङ्क्षाज्ञानसत्त्वेनीलघटशाब्दबोधोत्पत्त्या तदप्रामाण्यज्ञानाभावस्य निवेशयितु-

मशक्यत्वेन नीलःकलश इत्याकाङ्क्षाज्ञानोत्पत्तिक्षणेऽपि तच्छाब्दबोधोत्पत्तिप्रसङ्गादिति ॥ नन्वस्तु तत्तदाकाङ्क्षाज्ञानानामन्यतमत्वेनैवाखण्डोपाधिरूपेण कारणत्वं लाघवादितिचेन्न तत्राप्युक्तरीत्याऽप्रामाण्यज्ञानाभावानां विशिष्यैव प्रवेशनीयतया तन्निवेशासम्भवात् नच तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टतत्तदाकाङ्क्षाज्ञानवृत्त्यन्यतमत्वेन कारणत्वेऽनुपपत्तिविरहइतिवाच्यम् अन्यतमत्वविशेषणतया तत्तदाकाङ्क्षाज्ञानानांप्रवेशे तेषामपि कारणतावच्छेदकत्वापत्त्या तेषांविशेष्यविशेषणभावे विनिगमनाविरहेण महागौरवात् विशिष्टस्य केवलादनन्यत्वेन केवलेप्याकाङ्क्षाज्ञानेऽन्यतमत्वस्य सत्वेनापत्त्यपरिहाराच्चेति तत्तदप्रामाण्यज्ञानाभावकूटस्योपलक्षणत्वेऽप्रामाण्यज्ञानास्कन्दितादप्याकाङ्क्षाज्ञानाच्छाब्दापत्तेरपरिहाराच्चेति ॥

अथ तत्तदाकाङ्क्षाज्ञानानां स्वस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रति जनकत्वे तेषां योग्यताज्ञानसहकारित्वानुपपत्तिः नीलोघटइत्याकाङ्क्षाज्ञानंविनापि नीलः कलश इत्याकाङ्क्षाज्ञानयोग्यताज्ञानादिघटितसामग्रीतः शाब्दोत्पत्त्या नीलः कलश इत्याकाङ्क्षाज्ञानं विनापिच नीलोघटइत्याकाङ्क्षाज्ञानयोग्यताज्ञानादिघटितसामग्रीतः शाब्दोत्पत्त्याच तत्तदाकाङ्क्षाज्ञानासमवधानेऽपि योग्यताज्ञानस्य फलोपधायकत्वादितिचेन्न सहकारिनियमस्य सामग्रीव्याप्तिरूपतया व्यापकधर्मावच्छिन्नकार्योत्पत्तौ व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षिततयाऽनुपपत्तिविरहात्. तथाहि तद्धर्मावच्छिन्नकार्योत्पत्तिं प्रति तद्धर्मव्यापककार्यतावच्छेदकीभूतयावद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावत्कूटविशिष्टत्वेसति तद्धर्मव्याप्यधर्मविशिष्टत्वेचसति तद्धर्मावच्छिन्नकार्यतानिरूपितकारणत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वेन सामग्र्या व्यापकतया व्यापकीभूतांसामग्रीं विना व्याप्यीभूतायाः शाब्दोत्पत्तेरनुपपत्तेराकाङ्क्षाज्ञानंविना न शाब्दबोधः। अत्र तद्धर्मव्याप्यधर्मविशिष्टत्वेसतीत्यस्यस्थाने तद्धर्मव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्कूटविशिष्टत्वेसतीत्युक्तौ व्याप्यीभूतयावद्धर्मावच्छिन्नसामग्र्या अपेक्षितत्वप्रसङ्गेन एकैकशाब्दोत्पत्तौ यावदाकाङ्क्षाज्ञानसत्त्वस्यावश्यकत्वप्रसङ्गः स्यादतस्तथोक्तम् वैशिष्ट्यञ्च स्वावच्छिन्ननिरूपितकारणतावत्कूटवत्त्वसम्बन्धेनेत्यवधेयम् ॥

१८ प. ११ पंक्तौ नव्यभिचार इत्यस्याग्रे नन्वेवमपि अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वमात्रस्य तत्तदाकाङ्क्षाज्ञानकार्यतानवच्छेदकतया तत्तदाकाङ्क्षाज्ञानविरहेऽपि योग्यताज्ञानादिसत्त्वदशायां नीलस्यघट इत्यादिवाक्यात्तद्धर्मावच्छिन्नोत्पत्तौ बाधकाभाव इतिचेन्न व्यापकधर्मावच्छिन्नकार्योत्पत्तौ अपेक्षिताया व्याप्यधर्मावच्छिन्नसामग्र्या विरहेणापत्त्यसम्भवादिति ॥

१८ प २२ पंक्तौ गूढार्थतत्त्वालोके इत्यस्याग्रे तदपीह स्पष्टावभासार्थं प्रपञ्च्यते। नीलोघटः नीलः पट इतिसमूहालम्बनाकाङ्क्षाज्ञाने इदंज्ञानमव्यवहितोत्तरत्वसम्बन्धेन नीलपदाभाववति घटपदे तत्सम्बन्धेन नीलपदप्रकारताकमित्यप्रामाण्यज्ञानास्कन्दिते नीलःपट इतिशाब्दबोधो जायते नतु नीलोघट इति

तदनुरोधेन अप्रामाण्यज्ञानानास्कन्दितत्वस्य कारणतावच्छेदककोटौ निवेशनीयतयो क्तस्थले नीलः पट इति शाब्दबोधानुपपत्तिरतोऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारताकघटत्वाद्यवच्छिन्नविशेष्यताकत्वम् अप्रमाण्यज्ञानास्कन्दित नीलोघट इत्याकाङ्क्षाज्ञानसत्त्वे नीलघटविषयकानुमितिसामग्रीसत्त्वे चानुमित्युत्पादेन व्यतिरेकव्यभिचारस्यवारणाय शाब्दत्वं च कार्यतावच्छेदककोटौ प्रवेश्यम नच नीलोघटः नीलःकलश इत्याकाङ्क्षाज्ञाने एकतरांशेऽप्रामाण्यज्ञानास्कन्दिते जायमानायां नीलघटान्वयबुद्धौ व्यभिचारवारणाय कार्यतावच्छेदक कोटावेवाप्रामाण्यज्ञानाभावस्य निवेश्यतया नीलोघटः नीलःपट इत्याकाङ्क्षा ज्ञानस्थलीयप्रदर्शितव्यभिचारयोस्ततएव वारणाद्विषयत्वादिप्रवेशो व्यर्थ इति-वाच्यम् अप्रामाण्यज्ञानेऽप्रामाण्यज्ञानस्य तत्राप्यप्रामाण्यज्ञानस्याभावा: नीलोघट इत्याकाङ्क्षाज्ञानमव्यवहितोत्तरत्वसम्बन्धेन नीलपदाभाववति घटपदे नीलपदप्रकारकमित्याकारकस्य एवमव्यवहितपूर्वत्वसम्बन्धेन घटपदाभाववति नीलपदे घटपदप्रकारकमित्याकारकस्य नानाविधस्य तत्तदप्रामाण्यज्ञानस्या भावाः प्रवेशनीयाः तेषाञ्च यद्यदप्रामाण्यज्ञानसत्त्वे नीलोघट इतिशाब्दबोधानुत्पादस्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटत्वेनैव कारणतावच्छेदककोटावेव प्रवेशस्य युक्तत्वात् कार्यतावच्छेदककोटौ तेषामुक्त कूटत्वेन रूपेण प्रवेशस्तु नसम्भवति अव्यवहितोत्तरत्वमात्रस्य कार्यतावच्छेदकत्वे फलस्वरूपानवधारणात् अपितु यद्यदप्रामाण्यज्ञानसत्त्वे नीलोघटइत्याकांक्षाज्ञानोत्तरं नोत्पद्यते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटत्वेनैव प्रवेशनमुचितं तच्च नसम्भवति अप्रामाण्यज्ञानास्कन्दिताकाङ्क्षाज्ञानोत्तरमपि यस्यकस्यचिदुत्पत्तेरिति ॥

२१ प. ३. पंक्तौ प्रसिद्धत्वेऽपि नक्षतिरित्यस्याग्रे । अथैवमपि भेदत्वेन घटाभावस्यापि तादृशत्वादप्रसिद्ध्युक्तिर्न युक्ता भेदत्वेतरधर्मानवच्छिन्न भेदनिष्ठप्रतियोगिताकाभावस्योक्तावपि भेदत्वेन भेदघटोभयाभावो न वार्यते भेदत्वेतरधर्मानवच्छिन्नभेदमात्रवृत्तिप्रयोगिताकाभावत्वञ्च भेदत्वेन तद्भेदाभावसाधारणम् भेदत्वमात्रावच्छिन्नभेदत्वव्यापकप्रतियोगिताकाभावत्वमपि भेदत्वेन भेदघटोभयाभावसाधारणम् भेदत्वावच्छिन्नभेदत्वसम नियतप्रतियोगिताकाभावत्वञ्च भेदत्वेन तद्भेदतद्भिन्नभेदोभयाभावसाधारणम् भेदत्वेन यावद्भेदाभावसाधारणञ्चेतिचेन्मैवम् । भेदत्वगतैकत्ववृत्ति स्वरूपत्वेतरधर्मानवच्छिन्नसंसर्गतानिरूपितप्रतियोगिताकाभावस्याभेदपदार्थत्वेऽप्रसिद्धौ तात्पर्यात् वृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति । अत्रोक्तसंसर्गतानिरूपितत्वप्रवेशात् समवायेन भेदाभावस्य स्वरूपसमवायोभयसम्बन्धेन भेदाभावस्य च वारणम् । नचैवमपि भेदत्वेन तद्भेदाभावस्य न वारणम् एतदभावीय प्रतियोगितायाः अपि भेदत्वगतैकत्ववृत्तित्वात् । भेदत्वव्यापकत्वस्य प्रतियोगितायां प्रवेशेऽपि भेदत्वेन तद्भेदतद्भिन्नभेदोभयाभावस्य न वारणमिति वाच्यम्

निरुक्तपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपितानुयोगितानिरूपितनिरूपकताव-च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन वृत्तित्वस्य वाच्यत्वात् एवञ्च भेदत्वेनतद्भेदाभावादिनिरूपितप्रतियोगिता-निरूपिततद्भेदाभावत्वादिरूपानुयोगितानिरूपिततद्भेदनिष्ठनिरूपकतानिरूपि-तावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वस्य तद्भेदत्वरूपतद्व्यक्तित्वगतैकत्वएव सत्त्वं ननु भेदत्वगतैकत्वेऽपीति न दोष; । नचोक्तोभयसम्बन्धघटकप्रथमसम्बन्धप्र-वेशे प्रयोजनविरहः घटत्वेन भेदाभावस्य तद्भेदत्वेन भेदाभावस्य च वारणाय तदावश्यकत्वादिति ॥

३७ प २५ भेदविशिष्टंयत्तदन्यत्वमिति ननु तादात्म्यस्य भेदघटितत्वे भेदस्य ता-दात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपत्वेनात्माश्रयोऽन्नदोषइतिचेन्न भेदत्व-स्यानुयोगिताविशेषरूपतयोक्तरूपत्वाभावादिति।। अथोभयभेदस्य केवलान्वयितया तमादाय तद्व्यक्तित्वादौ भेदविशिष्टत्वस्यैव सत्त्वम् नच व्यासज्यवृत्तिधर्मानव-च्छिन्नप्रतियोगिताकत्वेन भेदो विशेषणीयइतिवाच्यम् तद्व्यक्तित्वेन तद्व्यक्तिघ-टोभयभेदमादायोक्तदोषतादवस्थ्यादितिचेन्न एकत्ववृत्तिप्रतियोगिताकभेदवि शिष्टान्यत्वस्य विवक्षितत्वात् वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिता-कपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेनेत्यवधे-यम् ॥

४८। प ११ पं. नदोष इत्यास्याग्रे, इदन्तु बोध्यम् एकज्ञानीयसमानाधिकरण विषयतयोरवच्छेद्यावच्छेदकभाव इतिगदाधरमतम् तयोरभेदइति जगदीशमतम् तदेतयोर्गदाधरभट्टाचार्यमतमेव सम्यक् तथाहि अभेदपक्षे रक्तदण्डवत्पुरुषवा-न्देश इतिज्ञानं प्रति पुरुषाभाववान् दण्डइतिज्ञानस्य प्रतिवन्धकत्वापत्तिः तत्प्रतिवध्यतावच्छेदकस्य संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतानि रूपितदण्डत्वावच्छिन्नविशेष्यताशालिज्ञानत्वस्य रक्तत्वावच्छिन्नप्रकारतानि-रूपितदण्डत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशे-ष्यत्वाभिन्नप्रकारतानिरूपितदेशत्वावच्छिन्नविशेष्यताशालिनि तस्मिन् ज्ञाने सत्त्वात् दण्डत्वावच्छिन्नस्य विशेष्यत्वस्य प्रकारत्वस्य चैक्यात्प्रतिबध्यता वच्छेदकधर्मवत्त्वस्याक्षतत्वात् तद्वारणाय संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्न-प्रकारतात्वावच्छिन्ननिरुपकतानिरूपितनिरूप्यतावद्दण्डत्वावच्छिन्नविशेष्यताशा-लिज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वोक्तौ गौरवस्य दुःपरिहरत्वादिति ॥

५१ प ३४ पंक्तौ महल्लाघवमित्यस्याग्रे । अथ धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानस्य कारणत्वपक्षे यत्र द्रव्यंघटः प्रमेयोघट इति समूहालम्बनयोग्यता ज्ञानम् इदंज्ञानंघटाभाववति द्रव्ये घटप्रकारताकमित्यप्रामाण्यज्ञानास्कन्दितम् तत्र जायमानस्य प्रमेयोघटइतिशाब्दबोधस्यानुपपत्तिः अप्रामाण्यज्ञानानास्कन्दितघट-त्वावच्छिन्नप्रकारताकयोग्यताज्ञानस्यासत्त्वात् समवायस्य प्रत्यासत्तित्वे तु प्रमेयो घट इतिशाब्दबुद्धौ घटाभाववन्निष्ठप्रमेयत्वावच्छिन्नविशेष्यताकत्वनिष्ठविष-यतानिरूपितघटप्रकारताकत्वनिष्ठप्रकारतानिरूपित विशेष्यताशून्यप्रमेयोघट इति

योग्यताज्ञानस्य कारणतया वाच्यतया नानुपपत्तिरितिचेन्न धर्मितावच्छेदकतासम्बन्धेन घटत्वाद्यवच्छिन्नप्रकारताकशाब्दबुद्धौ स्वविशिष्टावच्छेदकतासम्बन्धेन ज्ञानत्वेन कारणत्वेऽनुपपत्तिविरहात् वैशिष्ट्यञ्च स्वीयघटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यताकत्व स्वाभाववत्त्वोभयसम्बन्धेन स्वाभावश्च स्वनिष्ठविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकत्वनिष्ठप्रकारतानिरूपितघटाभाववन्निष्ठविशेष्यत्वनिष्ठविषयतानिरूपितस्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्ननिरूपितत्वनिष्ठविषयतानिरूपितविषयतावदवच्छेदकतावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकः अवच्छेदकतावत्ताच स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन एवञ्च इदंज्ञानंघटाभाववतिद्रव्ये घटप्रकारताकम् इत्यप्रामाण्यज्ञाने सप्तम्यभिलप्यमानायां विशेष्यतायां धर्मिपारतन्त्र्येण द्रव्यत्वस्य स्वनिष्ठावच्छेदकतानिरूपितत्वसम्बन्धेन भानात् उक्ताप्रामाण्यज्ञानास्कन्दितयोग्यताज्ञानस्य स्वनिष्ठविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारकत्वनिष्ठप्रकारतानिरूपितघटाभाववन्निष्ठविशेष्यत्वनिष्ठविषयतानिरूपितनिरूपितत्वनिष्ठसांसर्गिकविषयतानिरूपितविषयतावदवच्छेदकतावत्त्वसम्बन्धेन द्रव्यत्वनिष्ठावच्छेदकतायां सत्त्वेन स्वाभाववत्त्वविरहान्न द्रव्यत्वेशाब्दबोधस्यापत्तिर्नया प्रमेयत्वेऽनुपपत्तिः। यत्रच इदंज्ञानं घटाभाववन्निष्ठद्रव्यत्वावच्छिन्नविशेष्यतानिरूपितघटप्रकारताकम्, इत्याकारकमप्रामाण्यज्ञानं तत्र द्रव्यत्वनिष्ठावच्छेदकतानिरूपितत्वस्य विशेष्यतायां प्रकारविधयैव भानेन निरूपितत्वनिष्ठविषयतायाः स्वरूपसम्बन्धावच्छिन्नत्वेऽपि स्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वस्य निरूपितत्वनिष्ठविषयत्वे सत्त्वात्तन्निरूपितविषयतावत्त्वमवच्छेदकतायामक्षतमेवेति। तत्रापि यत्र पृथिवीघटः द्रव्यंघटइतिसमूहालम्बनयोग्यताज्ञानं पृथिवीघट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितं तत्र द्रव्यत्वनिष्ठावच्छेदकतायां वैशिष्ट्यवारणाय चतुष्टयघटकस्य प्रथमस्य सम्बन्धस्य निवेशः। एवं कालिकेन द्रव्यत्वविशिष्टधर्मिकस्य समवायेन द्रव्यत्वविशिष्टधर्मिकस्य च घटप्रकारकसमूहालम्बनयोग्यताज्ञानस्य एकतरांशेऽप्रामाण्यज्ञानास्कन्दितस्य अवच्छेदकताद्वये वैशिष्ट्यवारणाय द्वितीयस्य। जातिमान् घटः द्रव्यंघट इतिसमूहालम्बनस्य द्रव्यंघट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितस्यावच्छेदकताद्वये वैशिष्ट्यवारणाय तृतीयस्य एवंतस्यैव च ज्ञानस्य जातिमान्घट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितस्यावच्छेदकताद्वये वैशिष्ट्यवारणाय चतुर्थस्य च प्रवेशः। नचैवमपि यत्र द्रव्यंघटइतियोग्यताज्ञानमिदंज्ञानं घटाभाववति घटप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितं तत्र द्रव्यंघट इतिशाब्दबोधापत्तिः एतदप्रामाण्यज्ञाने द्रव्यत्वनिष्ठावच्छेदकतानिरूपितत्वस्य घटाभाववन्निष्ठविशेष्यतायामभासमानतया स्वनिष्ठविशेष्यतानिरूपितेत्यादि निरुक्तसम्बन्धस्य व्यधिकरणतया तेन सम्बन्धेन स्वाभावस्यापि द्रव्यत्वनिष्ठावच्छेदकतायां सत्त्वादितिचेन्न एतादृशाप्रामाण्यज्ञानाभावानां योग्यताज्ञानकारणतावच्छेदककोटौ विशिष्यैव निवेशनीयत्वादिति।

५७ प ३४ पंक्तौ गुरुचरणैरित्यस्याग्रे तदपि निःकृष्य प्रदर्श्यते तथाहि यद्यपि स्वजनकज्ञानीयवृत्तिनिष्ठेत्यादिमूलोक्तसम्बन्धेनैवोपस्थितेः कारणत्वं तथापि लाघवज्ञानसहकारेण इतरबाधसहकारेण वा यथाऽनुमितिर्व्यापकतानवच्छेदकरूपेणापि विधेयं विषयीकरोति तथा पदान्तरज्ञानाधकल्पनलाघवज्ञानसहकारात् कारणतानवच्छेदकेनापि द्रव्यंघटइत्याद्याकाङ्क्षाघटकद्रव्यपदवाच्यत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितिस्थितिरपेक्ष्यतेऽतोनानुपपत्तिरिति ॥

५९ प १५ पंक्तौ प्रयोजनाभावात् एतदग्रे नन्वत्र वृत्तिविषयतायाः वृत्तित्वावच्छिन्नत्वेन प्रवेशो वृत्तित्वसमानाधिकरणत्वेन वा नाद्यः वृत्तित्वस्य शाब्दबोधानुकूलपदपदार्थसम्बन्धत्वरूपस्य शक्तिलक्षणोभयसाधारणस्य घटो घटपदशक्य इत्यादिज्ञानीयशक्तिनिष्ठविषयतानवच्छेदकत्वात्। न द्वितीयःघटोघटपदसम्बन्धीत्यादिज्ञानजन्योपस्थितेरपि शाब्दबोधजनकत्वापत्तेः सम्बन्धत्वावच्छिन्नविषयतायाः सम्बन्धमात्रनिष्ठत्वेन शाब्दबोधानुकूलपदपदार्थसम्बन्धरूपवृत्तावपि सत्त्वादितिचेन्न वृत्तित्वव्याप्यधर्मावच्छिन्नत्वेन प्रवेशे दोषाभावात् अथैवमपि पदधर्मिकवाचकत्वावगाहिज्ञानजन्योपस्थितेःपदधर्मिकलक्षकत्वज्ञानजन्योपस्थितेश्च शाब्दजनकतया न तयोः संग्रहइति चेन्न स्वजनकज्ञानीयवाच्यत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताविशिष्टप्रकारता स्वजनकज्ञानीयपदत्वावच्छिन्नविशेष्यतानिरूपितवाचकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्रकारता स्वजनकज्ञानीयवाच्यसम्बन्धित्वरूपलक्ष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारता स्वजनकज्ञानीयपदनिष्ठविशेष्यतानिरूपितलक्षकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्रकारतान्यतमसम्बन्धेनोपस्थितेः कारणत्वस्य विवक्षितत्वादिति ॥

६० प ३३ पंक्तौ नापत्तिरितीत्यस्याग्रे यदिच संख्यारूपस्यापेक्षाबुद्धिविषयत्वरूपस्यापेक्षाबुद्धिरूपस्य वा द्वित्वस्य नानात्वेन एकद्वित्वेऽपरद्वित्वभेदस्य सत्तयाऽऽपत्तेस्तादवस्थ्यमित्युच्यते तदा तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रकारताविशिष्टान्यत्वं कारणम् वैशिष्ट्यञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ॥

६१ प ७ पंक्तौ सत्त्वादिति एतदग्रे यत्तु निरुक्तपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ न तद्धर्मभेदस्य कारणत्वं किंतु तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभेदस्य तद्धर्मव्यापकधर्मभेदस्यवा कारणत्वम् तथा च घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतापदेन नीलघटत्वाव-

च्छिन्नविषयतायाअपि ग्रहीतुंशक्यतया तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकभेदस्य घटत्वगतैकत्वव्यापकरूपभेदस्य च नीलत्वनीलघटत्वगतसमुदायत्वेऽभावान्नोक्तापत्तिः। नचात्र प्रथमकल्पो न युक्तः घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतात्वस्य नीलघटत्वावच्छिन्नविषयतायामिव पीतादिघटत्वावच्छिन्नविषयतायामपि सत्वेन तादृशविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसमुदायत्वभेदस्य निरुक्तसमुदायत्वे सत्वादितिवाच्यम् तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताविशिष्टान्यत्वस्य प्रथमकल्पार्थत्वात् वैशिष्ट्यञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतात्वस्य नीलघटत्वावच्छिन्नविषयतायामिव पीतादिघटत्वावच्छिन्नविषयतायां सत्वेऽपि सम्बन्धघटकस्वपदेन प्रातिस्विकरूपेण तत्तद्विषयतायाएव ग्रहणादिति नीलघटत्वावच्छिन्नविषयताया अपि स्वपदग्राह्यतया तदनुयोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव नीलत्वनीलघटत्वगतसमुदायत्वे सत्वान्नापत्तिरित्याहुस्तन्न जातित्वेन घटत्वावगाहिनो जातिमान्घटइति शाब्दबोधस्य उक्तपक्षद्वयेऽप्यनुपपत्तेः घटत्वजातित्वगतद्वित्वे निरुक्तविषयताविशिष्टत्वस्य घटत्वगतैकत्वव्यापकत्वस्य च सत्वादिति ॥

६१ । ७ पंक्तौ अत्राहुरस्मद्गुरुचरणा इत्यस्याग्रे घटत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारतावदन्यत्वं हेतुः प्रकारतावत्ताच स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच न घटोघट इत्यस्य नवा नीलघटोघटइत्यस्यापत्तिरुक्तप्रकारतापदेन नालघटत्वावच्छिन्नप्रकारताया अपि धारणेन तन्निरूपितावच्छेदकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव नीलत्वनीलघटत्वगतसमुदायत्वे सत्वात्। नवा घटो नीलघट इत्यस्यानुपपत्तिरुक्तकार्यकारणभावानाक्रान्तत्वात् । एवं जातित्वघटत्वगतद्वित्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतावदन्यत्वं हेतुः तथाच जातिमान् जातिमान्इत्यस्य जातिमद्घटोजातिमानित्यस्यच नापत्तिः नवा जातिमान् जातिमद्घट इत्यस्यानुपपत्तिः उक्तकार्यकारणभावानाक्रान्तत्वादिति।एवं नीलत्वनीलघटत्वगतत्रित्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ नीलत्वावच्छिन्ननीलनिष्ठावच्छेदकतानिरूपितघटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितप्रकारतावदन्यत्वं हेतुः तथाच नीलघटोनीलघटः इत्यस्य द्रव्यनीलघटो नीलघट इत्यस्य च नापत्तिर्नवा घटो नीलघटइत्यस्यानुपपत्तिरिति॥अथैवमपि कालिकेन घटत्वविशि-

ष्टत्वेसति समवायेन द्रव्यत्वविशिष्टपरेण समवायेन घटत्वविशिष्टत्वेसति कालिकेन द्रव्यत्वविशिष्टपरेणच तच्छब्देन घटितात् सस इत्यादिवाक्यात् शाब्दबोधानुपपत्तिरशक्यवारणैवेति चेन्नेतिपूरणीयम् ।

६२ । १५ पंक्तौ घटोनघटइत्याद्यनुमितेरित्यादि नन्वेतदयुक्तं घटभेदव्याप्यवान्घट इत्याकारकपरामर्शमन्तरेण घटत्वावच्छिन्नधर्मिक घटत्वावच्छिन्नप्रतियोगिताकभेदानुमित्यापादनस्याशक्यतयोक्तपरामर्शस्याहार्यत्वादाहार्यपरामर्शस्यानुमितिजनकत्वानभ्युपगमादिति चेन्न भेदव्याप्यवान् घट इतिपरामर्शदशायां भेदापेक्षया घटभेदो लघुरिति लाघवज्ञानसत्वेऽनुमित्यापादनसम्भवेनानुपपत्तिविरहादिति प्रदर्शितञ्चैतद्व्युत्पत्तिवादविवृत्तावस्मन्मातामहस्यानुजैस्तार्किक चूडामणिभिर्दिगन्तविख्यातकीर्त्तिभिर्विश्वनाथशर्मभिरिति ॥

७९ । १ पंक्तौ अनाधिक्यादिति अथात्रापि अप्रामाण्यज्ञानास्कन्दितादाकाङ्क्षाज्ञानाच्छाब्दबोधवारणाय कारणतावच्छेदककोटावप्रामाण्यज्ञानानास्कन्दितत्वस्य राजपुरुषो द्रव्यं घटइति समूहालम्बनात्मकस्यैकतरांशेऽप्रामाण्यज्ञानास्कन्दितस्याकाङ्क्षाज्ञानस्य सत्वदशायां शाब्दानुपपत्तिवारणाय विषयविशेषस्य च निवेश आवश्यक एव । किञ्च नीलस्य घट इत्यस्य निराकाङ्क्षत्वोपपादके पूर्वसन्दर्भे कार्यतावच्छेदककोटाविति लेखस्वारस्येनाव्यवहितोत्तरत्वातिरिक्तस्य विषयविशेषस्यापि कारणतावच्छेदकतया प्रवेशस्य सूचनात् स्वग्रन्थविरोधश्चेतिचेन्मैवम् अप्रामाण्यज्ञानाभावानामनुगतरूपेण कार्यतावच्छेदककोटौ निवेशे विषयनिवेशो नावश्यकतामर्हतीत्यालोच्य तथा निवेशाभिप्रायेणात्र विषयनिवेशस्य परित्यक्तत्वात् । पूर्वग्रन्थस्यचाननुगतरूपेण तेषां कारणतावच्छेदककोटौ प्रवेशाभिप्रायकत्वात् । अथवैतद्ग्रन्थस्य संसर्गतामतोपपादकस्य पूर्वपक्षग्रन्थतया न सिद्धान्तप्रतिपादकपूर्वग्रन्थविरोधोदोषः उत्तरग्रन्थे पतत्खण्डनाप्रदर्शनस्य दिक्प्रदर्शनपरत्वेनाप्युपपत्तिसम्भवादिति । अथैवमेव योग्यताज्ञानस्यापि तादात्म्येन नीलादिप्रकारकघटविशेष्यकज्ञानरूपस्य नीलसंसर्गव्याप्यवत्ताज्ञानादिरूपस्यच नानाविधस्य एकरूपेण कारणत्वासम्भवात् स्वस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव कारणत्वं निर्वाच्यमितिगतं योग्यताज्ञानाकाङ्क्षाज्ञानादीनां परस्परसहकारित्व प्रत्याशया आकाङ्क्षाज्ञानाव्यहितोत्तरत्वयोग्यताज्ञानाव्यवहितोत्तरत्वयोर्व्याप्य व्यापकभावविरहादितिचेदत्राहुरस्मद्गुरुचरणाः यत्रैकजातीयकार्येण विभिन्न जातीयकारणानामन्यतमत्वेनान्वयव्यतिरेकग्रहोऽन्यतमत्वस्यच कारणतावच्छेदकत्वे दोषदर्शनं तत्र कार्यगतवैजात्यासम्भवे व्यभिचारवारणाय कारणाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वं कल्प्यते नतु सर्वत्र तथा चात्रोक्तयुक्त्याऽव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वेसिद्धे तत्तद्विषयकशाब्दत्वस्य कार्यविशेषणतयोपस्थितस्य व्यभिचारावारकतयो कार्यतानवच्छेदकत्वेऽपि नीलोघटइत्यादि शब्दबोध सामग्रीघटकतत्तदाकाङ्क्षाज्ञानादिकारणान्तर्याणां नीलोघटः नीलः कलश इत्याद्याकाङ्क्षाज्ञानाद्यन्यतमनिरूपितत्वरूपेण नीलोघट इत्यादिशाब्दत्वव्यापकानां

व्याप्यत्वं नीलोघट इत्यादिशाब्दत्वे सुग्राह्यमिति नीलोघट इत्यादि शाब्दबोधमुत्पिपादयिषुस्तथाविधशाब्दत्वव्यापकतत्तदाकाङ्क्षाज्ञानान्यतमानन्तर्यं विनाऽनुपपन्नमित्यवधारयन् नीलोघटइत्यादिवाक्यं प्रयुंक्ते इतिनाकाङ्क्षाज्ञानं विना नवा योग्यताज्ञानादिकं विना शाब्दबोध इति सर्वमवदातम्

८० प. २७ पं. प्रतिबध्यप्रतिबन्धकभावइति एतदग्रे अतएव विभिन्नविषयकप्रत्यक्षाणि शाब्दविशिष्टान्यप्रत्यक्षत्वेनानुगमय्य विषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभाववच्छाब्दविशिष्टान्यप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यं वैशिष्टयञ्च स्वविशिष्टविशेष्यताकत्वसम्बन्धेन स्ववैशिष्टयञ्च स्वीयप्रकारतावत्त्वसम्बन्धेन प्रकारतावत्ता च स्वावच्छेदकधर्मावच्छिन्नप्रकारताकत्व स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेनेत्युक्तावपि न निस्तारः राजपुरुषशाब्दसामग्रयां नीलघटशाब्दसामग्रयां पटप्रत्यक्षसामग्रयां राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छायांच सत्यां पटप्रत्यक्षापत्तेः। एवं यत्र शाब्दप्रत्यक्षयोः सामग्री तदुभयेच्छाच तत्र प्रत्यक्षापत्तिवारणाय शाब्देच्छाविरहविशिष्टायाःप्रत्यक्षेच्छाया उत्तेजकत्वं वाच्यं शाब्दंच तत्र विषयविशेषघटितमेव प्रवेशनार्हम् अन्यथा घटप्रत्यक्षसामग्रयां घटप्रत्यक्षेच्छायां पटशाब्दसामग्रयां वृक्षशाब्देच्छायाञ्चसत्यां पटशाब्दापत्तेरनुगमय्यनिवेशनासम्भवादिति॥

८१ प. १३ पं. प्रतियोगित्वमिति इत्यस्याग्रे अतएव निरुक्तशाब्दविशिष्टान्यप्रत्यक्षत्वेनानुगतविभिन्नविषयकप्रत्यक्षंप्रति स्वविषयतावच्छेदकधर्मावच्छिन्नप्रत्यक्षसामग्रीविशिष्टत्व स्वविषयतावच्छेदकावच्छिन्नशाब्दसामग्रीविशिष्टत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभावविशिष्टशाब्दसामग्रीत्वेन प्रतिबन्धकता वाच्या तत्र घटप्रत्यक्षेच्छायां पटप्रत्यक्षसामग्रयां नीलोघट इत्यादिशाब्दसामग्रयाञ्च सत्यां प्रत्यक्षवारणाय प्रथमस्यसम्बन्धस्य निवेशः नीलघटशाब्दसामग्रयां प्रत्यक्षसामग्रयां राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छायाञ्च सत्यां पटप्रत्यक्षवारणाय द्वितीयस्य निवेशः पुरुषान्तरीणेच्छावारणाय तृतीयस्य निवेशः एवञ्च न संसर्गतावादिनां प्रतिबन्धकताकल्पनमधिकमित्यपि निरस्तम् राज्ञः पुरुषइतिशाब्दसामग्रयां घटप्रत्यक्षसामग्रयां पटप्रत्यक्षसामग्र्यां घटप्रत्यक्षेच्छायाञ्च सत्यां पटप्रत्यक्षापत्तेरिति॥

नन्वस्तूक्तरीत्या विभिन्नविषयकप्रत्यक्षत्वमनुगमय्य इच्छावदन्यविभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं लाघवात् इच्छावत्ताच प्रयोज्यत्वसम्बन्धेन समानविषये प्रत्यक्षस्यैवोत्पादाद्विभिन्नविषयकत्वस्यापि प्रतिबध्यतावच्छेदकतया प्रवेशः। नचेच्छाविरहेऽपि शाब्दसामग्रीसत्त्वे इच्छाविशिष्टप्रत्यक्षवारणाय तत्तदिच्छाविशिष्टप्रत्यक्षे तत्तदिच्छायाः कारणत्वं वाच्यमित्यननुगतकार्यकारणभावोऽननुगतप्रतिबध्यप्रतिबन्धकभावतुल्य उक्तानुगतप्र-

तिवध्यप्रतिबन्धकभावकल्पनं पुनरधिकमिति विपरीतगौरवमिति वाच्यमुयतः सामग्रीत्वस्यैकविशिष्टापरत्वरूपत्वेन विशेष्यविशेषणभावे विनिगमना विरह- प्रयुक्तमनेकं गुरुधर्मावच्छिन्नप्रतिबन्धकत्वं यद्यपि सामग्रीत्वं नैकविशिष्टापरत्वं तद्यपि इच्छावदन्यत्वस्य प्रतिवध्यतावच्छेदकत्वपक्षे घटपटादिदशविषयकप्रत्यक्षं प्रति राज्ञःपुरुष इतिवाक्यज्ञानघटितशाब्दसामग्र्या एकंप्रतिबन्धकत्वमेकञ्च चैत्रस्य पुरुष इतिवाक्यज्ञानघटितशाब्दसामग्र्या इतिप्रतिबन्धकताद्वयम् इच्छाविशिष्टघ- टादिदशप्रत्यक्षं प्रति इच्छायाः कारणत्वदशकम् तत्तद्दशविषयकप्रत्यक्षंप्रति इच्छा विरहविशिष्टशाब्दसामग्र्याः प्रतिबन्धकत्वे विंशतिः प्रतिबन्धकत्वानीतिपक्षद्वये सुकरमेवज्ञातुंलाघवंगौरवञ्चेति।अत्रकेचित्‌राज्ञः पुरुषइत्यादिशाब्दसामग्र्यां घटप्र- त्यक्षसामग्र्यां पटप्रत्यक्षसामग्र्यां घटप्रत्यक्षेच्छायाञ्च सत्यां जायमाने घटप्रत्यक्षे पटस्यापि भानापत्तिः कार्यीभूतस्य प्रत्यक्षस्येच्छावत्त्वेनाप्रतिवध्यत्वात् इच्छाया उत्तेजकत्वपक्षे पटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्र्यभावस्य पटविषयताप्र- योजकस्याभावान्नापत्तिरित्याहुः ॥ वस्तुतः इच्छावदन्यतथाविधप्रत्यक्षत्वस्य निरुक्तसामग्रीप्रतिवध्यतावच्छेदकत्वे निरुक्तसामग्र्यभावकार्यतावच्छेदकत्वमप्यु- क्तप्रत्यक्षत्वस्योरीकर्तव्यतया प्रयोज्यत्वसंसर्गस्यापि कार्यतावच्छेदकघटकत्वाप- त्याऽऽत्माश्रयोदूषणमित्यवधेयम् ॥

अथ स्वसामानाधिकरण्य स्वविषयत्वोभयसम्बन्धेन इच्छावदन्यविभिन्न- विषयकप्रत्यक्षंप्रति शाब्दसामग्रीत्वेन प्रतिबन्धकत्वंवाच्यं विभिन्नविषयकप्रत्य- क्षत्वस्य च शाब्दविशिष्टान्यप्रत्यक्षत्वेनानुगमस्य प्रदर्शितत्वान्न संसर्गतामते प्रतिबन्धकताधिक्यमितिचेन्न प्रत्यक्षत्वेन शाब्दावगाहीच्छाया विषयतासम्बन्धेन प्रत्यक्षेऽसत्त्वात्तादृशेच्छासत्त्वे शाब्दापत्तेर्दुर्वारत्वात् स्वविषयतावच्छेदकतापर्या- प्त्यधिकरणधर्मवत्त्वस्य स्वविषयत्वस्थाने निवेशेऽपि पटप्रत्यक्षेच्छायां राज्ञः पुरुष इत्यादिशाब्दसामग्र्यां घटपटप्रत्यक्षसामग्र्योश्च सत्योः घटपटयोः प्रत्य- क्षापत्तिरित्यवधेयम् ॥

अथ राजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिप्रत्यक्षं प्रति चैत्रस्य पुरुष इत्यादि वाक्यज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वस्योभयमतसिद्धत्वेन लाघवात् राजस्वत्वाभाववत्पुरुषविषयतानिरूपितसुन्दरविषयताकप्रत्यक्षं प्रति तादृशविषयताबहिर्भूतविषयताकशाब्दसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यं तच्च राज्ञःपुरुष इत्यादि शाब्दसामग्रीसाधारणमिति नेच्छोत्तेजकत्वानुरोधेनापि प्रतिबन्धकताधिक्यमिति चेन्न उक्तसामग्रीत्वस्यानुगतानतिप्रसक्तस्य दुर्निरू- पत्वादिति ॥

८२ प. २० पं. । परिग्रह इत्यस्यानन्तरम् निवेशनाधिक्येन गौरवमिति अथ राजस्वत्ववत्पुरुषविषयकबुद्धित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्ध- कत्वावच्छिन्नाभावोऽनुगतरूपेण शाब्दसाग्रीकोटौ निवेशनीयस्तथाच राजाभाववत्स्वत्वमिति निश्चयाभावो राजस्वत्वाभाववान्पुरुष इति निश्चया-

भावश्च तथाविध इति न तयोः पार्थक्येन प्रवेश इति नैतयोर्विशेष्यविशेषण-भावेविनिगमनाविरहप्रयुक्तं शाब्दसामग्रीप्रतिबन्धकतायां प्रकारतावादिनां गौरवं नच संसर्गतामते स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताक राजाभावप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नाभावो लघीयान् शाब्दसामग्रीकोटौ निविशत इति वाच्यम् संसर्गतामतेऽपि पुरुषेराजाभावः राजाभाववान् पुरुषः राजव्यापकाभाववान् पुरुष इत्यादिनानाविधानां बाधनिश्चयानामभावाः प्रवेशनीया इत्युक्तरीत्या गौरवमिति तत्परिहाराय संसर्गतावादिभिरपि स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताशालिज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताावच्छिन्ना भावएवनिवेश्य इति बाधनिश्चयाभावनिवेशनप्रयुक्तो लाघवगौरवविचारो मतद्वयेऽपि नादरणीय एवेति चेन्न यत्रस्थले भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानानन्तरक्षणे बाधनिश्चयशाब्दसामग्रीप्रत्यक्षसामग्रीणामेकदाऽवस्थानं तत्राप्रामाण्यज्ञानास्कन्दितबाधनिश्चयस्याप्रतिबन्धकतयाऽग्रिमक्षणे जायमानांशाब्दमतिमुपमर्दयेत्प्रात्यक्षिकोऽनुभवः तदग्रिमक्षणेऽप्रामाण्यज्ञाननाशेन पुनः शाब्दसामग्रीसम्वलनेऽपि अप्रामाण्याज्ञानानास्कन्दितबाधनिश्चयनिष्ठप्रतिबन्धकत्वस्यावश्यकतया तदवच्छिन्नाभावस्य तदानीमभावात् । न चाप्रामाण्यज्ञानकालेऽपि बाधनिश्चये प्रतिबन्धकत्वापत्त्या तदुत्तरक्षणे कार्यप्रतिरोधवारणाय प्रतिबन्धकत्वेऽव्याप्यवृत्तित्वस्यैवाङ्गीकरणीयतयोक्तप्रतिबन्धकत्वावच्छिन्नाभावस्य तदानींसत्तया शाब्दसामग्याः प्रतिबन्धकीभूतायाः सत्वान्न प्रत्यक्षापत्तिः यदिच प्रतिबन्धकत्वं नाव्याप्यवृत्तिः प्रतिबन्धकतावच्छेदकावच्छिन्नसत्त्वमेव कार्यानुत्पादप्रयोजकम् प्रतिबन्धकतावच्छेदकावच्छिन्नाभावसत्त्वमेव च कार्योत्पादप्रयोजकमित्युक्तस्थले प्रतिबन्धकत्वावच्छिन्नाभावासत्त्वाच्छाब्दसामग्रीविरहेण प्रत्यक्षापत्तिर्दुर्वारेत्युच्यते तदा राजस्वत्ववत्पुरुषविषयकबुद्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छिन्नाभावस्यैव प्रवेशः कार्यः नचोभयाभावादिवारणाय स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंम्बन्धेन प्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति प्रतियोगिताकाभाव एव निवेशनीयः सच यत्किञ्चित्प्रतिबन्धकसत्वेऽपिसम्भवतीवाच्यम् निरुक्तप्रतिबन्धकताविशिष्टरूपवृत्तिप्रतियोगिताकाभावस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेतिचेन्मैवम् येन रूपेण प्रतिबन्धकत्वं तद्रूपावच्छिन्नप्रतियोगिताकाभावत्वेनैव हि प्रतिबन्धकाभावः शाब्दसामग्रीकोटौनिवेशनीयः प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपतया तस्य कारणतावच्छेदकत्वे आत्माश्रयप्रसङ्गादित्युक्तरीत्या लाघवगौरवविचारोऽनादरणीय एवेत्यवधेयम् ॥

८५ प. ३१ पं गुरुचरणैः एतस्याग्रे तदपीह प्रदर्श्यते तथाहि यत्र राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वादौ शक्तिभ्रमात्स्वत्वोपस्थितिः तत्र स्वत्वप्रकारकबोधस्योभयमतसिद्धतया स्वत्वसंसर्गकबोधे तादृशाकाङ्क्षाज्ञानादिघटितसाम-

ग्रीकल्पनं संसर्गतावादिनामधिकम् विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वालोचनेचाति गौरवम् । यद्दिच तत्र स्वत्वोपस्थितावपि स्वत्वादौ विभक्तेः शक्त्याद्यकल्पनलाघवानुरोधेन स्वत्वसंसर्गकबोधएव जायते तादात्म्यस्य संसर्गताविचारे विभक्त्या तादात्म्यस्योपस्थितावपि तत्संसर्गकबोधस्यैव ग्रन्थकृता प्रदर्शितत्वादित्युच्यते तदापि राज्ञः पुरुष इत्यादौ राजपुरुष इत्यादौ च राजादिपदस्य राजसम्बन्धेलक्षणायां राजसम्बन्धप्रकारकबोधस्योभयमतसिद्धतया राजप्रकारकबोधप्रयोजकसामग्रीकल्पनं संसर्गतामते पुनरधिकमितिचेन्न राजादिपदस्य राजसम्बन्धे लक्षणास्थले प्रकारतावादिभीः राजसम्बन्धसम्बन्धवान् पुरुषइत्यन्वयबोधस्योपगन्तव्यतया संसर्गतामते तदकल्पनेन सामग्रीद्वयकल्पनाया मद्वयेऽपि तौल्यात् । नच राजस्वत्वसम्बन्धलक्षणायां संसर्गतामतेऽपि तत्प्रकारकबोधस्य स्वीकरणीयतया संसर्गतामते सामग्रीत्रयकल्पनया गौरवमितिवाच्यम् प्रकारतामते तत्र स्वीकरणीयस्य राजस्वत्वसम्बन्धसम्बन्धप्रकारकबोधस्य संसर्गतामतेऽनभ्युपगमेन तुल्यत्वात् । नच तत्रापि लक्षणया तादृशबोधउपपादनीयः तत्र तत्र लक्षणायामनवस्थापातात् तादृशसम्बन्धानुपस्थित्यादिभिर्यत्र विश्रान्त्या न लक्षणा तत्र तत्संसर्गकबोधस्य संसर्गतामतेऽनभ्युपगम्यतया तुल्यताया दुःपरिहरत्वात् । नचाधिकविषयप्रवेशनप्रयुक्तप्रदर्शितबाधनिश्चयप्रतिबन्धकत्वादिकल्पनागौरवं संसर्गतावादिनां दुर्वारमितिवाच्यम् दशैतेराजमातङ्गा इत्यादिप्रामाणिकप्रयोगस्य प्रकारतापक्षे दुरुपपादतया गौरवस्याकिञ्चित्करत्वादिति॥

साम्बशिवार्पणमस्तु

इति सर्वतन्त्रस्वतन्त्र मिथिलादेशालङ्कार धर्मदत्तापरनामक श्रीबच्चाझा शर्मशिष्य श्रीलक्ष्मीनाथझा शर्मणा मैथिलेन विरचितं स्वकृतस्य व्युत्पत्तिवादप्रकाशस्य परिशिष्टं समाप्तम् ॥



# सप्रकाशव्युत्पत्तिवादस्य शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| ति तस्य | ति अथवा शाब्दबोधपदस्य शाब्दबोधत्वमर्थो लक्षणया सप्तम्या व्यापकत्वं तस्य | २ | १ |
| त्रवा | त्र यद्वा | ४ | २६ |
| साच | सान | ५ | १७ |
| न्वया | न्वयो | ७ | १६ |
| मवल्ला | मला | ८ | १० |
| नार्था | नार्थ | ६ | २१ |
| हिवत्त्वत्व | हित्ववत्त्व | ६ | ३० |
| पदपर | पदोत्तरैकवचनपर | ११ | २१ |
| दप | दोत्तरैकवचनप | १२ | २६ |
| दस | दोत्तरैकवचनं तत्स | १२ | ७२ |
| घादिति त | घात् त | १३ | १ |
| त्वादे | त्वविवक्षणादे | १३ | २ |
| तार्थाति | ताति | १३ | २२ |
| त्वे त्व | त्व ए | १५ | ६ |
| कार | कारि | १५ | १३ |
| रतृणविशिवृत्वे | रविशिष्टतृणत्वे | १५ | १७ |
| यत्व | यतानिरूपकत्व | १६ | ६ |
| धाधेयत्वं | दाधेयतानिरूपकत्वं | १६ | १२ |
| पर | पद | १६ | १२ |
| ङ्कशरीरो | ङ्काशरीरे | १७ | १६ |
| सुत्वा | प्रथमात्वा | १६ | १४ |
| सुत्वा | प्रथमात्वा | १६ | १६ |
| वेन | वेन विभक्तिपदस्य सुप्परतया | १६ | १६ |
| सुत्वौत्वा | प्रथमात्वा | १६ | १८ |
| वत | व तस्य त | १६ | १८ |
| सुत्वे | प्रथमात्वे | १६ | २७ |
| औत्वा | द्वितीयात्वा | १६ | २८ |
| ङस्त्वे | षष्ठीत्वे | १६ | २२ |
| ङस्त्व | षष्ठीत्व | १६ | २३ |
| स्यत्वनु | स्यानु | २० | ७ |
| नीत | रत | २० | २० |
| गकस्य | गस्य | २१ | १२ |
| र्थावा | र्थो वा | २२ | ८ |
| काभा | कभेदाभा | २२ | १३ |
| न्धा | न्धो | २२ | ८ |
| पूर्वोक्त | पूर्वोक्तपक्षे विद्यमानं | २३ | ११ |
| भावे | भावपरिकल्पितनियमे | २३ | २४ |
| ष्वेव | षु | २४ | १४ |
| युक्त | युक्तस्य | २४ | १५ |
| चेन्न | चेन्न नीलपदस्य पटपरद्रव्यपदोपलक्षकत्वात्किञ्च | २४ | २० |
| वात् | वात् नीलत्वजात्येवच्छिन्नाधिकरणत्वे | २४ | २१ |
| तावेव | तौ वा | २४ | २२ |
|  | ( अत्र पृष्ठाङ्काशुद्धिः ) पाठस्तु समीचीन एव | ३३ | २५ |
| आध्र | आधे | ३३ | १ |
| स्तुतत्तद्ध- स्तु त | स्तु त | ३३ | ५ |
| द्धघ | द्धौ घ | ३३ | १ |
| त्वानि | त्वान्नि | ३३ | १२ |
| घटेनि | घट इति | ३३ | १६ |
| कारेणेत्य | कार इत्य | ३३ | २० |
| यम् अ | योऽ | ३३ | २४ |
| त्वाका | ताका | ३४ | १३ |
| इतिबोध्यम् | इति | ३४ | ३३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| वेव सं | वेन अपूर्वव्यक्तानाम-वेदान्वयबोधानुपपत्तेः संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनानुपस्थितस्यापि संसर्गतयाभानसम्भवेन सं | ३५ | २ |
| वन्धे | वन्धेन | ३५ | ३ |
| नीय | ने | ३६ | ११ |
| तद् | तज् | ३६ | ११ |
| दृशं | दृशसत्तावगाहि | ३६ | १६ |
| नाङ्गी | नानङ्गी | ३६ | २२ |
| रे या | रे वा | ३६ | २१ |
| न्धेति | न्धेनेति | ३६ | ३३ |
| च्चित् | क्षितम् | ३६ | ३४ |
| न प्रतियोग्यंशे | नाभावांशे | ३७ | ९ |
| रजत | रक्त | ३७ | १० |
| प्रती | प्रतीति | ३७ | १२ |
| णांणे | णांश | ३७ | १७ |
| न्नत्व | न्नप्रतियोगिताकत्व | ३७ | १९ |
| टादा | टत्वादा | ३७ | २९ |
| त्तिसा | त्यसा | ३७ | ३३ |
| वेन | वेण न | ३७ | ३३ |
| दैव | दयैव | ३७ | ३४ |
| विशेष्यं | विशिष्य | ३८ | १ |
| तुलय | तुल्य | ३८ | ५ |
| हानतु | हादतु | ३८ | १० |
| नीलव्यक्ती- | नीलघटव्यक्तीनां | ३८ | १४ |
| नांघटव्यक्तीनाञ्च, | | ३८ | १४ |
| त्वह | द्वह | ३८ | १५ |
| वाध | वोध्य | ३८ | १५ |
| सद्द | सस द्द | ३८ | १६ |
| स्थणे | स्थले | ३८ | २१ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| भवः त | भवः तथा च संसर्गताभेदेन प्रकारत्वविशेष्यत्वयोर्भेदात् नीलाघटा इत्यादावेकवाक्यत्वविरहप्रसङ्गः | ३७ | २८ |
| नभो | नञो | ३९ | ६ |
| वादुक्त | वात् प्रतियोगितानिरूपितसंसर्गताया विषयतानात्मिकाया अतिप्रसक्तधर्मानवच्छेद्यत्वादुक्त | ३९ | १० |
| यां अप | यामप | ३९ | १२ |
| सत्स | तत्स | ३९ | १५ |
| न्नानी | न्ननी | ३९ | १६ |
| योगि | योग्य | ४० | २ |
| मधिभि | मभि | ४० | ७ |
| केभे | केऽभे | ४० | ९ |
| नभे | नन्वभे | ४० | १० |
| नां अ | नाय | ४० | २० |
| त्र प्र | त्राभेदप्र | ४० | २२ |
| न्नक्त | उक्त | ४० | २५ |
| प्रितीलाघव | मिति लाघव | ४० | २६ |
| प्रीति यत्रु | पीति यत्र | ४० | २३ |
| क्लृप्ता | क्लृप्ता | ४० | २९ |
| ध्यभे | प्यभे | ४० | ३० |
| सत्वादेः-संसर्गपु | अतएव स्वत्वादेः संसर्गतापू | ४० | ३० |
| कर्गत्वगिति | कर्मत्वमिति | ४० | ३२ |
| वाचः | वाचः सुखहेतुं पश्यतीत्यादौ सुखहेतोश्च | ४१ | ५ |
| नच | ननु | ४१ | २० |
| रयो | रणयो | ४२ | २३ |
| तस्यापि | तस्याविषयत्वात् तस्यापि | ४२ | ३० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| दर्शितः | दर्शितः वस्तुतः प्रथमान्तपाठोऽप्युपलभ्यत एव। | ४८ | ६ |
| नचै | नन्वे | ४८ | २० |
| तोनान्योऽ | तंनान्यद | ४९ | ८ |
| बोध्यम् | बोध्यम् अयमपि पूर्वोक्तस्यैव गूढार्थतत्त्वालोकप्रदर्शितस्यैवाशयः। | ४९ | २७ |
| णभा | णाभा | ५० | ६ |
| तीतिभावः | तीति | ५० | १० |
| शाब्दो वो | शाब्दवो | ५१ | ३१ |
| तद्धर्माच | तदव | ५२ | ५३ |
| कता | कसम्बन्धता | ५३ | १ |
| स्तत्का | स्तस्यास्तत्का | ५३ | १ |
| व्यवात्व | व्यत्वाव | ५३ | २९ |
| तिभावः | ति | ५५ | ८ |
| तत्तध | तद्ध | ५५ | २४ |
| येनयेन | येन येन सम्बन्धेन | ५५ | ३४ |
| स्यरस | रस | ५६ | ६ |
| प्रत्याहे | प्रत्यासत्त्या हे | ५६ | ३४ |
| नघ | न द्रव्यत्वावच्छिन्नविशेष्यताकघ | ५७ | १६ |
| तिस्तु | तिः | ५७ | ३३ |
| स्तलि | ष्येन | ६० | १२ |
| विधे | विशे | ६४ | १३ |
| प्येत | ष्येत | ६४ | १९ |
| हि इच्छा | हि इन्द्रादिनिरूपितहविर्विशेषनिष्ठस्वत्वोत्पादकेच्छा | ६५ | ५ |
| र्यायंत | र्यायं तदुक्तं भामत्यां तद्यकार्यं स्वात्मनिनियोज्यंनियुञ्जानं नियोगइतिमानान्तरापूर्वंतयाऽपूर्वमिति चाख्यायते त | ६५ | ११ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| कार्यं कृ | कार्यंमत्कृ | ६५ | १३ |
| पुरूष | पुरुष | ६६ | १ |
| यर्त | वर्त | ६६ | २७ |
| पदार्थस्य | पदस्य | ६७ | १ |
| यत्साध- | यत्सम्बन्धि- | | |
| पाता | पीता | ६७ | १४ |
| रणः | रणैः | ६७ | २६ |
| स्थोना | स्थाना | ६८ | १३ |
| ध्यव | ध्यताव | ६८ | १५ |
| ननुराजा | राज | ६९ | १५ |
| स्वत्वा | राजस्वत्वा | ७८ | २४ |
| पुरुषवै | पुरुषे सुन्दरत्ववै | ७८ | २९ |
| षणता | ष्यता | ७८ | २९ |
| शेषणता | शेष्यता | ७९ | ३ |
| शेषणता | शेष्यता | ७९ | १९ |
| क्षत्वत्वा | क्षत्वा | ७९ | २८ |
| जया | तया | ८० | २ |
| इति | इतिभावः | ८० | २७ |
| प्रविव | प्रतिव | ८५ | २० |
| वधे | वशिष्टमवधे | ८५ | २१ |
| मितिशेषः | मिति पूर्वेण सम्बन्धः | ८७ | १९ |
| बोधोप | बोधस्योप | ९० | २० |
| कपदा | करादा | ९६ | १३ |
| नाव | नवाव | ९६ | ३३ |
| तरण | करण | ९७ | १८ |
| स्यक्ता | स्योक्ता | ९७ | २६ |
| त्र नव | त्रव | १०० | ३४ |
| लेऽस | लेऽपि स | १०१ | २६ |
| पेज्ञया | पेक्षया | १०३ | २८ |
| क्तिबोधप | क्तिमात्रप | १०६ | ४ |
| नाद्याप | नाप | १०६ | ४ |
| न्योऽत्राका | न्यआका | १०६ | १० |
| तत्कालेच | तज्ज्ञानेन च | १०८ | ३ |
| वक्तुम | स्थातुम | १०८ | ६ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| देनैव | देन | १०८ | १२ |
| बोधेन | वाधेन | १०८ | १२ |
| त्वाध | त्वाद्यव | १०८ | २५ |
| तानव | तावच्छेदकताव-च्छेदकसम्बन्धा-नव | १०९ | २ |
| तानवच्छे-दकताया-इत्या | तावच्छेदकतेत्या | १०९ | २१ |
| घटभेदप्रति-योगिता | कालिकसम्बन्धा | १०९ | २१ |
| देर्घटभे | देःकालिकेनघटवद्भे | १०९ | २१ |
| देनचउ | दाद्व | १११ | ९ |
| पात्थ | पोत्थ | ११४ | १५ |
| सत्यन्तम् | सत्यन्तम् अत्रफल-शालित्वं स्वाश्रय-त्वस्वनिष्ठप्रकृतक्रि-याकर्तृसमवेतेच्छी-यप्रकारतानिरूपित-विशेष्यत्वान्यतर-सम्बन्धेन तेन काशींगच्छन्प-थिमृतइत्यादौ नानुपपत्तिः | १२७ | १९ |
| नस्ये | नमि | १२८ | २६ |
| र्थता | र्थबोधता | १२९ | १३ |
| मूषिका | मूषका | १३८ | १७ |
| सत्त्वादतो | सत्त्वात् अभाव-मात्रे उत्पत्तिमद्-भावार्थकध्वंसा-दिपदस्य स्वार-सिकप्रयोगापत्ते-श्चेत्यतो | १३८ | १९ |
| प्रकारक | विषयक | १४५ | २ |
| पृच्छक | प्रच्छक | १४६ | ८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| व्रजप | व्रजादिप | १४६ | २४ |
| कर्मत्वं कृतिरुपं | कर्तृत्वं कृतिरूप माश्रयत्वरूपं गौणमपि | १४७ | २९ |
| तमि | ततममि | १४८ | ७ |
| घरत्वात् | परत्वात् | १४८ | १० |
| कर्मत्वं | कर्तृत्वं | १४८ | १४ |
| सुत्रस्येव | सूत्रस्येव | १४८ | २१ |
| शत्रूभि | शत्रुभि | १४८ | ३४ |
| भोजन | भोजननिरूपितं | १४९ | १ |
| गत्वम् | गित्वम | १४९ | २ |
| त्य घ | त्यतो घ | १४९ | २० |
| आधेये | आधेय | १४९ | २४ |
| गलाधेः | गलाधः | १४९ | २६ |
| शर्म | शकर्म | १५० | १६ |
| पुर | पूर | १५० | २२ |
| तीप्येव | तीत्येव | १५० | २७ |
| तिमैनी | तिमैत्री | १५० | २८ |
| चैनीया | चैत्रीया | १५० | २९ |
| केहुत्य | कइत्य | १५० | ३० |
| णिजथे | णिजर्थेन | १५१ | ६ |
| हाख्याता | दाख्यातार्था | १५१ | ७ |
| तद्या उक्तस्थ धात्वथस्थ | तद्योक्तस्य धात्व-र्थस्य | १५१ | १५ |
| धातुत्त | धातूत्त | १५१ | २० |
| ज्ञाभेव | क्षायामेव | १५१ | २१ |
| मिशेमिन | विशेषित | १५१ | २२ |
| शववि | शवृवि | १५२ | १ |
| यवा | यगा | १५२ | १४ |
| यामं | ग्रामं | १५२ | २० |
| यक्र | प्रक्र | १५२ | २२ |
| योपित | योगित | १५२ | २२ |
| योगन | योगजन | १५३ | ५ |
| योगे | योग | १५६ | २ |
| नमेन वि | गमेन लौकिकवि | १५७ | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| यिता | यता | १५८ | ८ |
| लौकि | ल्लौकि | १६० | १५ |
| निश्चयो | भ्रमो | १६१ | ५ |
| आश्रयत्वं द्वित्वंनिरू- पकत्वं चा- ख्यानार्थः | द्वित्वमपि लक्षण- या तदर्थः आश्रय- त्वमिव निरूपक- त्वमप्याख्यातार्थः इति पाठान्तरम् । | १६१ | १८ |
| याम् । य | निश्चयोघटादावि- ति भ्रमात्मकइति- शेषः ययाम् य । | १६१ | ११ |
| यप्रतियो- गिक | यनिरूपक | १६४ | १९ |
| दित्याह अ- तोवह्निमत्वे- नेत्यादि | दितिहृदयम् | १६५ | १८ |
| पदोप | पदोत्तरविभक्त्युप | १६७ | ७ |
| प्रतियोगि | अनुयोगि | १६७ | २२ |
| द्वितीय | प्रथमाशङ्कान्निरा- कृत्य द्वितीय | १६८ | २० |
| धात्वर्थेसा त्वादि | लोहितपदोत्तरमि | १६८ | २० |
| रङ्गपदो | रजतपदो | १६९ | २६ |
| रजतप | रङ्गप | १६९ | २६ |
| भ्यनौकार्थ | भ्यार्थ | १७० | २ |
| वृत्त्युत्पत्ति- रूपासा | वृत्त्यसा | १७० | १९ |
| तथाच | स्वमत्र नौकादिकं तथाच | १७० | २४ |
| ताया | ताया वा | १७१ | ५ |
| नच | ननु | १७२ | २५ |
| धात्वर्था | सन्नार्था | १७२ | २८ |
| कर्मत्वान्व- यस्यै | कर्मत्वस्यै | १७४ | ५ |
| कर्मभो | कर्मकभो | १७४ | १५ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| व्याक्तेरै | व्यक्तेरै | १७४ | २२ |
| क्षन | दयत | १७५ | ४ |
| यकसू | यत्रिधायकसू | १७६ | २ |
| क वो | कज्ञानवानिति वो | १७८ | २९ |
| क्यजन्ता | क्यङन्ता | १७९ | २६ |
| क्यजन्ता | क्यङन्ता | १७९ | ३० |
| प्रकृति | विकृति | १८० | ३२ |
| विकृतिवि- चारोबोध्यः | प्रकृतिं विवेचयि- ष्यति | १८० | ३२ |
| ओदनादेः कुण्डलादेर्वा | कुण्डलादेः | १८१ | १२ |
| कारणं | कारणादिकं | १८१ | १२ |
| र्योत्पत्तिप्रा क्क्षणे | कार्यसमये | १८१ | १३ |
| तण्डुला | सुवर्णा | १८१ | १३ |
| विद्यमाना- वा,कुण्डला | अविद्यमानावा, ओदना | १८१ | १३ |
| विद्यमानम- पि कनका | ऽविद्यमानमपि, तण्डुला | १८१ | १४ |
| दौ समवा- यिकरण | प्रकृति | १८१ | १५ |
| समवायि- कारणनाश | प्रकृतिनाश | १८२ | १४ |
| शिंकरीति | शिंक्रियत | १८६ | १६ |
| त्रानिरूपक- ताकधि | त्रनिरूपकताकाधि | १८९ | २९ |
| मुपरिष्टात् | मधस्तात् | १९१ | २७ |
| १२अनु | ११अतु | १९८ | २२ |
| पट | घट | २१४ | २२ |
| नभ्रूस | नभ्रस | २२७ | २१ |
| क्वाचता | क्वचित्ता | २३४ | १५ |
| रिति।पुरुषा | पुरुषा | २४९ | २१ |
| ताकानिष्ठ | ताकानिष्ठनिष्ठ | २५५ | २५ |
| येण्डमेध | येऽयमेव | २५५ | २७ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| त्यर्थः । | तदर्थे त्यर्थः | | |
| पंचम्यर्थे | | | |
| यवकूपादि- | | | |
| निष्ठत्वेनेति | | २५६ | ३१ |
| र्यविषयीभू- | तदर्थे | | |
| ते भक्षणा- | | | |
| दावित्यर्थः । | | | |
| तदर्थे | | २५७ | २३ |
| प्रपिपाद | प्रतिपाद | २६५ | ३ |
| पूर्वप्रयोगा- | पूर्वपूर्वप्रयोगा- | | |
| भावादिति- | भावान्न प्रयोग | | |
| चेत्तु | इतिसमाधानं तु | २५६ | ६ |
| विधेयबोधो | विधेयसम्बन्धो | २६५ | १२ |
| न्तविरो | न्तरविरो | २६६ | ४ |
| यम | धर्मे | २६६ | ७ |
| तदन्य | तत्तदन्य | २६७ | १ |
| रत्वान्व | राद्यन्व | २६७ | १५ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| शब्दः, वृ | शब्दः कर्णशब्दःवृ | २७० | २ |
| अतस्ताद्रू- | अत्रचस | | |
| दास | | २७१ | २ |
| धात्यविहित | धात्वविहितप्रत्य | | |
| प्रत्वय | | २७५ | २२ |
| एवग्रेऽपि | एवमग्रेऽपि | १७७ | २४ |
| अथदेवता | अथ देवतापदा- | | |
| | र्थता | २७७ | २६ |
| संसगिता | संसर्गता | २८२ | २५ |
| धात्वर्थएव | धात्वर्थनिष्ठविशे- | | |
| | ष्यतायामेव | २८२ | २५ |
| ऽपूर्वा इ | ऽपूर्व इ | ३०३ | २६ |
| दृश्य | दृश्य | ३०४ | २२ |
| परस्परज | परस्परं तत्तज्ज | ३१० | १७ |
| प्रतिती | प्रतीति | ३१० | १ |
| ज्ञानस्याभावाः | ज्ञानस्य | ३१६ | १० |
| स्याभावाः | स्यचाभावाः | ३१६ | १४ |

अवशिष्टं विद्वद्भिः स्वयमेव कृपया संशोधनीयम् ।



प्राप्तिस्थानम्—

जयकृष्णदास हरिदासगुप्तः-

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

॥ श्रीः ॥

# प्रौढमनोरमा

महामहोपाध्याय--श्रीभट्टोजीदीक्षित--विरचिता ।

महामहोपाध्याय-श्रीहरिदीक्षितविरचित--लघुशब्दरत्नव्याख्यासमेत।
महामहोपाध्यायश्रीभैरवमिश्रविरचित-**शब्दरत्नव्याख्यया**, लवपुरीय-
प्राच्यमहाविद्यालयप्रधानाध्यापकवेदान्त-व्याकरणाचार्य-साहित्य-
मीमांसातीर्थश्रीमाधवशास्त्रिभाण्डारीविरचित**प्रभानामक-
टिप्पण्या**, आयुर्वेद-व्याकरणाचार्य-साहित्यतीर्थ-धर्म-
शास्त्रशास्त्रिपदवीकश्रीयुतपण्डितजगन्नाथशास्त्रिकृतया-
ऽव्ययीभावप्रकरणस्थ-**शब्दरत्नप्रदीपक-
नामकटिप्पण्या**, च समलङ्कृता ।

---

विद्वद्वृन्द ।

आप लोगों को यह सूचित करते अत्यन्त हर्ष होता है कि उपरोक्त मनोरमा पर शब्दरत्न तथा भैरवी व्याख्याके साथ वेदान्त-व्याकरणाचार्य-साहित्य-मीमांसातीर्थ श्रीयुत पं०माधवशास्त्री भाण्डारी विरचित प्रभाटिप्पणी तथा अनेकशास्त्र के विद्वान् श्रीयुत पं० जगन्नाथ शास्त्री जी कृत अव्ययीभावप्रकरण पर शब्दरत्न प्रदीपक नामक टिप्पणी से अलङ्कृत होने से यह संस्करण इतना सुन्दर तथा परीक्षोपयोगी हुआ कि सीर्फ अल्प समय में ही प्रथम संस्करण हाथो हाथ विक्री हो जाने से इस समय बहुत ही अल्प पुस्तकें शेष रह गई हैं और जीसका मूल्य केवल विद्यार्थियों के लाभ के लिए पूर्व मूल्य से घटा कर सीर्फ ३) रु० मात्र नियत किया गया है। इस लिए विद्यार्थियों को ऐसा अपूर्व शुभ अवसर हाथ से जाने नहीं देना चाहिए। अन्यथा पुस्तक समाप्त हो जाने से केवल पश्चात्ताप मात्र ही रहेगा।

---

प्रभा—विभा—ज्योत्स्ना—संवलित—

# सशब्दरत्नमनोरमायाः

## विज्ञापनम् ।

अयि भोः भोः विद्याविलासचतुराः अभिनवनिबन्धबन्धरसिकाः विद्वद्वराः, सरलहृदयाः पाणिनीयाश्छात्रवराश्च; परमः प्रमोदसमयो भवतामेष इति भवन्तो विदांकुर्वन्तु ।

यत्किल अस्माभिः सर्वत्र प्रचलितपरीक्षायां पाठ्यत्वेन निर्धारितायाः सशब्द-रत्नप्रौढमनोरमायाः सर्वसंस्करणशेखरायमाणं सर्वाङ्गसुन्दरमव्ययीभावान्तं गुटका-स्वरूपं नूतनं संस्करणमारब्धम् । तस्य प्रथमो भागः पञ्चसन्ध्यन्त इदानीं मुद्रितो वर्तते । अन्यद्भागद्वयं ( अव्ययं भावान्तम् ) शीघ्रमेव वयं भवत्करकमलेषु समर्प-यिष्यामः ।

अस्मिन् संस्करणे आजमगढस्थसनातनधर्मसंस्कृतपाठशालाप्रधानाध्यापकव्या-करणाचार्याद्यनेकपदवीविभूषितपण्डितजगन्नाथशास्त्रिकृता ज्योत्स्ना नाम्नी टीका,

पूर्वसंस्करणद्वये निबद्धा विद्वद्भिरनुमोदिता विद्यार्थिभिः मुहुर्मुहुर्मुक्तकण्ठेन प्रशंसिता लवपुरीयराजकीयप्राच्यपाठशालाप्रधानाध्यापकलब्धव्याकरणवेदान्ताचार्य-साहित्यमीमांसातीर्थाद्युपाधिमण्डितपण्डितभाण्डारीत्युपाह्वमाधवशास्त्रिकृता प्रभा नाम्नी टिप्पणी च,

परिभाषेन्दुमनोरमाद्यनेकग्रन्थसम्पादकैः टीकाटिप्पणानुभावकैः साहित्यव्याक-रणतन्त्रे लब्धानेकपदवीकैः जोशीत्युपाह्वसदाशिवशास्त्रिभिः कृता विभा नाम्नी टिप्पणी, परीक्षोपयोगिनी प्रश्नोत्तरीस्वरूपा रत्नदीपिका च, प्रसिद्धतमपण्डित-राजजगन्नाथकृत-कुचमर्दिनी चाभिनिवेशिता ।

सर्वसंस्करणशिरोभूतेनानेनैव संस्करणेन विद्यावतां परीक्षादित्सूनां छात्राणां च समीचिनोपयोग इति किम्बहुना ।

अस्य पुस्तकस्य सर्वोपकारतां छात्रद्रव्यकृशतां चावलोक्य प्रथमभागस्य मूल्यं ।।।) द्वादशाणकं निर्धारितम् । सम्पूर्णस्य च मूल्यमपि व्ययमात्रं अत्यल्पं भविष्यति ।

अस्य ग्रन्थस्य क्रयसमये अस्मत्प्रकाशितम्पुस्तकमवलोक्य पुस्तकान्तरं क्रेतव्यं तर्हि क्रेतव्यमिति सर्वथा भवतु प्रार्थना ।

---

प्राप्तिस्थानम्-चौखम्भा संस्कृत पुस्तकालय बनारस सिटी ।

